इति। श्लोको ह्ययं 'बृहदारण्यकसुरेश्वरवार्त्तिकप्रथमाध्यायचतुर्थब्राह्मणगत इति 'सुरेश्वराचार्यैरि'ति वक्तव्ये विश्वरूपाचार्यैरिति माधववचनं विश्वरूपाचार्यस्य सुरेश्वराचार्यानतिरेकं सष्टयति। अपिच सुरेश्वराचार्यनाम्ना प्रथितायां नैष्कर्म्यसिद्धौ यादृशी विवरणशैली, तादृशी बालक्रीडायां दृश्यत इत्यतोऽपि तत्कर्त्रैक्यं शक्यं निश्चेतुम्।

तदित्थं विश्वरूपाचार्यस्य सुरेश्वराचार्याभेदसिद्धौ जीवितसमयोऽप्यवगतप्रायो भवति। *सुरेश्वराचार्यो हि परमहंसः पूर्वाश्रमे* मण्डनमिश्रनाम्ना कर्ममार्गे रममाणः श्रीशङ्करभगवत्पादैर्वादे विजितस्तच्छिष्यीभूय पारिव्राज्यं प्रतिपेद इतीतिहासडिण्डिमोद्घोषाद् भगवत्पादसमकालिक एवासौ यतः। भगवत्पादकालस्तु क्रैस्ताब्दीयाष्टमी *शताब्दीति केचित् ततोऽपि दूरोत्कृष्ट इत्यपरे।*

अयं विशेष एको बालक्रीडायामभिलक्ष्यते तज्जरत्तमत्वप्रत्यायकः तदीयजरत्तमग्रन्थकभक्तत्वप्रत्यायकश्च, यत् क्रैस्तोत्तरकालभवः कश्चिद् ग्रन्थो ग्रन्थकारो वा नात्र स्मृतः, किन्तु क्रैस्तपूर्वकालभवा आम्नायाः स्मृतयः स्मर्तारस्तत्कल्पाश्चेत्येत एव नियमेन स्मृताः। तत्राप्यर्थशास्त्रस्मरणप्रसङ्गे कौटिलीयार्थशास्त्रं नोदाहृतम्, अपितु कौटिल्यस्याप्युपजीव्यं बार्हस्पत्यं वैशालाक्षं चार्थशास्त्रमिहोदाहृतम्—

"यदाह बृहस्पतिः—'स्वधर्मविदनुरक्तः शुचिरनुद्धत उद्युक्तः ............... सन्दिग्धविवेकृदुपरिकः स्यात्।'" इति।

(आचाराध्याये २०७ तमश्लोकव्याख्यायाम्)

च विभावनाकारो लोकस्य धर्ममार्गस्थितत्वं सुखित्वं च विश्वरूपप्रसादजनितं वदेत् —

"यत्प्रसादादयं लोको धर्ममार्गस्थितः सुखी ।
भवभूतिसुरेशाख्यं विश्वरूपं प्रणम्य तम् ॥"

इति । बालक्रीडाविषय एव च लोकादरस्तदनुसारिण्या मिताक्षरया तदर्थेषु सुखवेद्यत्वं नीतेषु मिताक्षरायां नूनमवतीर्णः ।

अथैष विश्वरूपाचार्यः क इति जिज्ञासायां 'भवभूतिसुरेशाख्यं विश्वरूपं प्रणम्य तम्' इत्युदाहृतव्याख्याकारवचनात् सुरेश्वराचार्यतः स न भिद्यत इति वक्तुं पार्यते, सुरेश्वर एव हि सुरेशशब्देनात्राभिहितश्छन्दोनुरोधात् । अत एव वचनमालाकारः,

"अवनम्य मनुसुरेश्वरयोगीश्वरतीव्रकिरणगुरुचरणान् ।
शास्त्राणां व्याकर्तॄन् कर्तॄनपि देवता निखिलाः ॥"

इति धर्मशास्त्रव्याकर्तारं विश्वरूपं सुरेश्वरशब्देनैव परामृशति । तत्र भवभूतिशब्दस्तु शिवविभूतिरित्यर्थकः शिवभक्तत्वप्रकाशनार्थः शिवदासादिपदवत् किमप्युपनामधेयं स्यात् । तथा शाङ्करविजयतृतीयचतुर्थसर्गयोः सुरेश्वराचार्यो विश्वरूपशब्देन परामृष्ट — 'श्रीविश्वरूपगुरुणा' इति, 'साहङ्कृति विश्वरूपे' इति च । तथा विवरणप्रमेयसङ्ग्रहे माधवाचार्य आह —

"अध्यासस्त्वाहमिति ममेति चाकारद्वय स्नेहतारतम्यादुपपद्यते । तत्तारतम्यं च 'तदेतत् प्रेयः पुत्राद्' इत्यस्याः श्रुतेर्व्याख्यानावसरे विश्वरूपाचार्यैर्दर्शितं —

"तथाच बृहस्पतिः — 'अहाशहस्तुति ...... ...... विश्रामो-त्पन्नासन्नपरिवृतः इति" (आचाराध्याये ३२३ तमश्लोकव्याख्यायाम्)

इति,

"एवञ्च विशालाक्षः—

'वन्यान् वनगतैर्नित्यं मण्डलस्थांस्तथाविधैः ।
चारैरालोच्य सत्कुर्याञ्जिगीषुर्दूरदीर्घदृक् ॥'"

(आचाराध्याये ३२८ तमश्लोकव्याख्यायाम्)

इति च । युक्तं चैतत् — ग्रन्थे हि ग्रन्थान्तरसुप्रहत्वधियानुक्तमाकाङ्क्ष्यमाणमर्थं ग्रन्थकारप्रज्ञाततमाद् वयःप्रकृष्टात् समानवयसो वा ग्रन्थान्तरादुद्धृत्य व्याख्याता दर्शयितुमर्हति न तु तदर्वाचीनादिति सामुदाचारिको न्यायः । विश्वरूपाचार्यश्च बार्हस्पत्यं वैशालाक्षं चार्थशास्त्रं भगवता याज्ञवल्क्येन प्रज्ञातमार्षं ग्रन्थममन्यत, अतस्तदीयेनार्थेनार्थाकाङ्क्षां पूरितवान्, कौटिलीयं तु तदर्वाक्कालभवमप्रज्ञातमिति बुद्ध्या नोदाहृतवान् । न च कौटिल्यस्यार्वाचीनत्वे कश्चित् सन्देहोऽस्ति । तथाहि — कौटिल्यस्तावद् अर्थशास्त्रस्य चतुःषष्टितमाध्याये प्रतिलोमजपुत्रप्रस्तावे वैश्यात् क्षत्रियायां जातो मागधः, क्षत्रियाद् ब्राह्मण्यां जातः सूत इत्युक्त्वा पृथुयज्ञभूसुतस्य पौराणिकस्य सूताख्यस्य मागधाख्यस्य च पृथुस्तुतिविधायिनः प्रतिलोमजत्वशङ्काप्राप्तिं मनसि कुर्वन्नां परिहरति — 'पौराणिकस्त्वन्यः सूतो मागधश्च ब्रह्मक्षत्राद्विशेषतः' इति । अस्यार्थः — पुराणप्रवक्ता रोमहर्षणापरनामा यः सूतः, स अन्यः उक्तात् प्रतिलोमजसूताद् भिन्नः, यस्तत्सहपठितः पुराणेषु मागधो नाम स च प्रतिलोमजमागधाद् भिन्नः, ब्रह्मक्षत्राद् विशेषतः विशेषेण युक्तः सूतो ब्राह्मणाद् विशिष्टः मागधः क्षत्रियाद् विशिष्ट इति । तथ्यं चैतत् — यतः,

"हस्ते तु दक्षिणे तस्य दृष्ट्वा चक्रं पितामहः ।
विष्णोरंशं पृथुं मत्वा परितोषं परं ययौ ॥
तस्यैव जन्मनामस्य यज्ञे पैतामहे शुभे ।
सुतः सूत्यां समुत्पन्नः सौत्येऽहनि महामतिः ॥
तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ।"

इति विष्णुपुराणप्रथमांशत्रयोदशाध्याये,

"ब्रह्मणः पौष्करे यज्ञे सुत्याहे वितते सति ।
पृषदाज्यात् समुत्पन्नः सूतः पौराणिको द्विजः ॥
वक्ता वेदादिशास्त्राणां त्रिकालामलधर्मवित् ।"

इत्यग्निपुराणप्रथमाध्याये,

"त्वया सूत! महाबुद्धे! भगवान् ब्रह्मवित्तमः ।
इतिहासपुराणार्थं व्यासः सम्यगुपासितः ॥

त्वं हि स्वायम्भुवे यज्ञे सुत्याहे वितते सति ।
सम्भूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः ॥"

इति कौर्मपुराणप्रथमाध्याये च व्यासशिष्यपौराणिकसूतस्यायोनित एवोत्पत्तिः प्रतिलोमसूतविलक्षणा कथ्यते; तथा तस्य द्विजत्वं विष्णवंशसम्भूतत्वञ्च च वर्ण्यते । तेन कौटिल्यचाणक्यशब्दित पुराणानि, तत्प्रवक्तृसूतोत्पत्तिकथां, पुराणतत्प्रवक्त्रोः प्रामाण्यप्रसिद्धिं च जानातीत्यवसातुं शक्यम् । तथाभूतश्चासौ सूतादतिदूरविप्रकृष्टार्वाक्कालजन्मैव भवितुं युक्तः, अन्यथा सूतप्रोक्तेषु ग्रन्थेषु पुरातनत्वार्षत्वनिश्चयनिबन्धनः पुराणत्वसम्प्रत्यय एव नाभविष्यत् । एवञ्च यथा सूतश्चाणक्यादतिप्राचीनः, तथा सूतसतीर्थ्यस्यशुक्लयजुर्वेदाचार्यवैशम्पायनशिष्यतया सूतसमकालिको भवितुमर्हन् प्रकृतस्मृतिप्रवक्ता याज्ञवल्क्ययोगीश्वरो (याज्ञवल्क्यशिष्य एव वा) चाणक्यादतिपुरातन इति किमु वक्तव्यम् । अत एव कौटिल्यः कतिपयसाहसदण्डविधानपराणां केषाञ्चिद् याज्ञवल्क्यस्मृतिद्वितीयाध्यायगतानां वचनानां छायामर्थतः शब्दतो व्याख्यान्ततोऽधिकार्थपूरणतश्च स्ववाक्यैरनुविदधत् आत्मनो याज्ञवल्क्यस्मृतावस्यां भक्तिबहुमानपूर्वं परिचयमाविष्करोति । तेषु कानिचिदधस्तादुदाहरामः । तत्रैष एकः स्मृतिश्लोकः—

"करपाददन्तभङ्गे छेदने कर्णनासयोः ।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥"

(याज्ञ० अ० २. श्लो० २२४)

इति । इदं चैतदनुगामि कौटिलीयवाक्यम्—

"पुरुषमवन्धनीयं वध्नतो बन्धयतो बद्धं वा मोक्षयतो बालम-प्राप्तव्यवहारं वध्नतो बन्धयतो वा सहस्रदण्डः ।"

(कौटि० धर्म० अध्या० २०)

सर्वेष्वपु कौटिलीयवाक्येषु स्थूलाक्षरपदार्थाः परमधिकाः, अन्ये तु याज्ञवल्क्यस्मृत्युक्ता एवेति स्पष्टम् । तत्र हि 'स्वच्छन्दं विधवागामी' इति स्मृतिवाक्ये स्वच्छन्दमिति क्रियाविशेषणम् । स्वेच्छया, न तु विधवेच्छयापीत्यर्थः । कौटिलीये छन्दवासिनीमिति छन्देन वसन्तीं तूष्णीं-स्थितामकामयमानामिति यावत् ।

"अयुक्त शपथं कुर्वन्" इत्येतदेव व्याचष्टे कौटिल्यः— "शपथ-वाक्यानुयोगमनिसृष्टं कुर्वत" इति; न पुनरन्यदेतदिति शङ्कनीयम् । तथा— आधिकरणिकाः साक्ष्याद्यनुयोगं व्यवहारनिर्णयार्थं शपथवाचनपूर्वं यमनुतिष्ठन्ति, सोऽयं शपथवाक्यानुयोगः ।स आधिकरणिकानां निसृष्टो, 'भवत्स्वयमायत्त' इति व्यवहारनिर्णयस्य तेभ्यो राज्ञार्पितत्वात् । निसृष्टश्च तेषां युक्तो भवति स्वाधिकारविषय इति कृत्वा, अनुष्ठानोचित इति कृत्वा वा । अन्येषां तु सोऽनिसृष्टोऽयुक्तः, अधिकाराविषयत्वादनुष्ठानानर्हत्वाद्वा । एवञ्च निसृष्टः, युक्तः, स्वाधिकारविषयः, अनुष्ठानार्ह इत्येकार्थ-गोचरा भवन्ति । अनिसृष्टः, अयुक्तः, स्वाधिकाराविषयः, अनुष्ठानानर्ह इति च वैपरीत्येन तथा । स एषोऽयुक्तः शपथवाक्यानुयोगः स्मृतौ शपथशब्देन विवक्षित इति कौटिल्याभिप्रायः । मिताक्षरायां तु व्याख्या-न्तरं सम्भवमात्रेण वर्णितं द्रष्टव्यम् ।

तथा 'अयोग्यो योग्यकर्मकृत्', 'युक्तकर्मणि चायुक्तस्स' इत्यपि वाक्ये एकार्थे एव । योगो हि नियोगोऽधिकारः, तद्वति युक्तशब्दो वर्तते, तदर्हे च योग्यशब्द इति युक्तयोग्यशब्दाभ्यामाश्रयत्वार्हत्वलक्षणरूपभेदेऽपि वस्तुनो योगाश्रयस्यैव प्रतिपादनात् । अधिकं कौटिलीयार्थशास्त्र-स्याचिरात् प्रकाशयिष्यमाणस्योपोद्घाते वर्णयिष्यामः ।

स एष प्रथमसम्पुटः स्मृत्यनुसारिणां विशिष्य व्यवहारपथिकानां परममुपकार नितनिष्यति ॥

अनन्तशयनम्. त. गणपतिशास्त्री.

| विषया. | पृष्ठे |
|---|---|

---

| विषयाः | पृष्ठे |
|---|---|
| स्नपनविधिः | १७६ |
| स्नपनमन्त्राः | ,, |
| स्नपनानन्तरं होमः | ,, |
| होममन्त्राः | १७७ |
| बलिविधानम् | ,, |
| बलिद्रव्याणि | ,, |
| अर्घ्यप्रदानम् | १७८ |
| अम्बिकोपस्थानम् | ,, |
| उपस्थानमन्त्रः | ,, |
| ब्राह्मणभोजनगुरुदक्षिणादि | ,, |
| ग्रहपूजाविधिः | ,, |
| आदित्यादिपूजाविधिः | ,, |
| १२. ग्रहशान्तिप्रकरणे— | |
| ग्रहशान्त्यधिकारिणः | १७९ |
| नवग्रहनामानि | ,, |
| नवग्रहमूर्तिद्रव्याणि | ,, |
| अनुकल्पे द्रव्याणि | ,, |
| ग्रहाणां वस्त्रादिदानम् | ,, |
| ग्रहाणां चरवः | ,, |
| नवग्रहमन्त्राः | १८० |
| नवग्रहसमिधः | ,, |
| समित्संख्यानियमः | ,, |
| नवग्रहेभ्यो निवेद्यान्नानि | ,, |
| ब्राह्मणभोजनविधिः | ,, |
| ग्रहोद्देशेन ब्राह्मणेभ्यो देयद्रव्याणि | १८१ |
| ग्रहाणां पूज्यत्वे हेतुः | ,, |

| विषयाः | पृष्ठे |
|---|---|
| १. राजधर्मप्रकरणे — | |
| राज्ञो गुणाः | १८१ |
| मन्त्रिणो महामन्त्री च | १८३ |
| पुरोहितलक्षणम् | १८४ |
| राज्ञो वैशेषिको धर्मः | १८५ |
| विप्रेभ्योऽभीष्टदानम् | ” |
| तत्प्रशंसा | ” |
| धनार्जनप्रकारः, धनविनियोगप्रकारश्च | १८६ |
| भूदाने लेख्यादिकरणम् | ” |
| लेख्यकरणप्रकारः | ” |
| राजाश्रयदेशलक्षणं, दुर्गविधानं च | १८७ |
| अधिकारिनियोजनम् | ” |
| रणार्जितद्रव्यदानप्रशंसा | ” |
| युद्धप्रवृत्तिप्ररोचना | ” |
| शरणागतादीनां हननिनिषेधः | १८ |
| आन्हिकं राजकर्म | ” |
| कोशोपचयकरणं, चारदर्शनं, दूतप्रेषणं च | ” |
| स्वैरविहारः, सेनादर्शनं च | १८ |
| सन्ध्योपासनं, गूढचरेभ्यो वृत्तपरिज्ञानं, भोजनप्रकारः, स्वाध्यायपठनं च | ” |
| राज्ञो निद्रादिप्रकारः | १९ |
| चारप्रेषणप्रकारः | ” |
| ज्योतिर्विदादिनिरीक्षणम् | ” |
| राज्यप्राप्तिस्थितिकरः सारनयसंक्षेपः | १९१ |
| न्यायेन राज्यपालनफलम् | ” |
| चाटतस्करादिभ्यः प्रजासंरक्षणम् | ” |
| प्रजानामपालने प्रत्यवायः | ” |

*विषयाः* पृष्ठे

विषया:                                                    पृष्ठे

१९. साहसप्रकरणे—

विषयाः

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९ | २० | भ्युग | भ्युपग |
| २० | ७ | यँ नि | यँनि |
| ८८ | १० | ८८ ॥ ८८ ॥ | ८८ ॥ इति विवाहप्रकरणम् । अथ वर्णजातिविवेकप्रकरणम् । |
| १४५ | १ | नव | दश |
| १४७ | १ | नव | दश |
| १४९ | | नव | दश |
| १५१ | १ | नव | दश |
| १९० | २१ | सा | स |
| ” | २२ | त्वर्वि | त्वर्वि |
| १९९ | ०५ | वा | व |
| २०९ | २७ | वला | लवा |
| २७२ | ३० | ज | जि |
| २८७ | ४ | दा | शय |

॥ श्रीः ॥

# श्रीयाज्ञवल्क्यस्मृतिः

श्रीविश्वरूपाचार्यप्रणीतया
बालक्रीडाख्यया व्याख्ययोपेता ।

---

आचाराध्यायः ।

यो बिभर्ति नमस्तस्मै चन्द्रस्य * कलयः कलाम् ।
१ गौरीगण्डस्थलज्योत्स्नानिष्यन्दगलितामिव ॥ १ ॥

+ प्रसक्तचिन्त्यद्युतिमण्डलात्मसामर्ग्यजुर्भिस्तपनात् तपोभिः ।
जयत्यसौ येन विधातृधाम्नो यजूंषि शुक्लानि समाहृतानि ॥ २

सुश्लिष्टवेदमूलः २ पावनशाखो महाध्वरस्कन्धः ।
हारित्रिवर्गकुसुमो मोक्षफलो जयति ३ विध्यर्थः ॥ ३ ।

मायाभिरिन्द्र पुरुरूपमेक जागर्ति यत् सुप्तमपीलवैति ।
दूरङ्गमं ४ द्योतनवद् द्युतीनां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४

प्रणम्यार्कं महानागं तिलकस्वामिनं तथा ।
विनायकं च सद्भोभिः स्मृतिरुद्द्योत्यते मया ॥ ५ ॥

योगीश्वरमित्यादि याज्ञवल्कीयमिदं धर्मशास्त्रं व्याचिख्यासया प्रस्तूयते, अभ्युदयहेतुत्वात् तद्धेतौ च वस्तुनि महाप्रयोजनत्वाद् व्याख्यानादिप्रयासस्य। तथा चाम्नायः—"प्रिये स्वाध्यायप्रवचने भवतः। युक्तमना भवति। अपराधीनोऽहरहरर्थान् साधयते। सुखं स्वपिति। परमचिकित्सकश्चात्मनो भवति। इन्द्रियसंयमश्च, एकाग्रता, प्रज्ञावृद्धिः, यशो, लोकपक्तिः" इत्यादि। प्रवचनग्रहणं चात्र ग्रन्थकरणादावप्युपलक्षणार्थं द्रष्टव्यम्। कथं पुनरभ्युदयः शास्त्रजन्य इत्यादित एव प्रपञ्चनीयं, शास्त्रप्रयोजनत्वात्, सर्वत्रैव हि शास्त्रारम्भे प्रयोजनं वाच्यमिति स्थितेः। तथा चाह—

"सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।
यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते॥"

इति। यद्यपि विषयप्रयोजनसंबन्धाभिधानमपेशलमिव मन्यन्ते, अल्पप्रयोजनत्वाद् दुरुपपादत्वाच्च। तथापि किञ्चित् सौहृदाद् दिङ्मात्रं प्रदर्श्यते। तत्र च—

विषयः श्लोकनिर्दिष्टो धर्माख्यश्च प्रयोजनम्[1]।
तदादिकश्चतुर्वर्गः संबन्धो नियमात्मकः॥

विषयस्तावच्छ्लोकनिर्देशाद् 'ब्रूहि धर्मानि'ति, समाख्यानाच्च धर्मः। प्रयोजनं तु धर्मार्थकामापवर्गाः। तथार्थलक्षणत्वादधर्मोऽपि विषयः। तदनुसारिणश्चाधर्मानर्थदुःखबन्धाः प्रयोजनम्। सोऽयं हेयोपादेयलक्षणत्वेनाभ्युदयात्मकोऽष्टवर्गोऽस्मादेव शास्त्रादवगम्यत इति नियमः संबन्धः। यद्यपि चार्थकामौ प्रत्यक्षावसेयौ। तथापि न शास्त्रानपेक्षाणामाञ्जस्येन तदवाप्तिः, आञ्जस्येन च प्रयोजनत्वम्। तस्मादनवद्यम्। कथं पुनरेकस्यैव धर्मस्य विषयप्रयोजनत्वे भवतः। नैष दोषः। अवगम्यमानस्य विषयत्वादवगतस्य च प्रयोजनत्वात्। न हि शास्त्रविषयतामवगम्यमानतयाप्रतिपद्यमानः प्रयोजनीभवति। नन्वेवं सत्यर्थकामापवर्गाः शास्त्रस्याविषयत्वात् प्रयोजनं न स्युः। विषयत्वमपि भविष्यतीति चेत्, न,

१. 'ख्यता', २. 'ति र्ध, ३. 'नम्। क', ४. 'न' ग. पाठः.

अनिर्देशात्। धर्मपदस्योपलक्षणार्थत्वान्निर्दिष्टा एवेति चेन्न। तस्य श्रौतत्वे- नैवोपपत्तेः। अर्थादीनां वा प्रयोजनत्वं हातव्यम्, अविषयत्वेऽपि वा तद- नुमन्तव्यमिति । अत्रोच्यते— द्विविधं हि क्रियाणां प्रयोजनं कारकाधार- मकारकाधारं च । तत्र यत् कारकाधारं, न तद् विषयतामप्रतिपद्य प्रयो- जनीभवति । न च तत्र वैरूप्यादविषयतेति शक्यं वक्तुम् ।

यथा विक्लियमानत्वे विक्लिन्नत्वे च तण्डुलाः ।
धर्म्यभेदान्न गच्छन्ति नानारूप्येऽपि भिन्नताम् ॥

यद्यप्योदनरूपता विक्लियमानेषु तण्डुलेषु नास्ति । तथापि तण्डुलत्वान- पायाद् विषयत्वोपपत्तेरदोषः । अकारकाधारं पुनर्विषयतामप्रतिपद्यैव प्रयो- जनीभवति। यथा स्वर्गो यागस्य, यथा च वेतनलाभादयः पच्यादीनाम्। ओदनवच्च धर्मस्य विषयप्रयोजनत्वे । वेतनलाभवच्च केवलप्रयोजनत्वम- र्थादीनाम् । अतोऽविरोधः । अथवा, अस्त्यर्थादीनामपि शास्त्रविषयत्वम् । एवं हि वक्ष्यति —

"धर्ममर्थं च कामं च यथाशक्ति न हापयेद्"

इति । "तस्मात् स्त्रियः सेव्याः",

"ईश्वरं चाधिगच्छेत योगक्षेमार्थसिद्धये"

इति । तथा *"पश्येदात्मानमक्षय्यमि"त्यादि । यत्त्वनिर्दिष्टत्वादिति, तद् धर्मपदस्योपलक्षणार्थत्वेन प्रत्युक्तम्। कथं पुनः श्रौतत्वे संभवत्यु- पलक्षणत्वम् । न ह्युपसंहारानुसार्युपक्रमो भवति । उच्यते । नैव वय- मुपसंहारानुसारिणमुपक्रमं ब्रूमः । किं तर्हि । उपक्रमादेवैतदवगम्यते । योगीश्वरमिति विशेषणात् । चतुर्वर्गज्ञानायैव हि तद्विशेषणं यतः । मुख्यत्वात् तु धर्मस्य धर्मानित्युक्तम् । तस्मात् सिद्धमर्थादीनामपि विषयप्रयोजनत्वम् । एतेनेतरश्चतुर्वर्गो व्याख्यातः । कथं पुनरस्मादेव

---

१. 'त्र' ख पाठ. २. 'यं प' प पाठः. ३. 'णत्वेन' ख. पाठ'.

---

* 'पश्येदि त्यादि वचनमस्मिन्ग्रन्थे न पठ्यते । किन्तु तदर्थक 'चिन्तयेदात्मनो हितम्' इत्येवरूपमस्ति । पाठान्तरं वा तादृशं किमपि भवेत् ।

शास्त्रादयमष्टवर्गोऽवगम्यत इति नियमस्योपपत्तिः । यदा हि वेदादेव सर्वमिदमवगम्यते । अथास्मादप्यवगम्यत इत्युच्येत, तथापि नियमोऽनुपपन्नः । अर्थकामयोः पुनः प्रमाणान्तरगम्यतैव । यत्त्वाक्षस्यं शास्त्रादिति, तदप्ययुक्तम् । न हि परदाराभिगमजनितः कामो मिथ्येति शक्यं वक्तुम् । दुःखहेतुतया वानन्दरूपं कैवल्यमालोचयतो बन्धात्मकत्वाद्धर्मोऽप्यपुरुषार्थः स्यात् । नैतत् सारम् । नास्माभिरनुभवनमपह्नूयते । दुःखनिमित्तत्वात् त्वपुरुषार्थत्वमुक्तम् । न हि दुःखानुबन्धिनमर्थं कृतधियः प्रार्थयन्ते । न चाबुद्धिपूर्वकृद्व्यवहारो विचार्यः । तेनोच्यते — "शास्त्रादानन्दावगतेः शास्त्रीयावर्थकामौ" इति । शास्त्रानुसारिणश्च धर्मार्थकामाः प्रार्थ्यमानत्वाद् दुःखाननुबन्धित्वाच्चाञ्जस्येन पुरुषार्थाः । यथा च नापवर्गप्रतिबन्धकास्तथापवर्गनिरूपणे वक्ष्यामः । न चैवं सति प्रमाणान्तरावगतिर्विरोधिनी । यत्तु वेदादवगतेर्नियमानुपपत्तिरिति, तद् वेदमूलतयैवास्य शास्त्रस्य नियम्यमानत्वादचोद्यम् । प्रमाणान्तरापेक्षया हि व्यावृत्तिः, न वेदापेक्षया, तदधीनत्वात् स्मृतिशास्त्रस्य । तथा च स्वायंभुवं—

"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः"

इति । धर्मशब्दश्च भगवतोऽपि चतुर्वर्गोपलक्षणार्थः । सोऽयं वेद एव प्रत्यक्षपरोक्षतया श्रुतिस्मृतिशब्दवाच्यः । अतः सुष्ठूच्यतेऽस्मादेव शास्त्रादयमष्टवर्गावगतेः समस्तोऽभ्युदयः प्राप्यत इत्यलं प्रसङ्गेन ॥

कस्मात् पुनर्वेदसिद्ध एवाथ भगवतः शास्त्रारम्भप्रयत्नः । यस्मात् —

**योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् ।**
**वर्णाश्रमेतरेषां नो ब्रूहि धर्मानशेषतः ॥ १ ॥**

वेदार्थतत्त्वविदोऽपि मुनयो यस्मात् संपूज्योपेत्यार्थितयाब्रुवन्, ततस्तदनुरोधाद् भगवतोऽयं प्रयत्न इति मन्तव्यम् । युक्तं चैतत् । तादृशानामभ्याप्यत्वात् । तथा चाह मनुः —

---

१. 'स्वयम्भुवाभिहितम्' क. पाठः २. 'ग्राम', ३. 'यथाह' ख. पाठः

"आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
* शक्तोऽर्थदोऽर्थी स्वः साधुरध्याप्या दश धर्मतः ॥"

इति । ते तु पुनः कस्मादेव प्रयत्नेनाब्रुवन् । योगीश्वरं मन्यमाना याज्ञवल्क्यतयापि च महाभिजनत्वादध्यापनार्हम् । तथा चापस्तम्बः— §"तस्माद् विद्याभिजनसमुदेतं संस्कर्तारमीप्सेद्" इति । युक्तं च गुणातिशयवति याज्ञवल्क्ये मुनीनां प्रश्नकरणं, ज्ञातसतत्त्वानामपि कदाचित् संशयोत्पत्तेः । तथा च व्यासः—

"ज्ञातवेदार्थतत्त्वेन धर्मानप्यनुतिष्ठता ।
असंशयाय कर्तव्यः कियांश्चिद् गुरुसन्निधिः ॥"

इति । अथवा मन्दख्यातियुक्ता ज्ञानिनोऽप्यतिविख्यातं कञ्चिच्छिष्यभावेनानुगम्यात्मानं प्रख्यापयितुं पृच्छन्त्येव । किन्निमित्ता वास्येयं योगीश्वरस्वख्यातिरिति जिज्ञासवः । सर्वथा च प्रश्नापपत्तेरुपसन्नानां च नियोगतोऽध्याप्यत्वादनुपालम्भः । तथा चोक्तम्— 'उपसन्नाय तु निर्ब्रूयादि'ति । किं पुनरब्रुवन् । ब्रूहि धर्मानिति । उच्यते— ‡अर्थकामापवर्गास्तद्दृष्टत्वाच्छास्त्रस्याविषयाः । किञ्च, एकत्वाद् धर्मस्य धर्मानिति बहुवचनमयुक्तमेव । न च धर्मभेदोपसंग्रहार्थं तदिति युक्तम् । अशेषत इति पदान्तरानर्थक्यप्रसङ्गात् । नैष दोषः । धर्मपदस्योपलक्षणार्थत्वेनोक्तत्वात् । नह्यन्यथा योगीश्वरपदोपपत्तिः । अथ स्तुत्यर्थं तदित्युच्येत । तदप्यसत् । न हि कार्यान्वयिनः स्तुतिमात्रता युक्ता । अस्तु नाम कार्यान्वयः । तथाप्युपलक्षणत्वं कथमिति वक्तव्यम् । तदुच्यते । योगीश्वरं मन्यमाना धर्मं पृच्छन्तीत्यसंबद्धमिव स्यात् । यस्माद् योगिनो हि ब्रह्मविदः । तेषामाचार्यत्वेनेश्वरो ब्रह्मवित्तमः । स च ब्रह्म प्रष्टव्यः, न धर्मम् । ननु च धर्मज्ञोऽपि परमार्थतो योगीश्वर एव । अर्थकामौ वा स किं न जानाति ।

१. 'हि' क पाठ.

* 'आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या' इति मुद्रितपुस्तकपाठः । § 'तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेद्' इति तु मुद्रितापस्तम्बसूत्रपाठः । ‡ धर्मं प्रतिजानीत— उच्यत इति । चापरः इत्यर्थः ।

न ब्रूमो न जानातीति । धर्मज्ञविवक्षयात्र योगीश्वराभिधानम् । नैतद् युक्तम् । नोपक्रमस्थं योगीश्वरपदं तदधीनात्मलाभोपसंहारस्थेन धर्मपदेन विरुध्यमानं विशेषं[1] स्थापयितुं शक्यम् । न चैवं सति केवलापवर्गविषय एव प्रश्न इत्यवसेयं, सर्वज्ञत्वाद् योगीश्वरस्य, धर्मानिति च बहुवचनोपपत्तेः । किञ्च केवलधर्मप्रश्नेऽपवर्गमात्रप्रश्ने वा कृत्स्नं शास्त्रमसमञ्जसं स्यात्, चतुर्णामपि वक्ष्यमाणत्वात् । भूयसां चैवमनुग्रहो भवति । मुख्यावपि च योगीश्वरधर्मशब्दावन्योन्यापादितविरोधव्याहतसामर्थ्यौ दुर्बलावेव । महाविषयता चैवं शास्त्रस्येत्यलं प्रसङ्गेन । तमेवंविधं योगीश्वरं मन्यमाना याज्ञवल्क्यमब्रुवन् । यज्ञवल्को ब्रह्मा इति पौराणिकाः । तदपत्यं याज्ञवल्क्यः । कथं कृत्वाब्रुवन् । संपूज्य । पूजा चात्रोपसदनादिलक्षणा विज्ञेया । समित्युपसर्गस्य सम्यगर्थत्वात् । मुनयो वेदार्थतत्त्वविदः । वर्णाश्रमेतरेषां नो ब्रूहि धर्मानशेषत इत्यब्रुवन्निति संबन्धः । वर्णा ब्राह्मणादयः । आश्रमा ब्रह्मचार्यादयः । वर्णेतरा अन्तरप्रभवा अनुलोमादयः । आश्रमेतराः पाषण्डादयः । तेषां वर्णाश्रमेतरेषाम्* । समग्राभ्युदयात्मकाष्टवर्गप्रतिपादकं[3] शास्त्रं नो ब्रूहीति श्लोकार्थः । धर्मादीनां वक्तुमशक्यत्वादेवमभिधीयते । ब्रूहीति चाध्येषणेयम्, आचार्यत्वाद् भगवतः । अशेषत इति । कार्त्स्न्येनेत्यर्थः । वेदादिति चाध्याहार्यम् । वेद एव वानन्यशेषत्वादशेष इत्युच्यते । तस्मादशेषतोऽनुग्रहार्थमस्माकं धर्मान् ब्रूहीति । अन्यः पाठः— 'वर्णानां साश्रमाणामि'ति । अत्रापि स एवार्थः । अन्तरजा अप्यनुलोमा वर्णा एव । यथाह मनुः—

"पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात् प्रचक्षते ॥"

इति । अनन्तरग्रहणं चैकान्तरद्व्यन्तरार्थमपि द्रष्टव्यम् । क्रमानन्तर्यवचनाच्च प्रतिलोमानामवर्णत्वम् । तथा च गौतमः— 'प्रतिलोमात् तु धर्महीनः'

१. 'षेवि' ख. पाठः. २. 'षाः । आ' घ. पाठः. ३. 'क नो ब्रूहि शास्त्रमिति' घ. पाठः. ४. 'रः । वे' घ. पाठः.

* वर्णाश्रमेतरेषामिति द्वन्द्वेऽप्यार्षं सर्वनामत्वम् ।

इत्यवर्णविवक्षयैवाह । जातूकर्णश्चाह — 'प्रतिलोमास्त्वन्तावसायिनः' इति । यत्तु किञ्चित् तद्गतधर्माभिधानं, तदानुषङ्गिकविषयम् । प्रयोजकविषयस्तु प्रश्नः । पाषण्डिनां स्वाश्रमप्रतिपत्त्यर्थो धर्म इत्याश्रमशब्देन ग्रहणम् । एव च पाठान्तराण्यपि व्याख्येयानि । यद्वा वर्णाश्रमेतरेषां न इति संबन्धः । वर्णाश्रमेतरा एव हि तावद् वयं, यावदनिर्णीतो धर्मः । तेनास्माकं निर्णयाय ब्रूहीति ॥ १ ॥

किमनभिगम्यैव मुनिभिर्योगीन्द्र पृष्ट, । नेत्युच्यते —

**मिथिलास्थः स योगीन्द्रः सम्यग् ध्यात्वाब्रवीन्मुनीन् ।**
**यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्मान् निबोधत ॥ २ ॥**

न हि मिथिलास्थं योगीन्द्रमनभिगम्यैव मुनयः प्रष्टु क्षमाः । मिथिलास्थत्ववचनाच्च योगीन्द्रस्य मुनीनां देशान्तरस्थत्वं सिद्धम् । अन्यथा विशेषणमेवं न स्यात् । युक्तश्चाभिगम्यैव श्रेयसि प्रश्नः । तथा च 'अभिगम्य महर्षयः' इति मानवम् । जातूकर्णोऽप्याह — 'नाकस्मात्समवाये गुरुं पृच्छेदि'ति । अथ स तैः पृष्टः किं कृतवान् । सम्यग् ध्यात्वाब्रवीन्मुनीन् । प्रश्नविशेषणं वा सम्यगिति । ध्यात्वा निरूप्य मुनीनां योग्यतादिकम् । अन्ये क्षण ध्यात्वेति पठन्ति । तेषां कालविवक्षा । क्षणेनैवेयान् महागहनः शास्त्रार्थोऽनुध्यातः । नूनमयं योगीन्द्रः स्यात् । वैलक्षण्यप्रदर्शनार्थं वाचार्यस्य । अध्यापनप्रकारनियमो वा । किं पुनस्तदब्रवीत् । यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्मान् निबोधतेति । बहुवचनमुक्तार्थम् । ये तु धर्ममिति पठन्ति । तेषां मुख्यत्वं धर्मस्येत्यभिप्रायः । निबोधतेति शिष्यबुद्धिसमाधानार्थम् । प्रसक्तस्यापि धर्मस्य पुनर्वचनं कृष्णोपलक्षितदेशसम्बन्धार्थम् । कथं योगीन्द्र एवैवं ब्रूयात् 'योगीश्वर याज्ञवल्क्य', 'मिथिलास्थः स योगीन्द्र.' इति च । नाप्यन्यः कर्तेति शक्यं वक्तुम् । 'श्लोकत्रयमपि ह्यस्माद्' इति वक्ष्यमाणत्वाद्

१. 'श्वाह । य' ग. पाठ २ 'रूम् । प्र' घ पाठ. ३. 'न स्या', ४. 'शे वा' घ पाठ.

र्थम् । मनुर्विष्णुरिति ख्याततमैर्नामभिः सामर्थ्यकथनार्थम् । अहमित्यन्तत आत्माभिधानमाचारपरिपालनार्थम् । तथेति चानुक्तोपसंग्रहार्थम्[1] । तथा च वृद्धयाज्ञवल्क्यो धर्मप्रवक्तॄनुक्त्वाह—

'भूयासो धर्मवक्तार उत्पन्ना भाविनस्तथा ।
निधानं सर्वधर्माणां वेद एव हि शाश्वतः ॥"

इति । पुनश्चाह—

"नारदः पुलहो गार्ग्यः पुलस्त्यः शौनकः क्रतुः ।
बौधायनो जातुकर्णो विश्वामित्रः पितामहः ॥"

इति[2] । मननान्मनुः । विविधज्ञानेन स्नातः शुद्धो वेष्टितो वा विष्णुः । यमनाद् धर्मस्य प्रजानां वा यमः । इत्यादि सर्वत्र योज्यम् । स्तुत्यतिशयार्थम् ।

 किं पुनरस्याः स्मृतेर्मूलम् । न तावदाम्नायो धर्मशास्त्रभेदप्रतिपादकः । न च तत्प्रभवो न्यायः । अपितु श्रौतानां कृत्स्नोपसंहारात् तत्पूर्वकत्वाच्च तथैवात्रापि प्राप्नोति । कार्त्स्न्येन चैवं धर्मावगतिः, न ह्येकस्मृत्यध्ययने सकलधर्मावाप्तिर्यतः । भेदे च द्वयोरप्यध्ययनं न स्यात्, शाखान्तरवत् । इष्यते च तत्, "स्मृतिद्रोण*पाठक" इति वचनात् । नैतदेवम् । न हि परम्परापेक्षं मन्वादीनां धर्माभिधानम् । सर्वत्र कार्त्स्न्याभिधानात् । इतरथा हि क्वचिदेव पदार्थाभिधानं स्यात् । अन्यत्र गुणविधयः । क्वचिच्च सापेक्षत्व दृश्यते, वचनात् । तद् यथा—

"आम्नायात् सम्यगुद्धृत्य शङ्खश्च लिखितस्तथा"

इति । न चानुमेयेष्वर्थेष्वैक्यं शक्यते वक्तुम् । लिङ्गानुसारेण लिङ्गिनोऽपि भेदावगतेः । भिन्नानि चाष्टकादिलिङ्गानि प्रतिशाखं, तथैवोपलब्धेः । तथाच स्मरण भेदेन । अन्यथा ह्येकरूप एव प्रयोगः स्मर्येत । यत्तु शाखान्तरवदुपसहरणमुक्तं[3], तच्छ्रौतकर्मणां प्रत्यक्षत्वेन प्रकरणाभेदाद् युक्तम् । इह तु प्रधाने भेदोऽभिहितो लिङ्गभेदात् । अतो वैषम्यम् ।

१ 'नम् ॥' घ पाठ  २ त्यादि । म',  ३ 'स्मृत' ख पाठ.

* द्रोणेति पाठान्तरे ।

यानि तु नामतो गुणविधानानि तान्यविशेषादत्रापि समुच्चीयन्त एव । यथा शातातप श्राद्धमुक्त्वैव तद्गतान् गुणानाह —

"विना यज्ञोपवीतेन गन्धर्यस्तु समालभेद्'

इत्यादि । सर्वार्थता च कथ स्यादिति गुणार्थस्मृत्यारम्भ । यत्तु स्मृतिद्रोणाध्ययन नानात्वेऽपि वह्वङ्गप्रयोगकरणे फलभूयस्त्वलाभार्थम् अधिकगुणोपसहारार्थं च । द्रोणवचनात्तु नियमादृष्ट व्रताध्ययनवद्, भूयस्त्वविवक्षया वा द्रोणशब्द इत्यवसेयम् । यत्तु 'नेकत्र कात्स्न्यं धर्मस्ये'ति, तद् वैतानिकानेककर्मकलापानभिधानात् कात्स्न्र्यऽपि नव । अखिलपरोक्षार्थाश्रयित्वेन कात्स्न्यमिति चेत्, तदपि कर्णवेधाद्यनुपसहृतेरसिद्धम् । आचारप्रामाण्याभिधानात् तदुपसहृतमिति चेत्, वेदो धर्ममूलमित्यनेनैव सिद्धत्वान्न शास्त्राय । धर्मप्रवक्तृसङ्ख्यानियमानवधारणाच्च सापेक्षत्वेन सर्वस्मिन् धर्मशास्त्रे समाप्ति स्यात् । ततश्चाननुष्ठानम् । न च सङ्ख्यावधारणमस्ति । परिगणनस्य प्रदर्शनार्थत्वात् । हेत्वन्तरस्य चाभावादित्येषा दिक् । ननु न प्रयोगभेदेऽपि गुणार्थस्मृत्यन्तरापेक्षाणा तदवस्थमेवाननुष्ठानम् । मेवम् । यदि परिपूर्णऽपि प्रयोगेऽभ्युदयाय गुणान्तरोपसहार, नित्यवत्करण त्वनुपसहृतेरप्युपपन्नमित्यविरोध । यद्वा स्तु नियोगतस्तदुपसहार । सति तु ज्ञाने ज्ञातगुणान्तरत्यागे नकस्मृत्यवगतप्रयोगानुष्ठानादेव कृतकृत्यता । अवगतश्च प्रयोगोऽनुष्ठेय । गुणान्तराणि चान्वेष्याणि । उपलब्धगुणानुपसहाराच्च प्रत्यवाय । सापेक्षत्वे तु स्मृतीना प्राक् प्रयागावधृतेरनुष्ठातुमशक्यत्वादवधारणोपायासम्भवाच्चाननुष्ठानमिति वैषम्यम्। परिपूर्ण तु प्रयोगे नैमित्तिकाङ्गान्वयोऽभिमत । "भिन्ने जुहोती"तिवत्। ज्ञानगतमपि च गुणाना नैमित्तिकत्व स्पष्टम् । तद् यथा — वैश्वानरग्रहग्रहणे ' स यदि चरकेभ्यो वा पतनोऽनुप्रनीते 'ति । एवमत्रापि । यद्यप्रमादाद्भिरन्विष्यमाण गुणान्तरमुपलभ्येत, तत उपसह्रियेत । अनुपलब्धौ त्वदोष । यदा चान्विष्यमाणस्य यस्योपलब्धि तदा तस्यानुपसहारे प्रत्यवायादव्याहतमनुष्ठानम् । तत्र त्वपरिपूर्ण प्रयाग कृत्वयतोपदेशमात्र च यथापनयनादिषु, तत्रानुमितव स्मृत्यन्तरापेक्षा ।

१ पराथा' ख पाठ २ आनु' ३ वानु ४ पाठ ४ स । प' ख पाठ

यथा च मृद्भिरिति मृदां बहुत्वेऽवगते तिस्रः पञ्च वेति स्मृत्यन्तरात्। एवं सर्वत्रोन्नेयम्। स्मरणवैचित्र्यमेवास्याः कल्पनायाः प्रमाणमिति न हेत्वन्तरं मृग्यम्। प्रयोगैक्ये तूक्तानुपपत्तिः। अतः सूक्तं वक्तारो धर्मशास्त्राणामिति स्मृतिबहुत्वम्॥ ४,५॥

उक्ता धर्मादयः शास्त्रस्य विषया इति। तेषां तु लक्षणं वाच्यमित्यत आह—

**देशे काल उपायेन द्रव्यं श्रद्धासमन्वितैः।**
**पात्रे प्रदीयते यत् तत् सकलं धर्मलक्षणम्॥ ६॥**

देशः सामान्यविशेषात्मकत्वेन द्विविधः। सामान्यतः कृष्णोपलक्षितः। विशेषतः शुद्धादिकः। कालोऽप्यहःपूर्वाह्णादिकः। उपायस्त्वङ्गकलापो दृष्टादृष्टार्थः। यथा— "अभिगम्योपविश्य हिरण्यं दद्यादि"ति। देशकालयोस्तूपायत्वेऽप्यधिकारान्वयाद् भेदेनोपन्यासः। द्रव्यस्य च प्राधान्यात्। द्रव्यं शुक्लं हिरण्यमित्यादि। श्रद्धा प्रसिद्धैव। संशब्दः सम्यगर्थे। अन्वितैर्युक्तैरित्यर्थः। पात्रं जातिसंस्कारविद्यावृत्ततपोभिः सम्पन्नम्। एवं यद् दानं, सोऽनवद्यः कृत्स्नो धर्म इति। दानशब्दश्चायं यागाद्यशेषविहितकृत्योपलक्षणार्थो द्रष्टव्यः। विपरीतश्चाधर्मः। यत्तु दानमेवोदाहृतं, तत् सार्ववर्णिकाधिकारप्रतिपादनार्थम्। कुरुक्षेत्रग्रहोपरागादयस्तु काम्यनैमित्तिकतयावसेयाः। तथा च शङ्खः— "तत्र धर्मलक्षणानि। देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति समयः। तेषु धर्मोदयः साधारणः, अन्यथा विपरीत" इति। देशाद्यभावे 'विपरीत इति वदन् नित्यानीमानीति दर्शयति। न च कुरुक्षेत्रादीनां नित्यत्वोपपत्तिः, अन्यत्र नियमाभावप्रसङ्गात्। न चैतद् युक्तम्। अतः सूक्तं काम्यनैमित्तिकत्वमेवमादीनामिति॥ ६॥

तन्निश्चय धर्मलक्षणावधारणनिर्मूलैर लक्ष्यते। आत्राय्यानमिति मैत्रम्।

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्॥ ७॥**

१ 'तम्।' इति मुद्रितकोशपाठः. २. 'सर्ववर्णाधि' ख. पाठः. ३. 'श्रुतिः स्मृ' इति मुद्रितकोशपाठः.

यदि हि स्मृत्यादयो वेदानपेक्षा धर्ममूलमित्युच्येरन्, तदा निर्मूलता स्यात्। यदा त्वेषामपि वेदाविनिर्भागः, तदा निर्मूलवचनं प्रलापः। वेदपूर्वकतया चैषां प्रामाण्यम्। अतः सुष्ठूच्यते धर्ममूलमिदं स्मृतमिति। तथा चाह मनुः — 'स्मृतिशीले च तद्विदामि'ति। वेदस्मृती प्रसिद्धे। अकामात्मानो दम्भादिरहिता वेदार्थविदोऽनुष्ठातारश्च सन्तः, तेषां यद्दृष्टायाचरणं स सदाचारः। तथा च वसिष्ठः — "शिष्टः पुनरकामात्मा, अगृह्यमाणकारणो धर्म" इति। अनुपनिबन्धनाच्च स्मृतितो ब्राह्मणपरिव्राजकवद् भेदेनोपन्यासः। अनुपनिबन्धन तु स्मृत्यन्तरार्थवत्। वेदाविरोध्यसाहसं स्वस्यात्मनः प्रियं, यथावसीदति कुटुम्बे संन्यासः। विचिकित्साशङ्कया तु स्मृत्याचारयोर्भेदेनोपन्यासः। यथैतदेवं तथा तदाश्रमनिरूपणे वक्ष्यामः। अनात्मद्रुहा प्रीत्युत्पादः सम्यक्सङ्कल्पजः कामः। यथा वैकल्पिकयोरन्यतरावधारणम्। इच्छया तु प्रवृत्तेः पौरुषेयीशङ्का मा भूदिति भेदेनोपन्यासः। ऋज्वन्यत्। प्रत्येकविशेषणं वा सम्यगिति। वेदस्य सम्यक्त्वं वाक्यविवेकावधृतिः। तन्मूलत्वनियमोपरस्मृतेः। यद्वा स्वस्य चेति कुलधर्मः पित्राद्याचारोऽभिप्रेतः। सताम(दृरि)ष्टाय चेत्यत्रापि योज्यम्। तथा चाहुः —

"येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति॥"

इति। प्रियं स्वात्मन आत्मतुष्टिः। तदपि धर्ममूलम्। किं पुनरात्मनः प्रियं, सम्यक्सङ्कल्पजः कामः। कस्यचित् त्वात्माभिहितमात्रेण तत्त्वावधृतिः स्याद्, अन्यस्य मूलप्रमाणप्रतिपत्त्या। यावदस्य निर्विचिकित्सं सम्यक्सङ्कल्पजः कामः स्यात्, तदा तस्यात्मनः प्रियं धर्ममूलतयावसेयम्। विचित्रधियामपि पुंसां सम्यक्सङ्कल्पजत्वेनेच्छानियमादनवद्यम्। समानमन्यत्। अथवा स्वस्य च प्रियमात्मन इत्यपवर्गलक्षणम्। सम्यगित्यार्थकामयोः। धर्मस्य तूक्तम्। तदेतत् सर्वं स्मृतिशास्त्रेण प्रतिपाद्यते। नन्वेवं वेदमूलत्वाद् वेद एवेत्यभिप्रेत्योच्यते — धर्ममूलमिदं स्मृतमिति।

१ 'तो', २ दमूलक' ग पाठ ३ 'यन्त्र', ४. 'च मू' घ. पाठ.

न्यायमूलत्वाच्च श्लोकस्यानेकार्थत्वमदोषः । कुतः पुनरिदमाम्नायमूलत्वं स्मृतेरवगमितम् । न तावत् सर्वस्मृतीनां मूलभूतवेदवाक्योपलब्धिः । कतिपयवाक्यदर्शनं त्वसदागमेष्वप्यविशिष्टम् । न च वेदः स्वयं मूलतामलं प्रतिपादयितुम् । अनुमानादेस्त्वसामर्थ्यमतिप्रसिद्धम् । विपर्यये वा तत्प्रवृत्तिः, सर्वात्मकवेदमूलत्वानुपपत्तेः । न तावद् विधिरूपः, अदर्शनात् स्मृत्यानर्थक्याच्च । तथाहि —

प्रत्यक्षे विधिरूपे च वेदे सति मुधा स्मृतिः ।
कल्पकारास्तदा कुर्युर्लघुतायै प्रकल्पनम् ॥

वाक्यानां विप्रकीर्णानां स्मृतिः सङ्ग्रहणाय चेत् ।
तदसत् स्मार्तता मा भूत् ताद्रूप्याज्ज्योतिषोऽपि हि ॥

सहारादेकशाखात्वेऽप्यादिमध्यान्तवर्तिनाम् ।
शाखान्तरगतानां च समाहारः प्रवर्ग्यवत् ॥

मैवं न ज्योतिषा तुल्यं विप्रकीर्णत्वमत्र नः ।
इतिकर्तव्यता तद्वत् क्लृप्ता न ह्यस्ति सन्निधौ ॥

एकैकशः प्रकीर्णाङ्गप्रधानैकध्यसङ्गतेः ।
ज्योतिष्टोमादितुल्यत्वं स्मृतीनामतिदुर्भणम् ॥

शाखानां विप्रकीर्णत्वात् पुरुषाणां प्रमादतः ।
नानाप्रकरणस्थत्वात् स्मृतिमूलं न गृह्यते ॥

कार्योऽतश्चोपसंहारः पुरुषानुग्रहात्मकः ।
तद् वेदादृश्यमानत्वं न दोषायात्र जायते ॥

स्मृतिमूला हि विधयः सन्ति वेदे सहस्रशः ।
सम्प्रदायविनाशात्तु भीतैः साक्षादसङ्गतिः ॥

उत्कृष्टव्यस्तु ख्यातोऽयं मलवद्वाससा सह ।
न संवसेदिति विधिः स्मृतिमूलत्वसम्मतः ॥

आत्रेय्या योषितनस्वी भवेद् घातयितेत्यपि ।
तत्र तस्मादनिन्द्यस्य नापकामेदितीति च ॥

अनारभ्य च सौवर्णं हिरण्यं भार्यमित्ययम् ।
रूपसम्पत्तये चैवं भवितव्य सुवाससा ॥
नन्वेवं भिन्नरूपत्वं स्मृतीनां नोपपद्यते ।
उपसंहरणीयानामैक्यात् कृच्छ्रादिकर्मणाम् ॥
नैतदस्त्येव भिन्नत्वं प्रत्यक्षाध्ययनेऽपि हि ।
कर्मणां भेदकैः सङ्ख्यागुणप्रकरणान्तरैः ॥
भिन्नत्वाच्च प्रधानानामङ्गभेदस्तदाश्रयः ।
भिन्नाश्चातोऽष्टकादीनां प्रयोगाः स्मार्तकर्मणाम् ॥
उद्दिश्यैक्यं प्रधान च विशिष्टगुणलक्षितम् ।
अङ्गं विधीयमान हि न सर्वार्थं प्रसज्यते ॥
साधारणं हि नामैकं भविष्यत्यक्षशब्दवत् ।
स्मृतीनां भिन्नरूपत्वमतो भिन्नार्थसङ्ग्रहात् ॥
एकैकं चाष्टकाकर्म कुर्वन्त्व कृतिनो नराः ।
फलसाम्याद् भवन्त्यस्मान्नैककर्त्राखिलग्रहः ॥
सर्वेषां ये नृणां धर्माः सर्वैस्तेतूपसंहृताः ।
मन्वादिभिर्यमाः प्रायो नियमाश्चाविशेषतः ॥
एवञ्च विप्रकीर्णैकशाखाशाखान्तराश्रयम् ।
दृश्यमानं स्मृतेर्मूलमपहातुं न शक्यते ॥
सम्यगालोचितं नैतदाचार्येणेव लक्ष्यते ।
प्रकीर्णविधिवाक्यानां मूलत्वानुपपत्तितः ॥
जीवतः कामिनो वा स्यादधिकारोऽष्टकादिषु ।
जीवतश्चेत् ततः सर्वं कर्तव्य सर्वकर्तृभिः ॥
कर्तव्यत्वाविशेषात् स्युः कृतार्था नैककर्मणा ।
अकृत्वेष्टिं हि तुल्यत्वात् कृतिनो नाग्निहोत्रिणः ॥
तथास्त्विति यदि ब्रूयादतादृप्योपसहृतेः ।
मानवाद्यप्रमाणत्वमनुष्ठानं च दुर्लभम् ॥

स्मर्तॄणां जायते दोषो नन्वकर्तव्यसङ्ग्रहात् ।
न पुनर्निखिलत्वेन कर्तव्यानुपसंहृतौ ॥
अन्योन्यनिरपेक्षत्वं स्मृतीनां यच्च वर्णितम् ।
एकक्रियाप्रयोगे हि तज्ज्ञेयं नाखिलग्रहे ॥
एवमेकप्रयोगेऽपि न वेदोक्तोऽखिलग्रहः ।
अनुष्ठानविरोधस्तु तुल्यो भेदेऽपि कर्मणाम् ॥
कर्तुरेकस्य यत् कार्यं नियोगेनैककालिकम् ।
तत् स्मार्यं नैरपेक्ष्यार्थमेकैकत्राखिलात्मनाम् ॥
सर्वं चैतत् प्रपञ्चेन वक्ष्यामः श्राद्धसङ्ग्रहे ।
यथास्मृत्यप्रमाणत्वमुक्तरूपानुपग्रहे ॥
कालैक्येन विरुद्धत्वादर्थैककरणं मतम् ।
तथापि यावतां शक्तिः कृतिर्भवति तावताम् ॥
पूर्वाङ्गानुपसंहारादक्रिया चेद् गुणत्वतः ।
प्रधानसाधनात् तस्य न युक्तेरुपसंहृतिः ॥
संस्कारत्वादथैकेन न कुर्युः संस्कृताः परम् ।
संस्कारत्वं तथा वाच्यं सर्वस्मृत्युक्तकर्मणाम् ॥
कृत्वैकां चाष्टकां कुर्युर्नैकगृह्योदितामपि ।
कामिनामधिकारे तु यथाकाम्यादनित्यता ॥
नित्यवत् स्मरणं तत्र स्मर्तॄणां स्यादमूलकम् ।
न चान्यथाधिकारोऽस्ति तस्मान्नियमकल्पना ॥

किञ्च,

एकैकशः प्रकीर्णाङ्गप्रधानैकत्वसङ्गतौ ।
स्मार्तत्वे वैकृतानां स्यात् पार्वणचर्वादिकर्मणाम् ॥
कल्पोपकारसम्बन्धात् तत्र चेदप्रकीर्णता ।
पौर्णमासविकारत्वात् तद्वत् स्यादष्टकास्वपि ॥
न चास्ति पठ्यमानत्वे स्मार्तानामविकारता ।
दर्विहोमेष्वपूर्वत्वमुक्तं भारद्वाजादितः ॥

अन्वारुह्योक्तमेतच्च विधिवाक्यप्रकीर्णताम्।
शाखासहस्रमध्येऽपि न त्वेका पठ्यतेऽष्टका ॥

प्रकीर्णा ये तु दृश्यन्ते नृधर्मा विधयः क्वचित्।
नियमानां यमानां च ते स्युर्मूलं न कर्मणाम् ॥

प्रत्यक्षं पठ्यमानानां प्रकीर्णत्वाद्धि कर्मणाम्।
कल्पकाराश्च निन्द्याः स्युरसामर्थ्यादकल्पने ॥

मन्त्रार्थवादमूलत्वं स्मर्तारः कीर्तयन्ति यत्।
तच्चासत् स्याद् वसिष्ठादौ कथं लाङ्गलमुद्वपेत् ॥

व्याख्यानतः शुनःशेफ इत्युक्तेश्चार्थवादजाः।
श्रुत्या सह विरोधे च विकल्पो विधितुल्यतः ॥

तत्र शङ्खवचो दुस्स्थं तयोश्च ज्यायसी श्रुतिः।
द्वितीयस्तदनुव्याख्या स्मार्तो बौधायनस्य च ॥

अनयायं दिशा पक्षः प्रपञ्चैव विवेकतः।
सर्वथा परिशोध्यस्तु स्मृत्यप्रामाण्यवादिभिः ॥

एवं तावद् विप्रकीर्णविधिमूलत्वमनुपपन्नम्। मन्त्रार्थवादयोस्त्वन्यपरतयैवामूलत्वम्। किञ्च मन्त्रः प्रकरणे वा स्यादप्रकरणे वा। प्राकरणिकस्तावत् परार्थ एव। इतरोऽप्युपादानशून्यलिङ्गविनियोजकत्वानभ्युपगमादमूलम्। स्वाध्यायाध्ययनविधेरपि जपयज्ञाद्युपयोगित्वेन नैराकाङ्क्ष्यादौदासीन्यम्। अर्थवादास्तु येऽनारभ्य पठ्यन्ते, तेषां प्राग् विधिकल्पनादपर्यवसनात्। कल्पिते च तादर्थ्यादकारणत्वम्। अथ मन्त्रार्थवादान्वितपदार्थसत्यतोपपादनार्थं तदनुसारिकाल्पनिकविध्यन्तरमूलतोच्येत, यथा 'प्र ते यक्षि'* इत्यग्न्यभिधानपरे मन्त्रे 'धन्वन्निव प्रपा असि'-त्येतद् दृष्टान्तपदं लोकप्रसिद्ध्यानुपपद्यमानं स्वसिद्ध्यर्थं विध्यन्तरं प्रपा कर्तव्येति कल्पयति, तथार्थवादेऽप्यश्वानुगतौ रासभस्य "तस्माच्छ्रेयांसं

* "प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु।
धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥" (ऋग्वे. ७.५ ३२. १)

यन्तं पापीयान् पश्चादन्वेती"ति हेत्वभिधानात् तत्सिद्ध्यै श्रेयाननुगन्तव्य इत्याद्यनुमितविध्यर्थमूलतोच्येत । तदप्यसारम् । भ्रान्तिजनितोऽपि व्यवहारः पदार्थालम्बनहेतुतां प्रतिपद्यते । भ्रान्तिः किमिति चेद्, अस्मादेव वाक्यार्थविपर्ययात् । सत्यतया वा सालम्बनत्वे को विरोधः । विज्ञानघन इत्यादेरपि सत्यता वचनीया । ततश्च नैरात्म्यापत्तेश्चोदनाव्यवहारो दुःश्लिष्टः स्यात् । तथास्त्विति चेत्, कः खल्वकल्पनयैवोपपद्यमानप्रामाण्यं वेदं कल्पनामारोप्याप्रमाणीकुर्यात् । यथा च कुदृष्टीनां भ्रान्तिजनितानामेव प्रतिषेध्यत्वेन पदार्थालम्बनत्वं, तथैतेषामपीत्यदोषः । कल्पनायामपि फलवत्प्रयोगवचनान्तर्गतेस्तादर्थ्यादपुरुषार्थत्वेन स्मृत्यविषयताप्रसङ्गः । नाम्नां तु गुणफलान्वयमात्रोपयोगित्वाद् दूरापेतं मूलत्वम् ।

एतेनोत्सन्नशाखामूलत्वं व्याख्यातम् । उत्सन्ना अपि ह्येवंरूपा एवेति । किञ्च, उत्सादोऽपि प्रमाणशून्यः कल्पनीयः स्यात् । नहि शाखोत्सादः सम्भवति । एवंरूपशाखान्तरानुपलब्धेः । चतुर्णामपि वेदानां काश्चिच्छाखाः पठ्यन्ते । न चैकस्यामपि स्मृत्यभिहितधर्मसादृश्योपलब्धिरस्ति । न चात्यन्तविलक्षणत्वेन शाखान्तरत्वोपपत्तिः । न हि मैत्रायणी शाखा काठकस्यात्यन्तविलक्षणा । शाखैकदेशमूलत्वे वा महत्यदृष्टकल्पना स्यात् । उत्सन्नवेदमूलत्वं तु वेदचतुष्टयप्रसिद्धेर्नातीव पेशलम् । प्राक् चोत्सादात् स्मृत्यभावप्रसङ्गः । उत्सादाशङ्कया वा स्मरणेऽग्निहोत्रादीनामपि स्मार्तत्वं स्यात् । अतोऽयमसारः पक्षः । ये तु वेदवत् स्मृतीनामपि नित्यतया प्रामाण्यं मन्यन्ते प्रवचननिमित्ता मन्वादिसमाख्येति वदन्तः, ते खलु मौनभाजो दुर्निवारा । अबाधकत्वेऽपि हि पुरुषप्रणीतेर्वेदः प्रमाणम् । सर्वलोकबाधा चात्र तत्प्रणीतिः । दुर्निवारं चासदागमनात् तात्रूप्यमेवं सति स्यात् । तथास्त्विति चेत् । अलं स्मृतिशास्त्रेण । इदानीमदृष्टमात्रेणोपरतकर्तृकाणां कूपारामादीनामपि तदकर्तृकत्वप्रसङ्गः । मन्वादीनां च "स सर्वोऽभिहितो वेदे" इत्याद्यभिधान मुपेक्षापद्येत । तद्यशःप्रोत्सारणेन वा कथञ्चित् क्लिष्टकल्पनयार्थवादत्वं योजनीयम् । कठादिचरणानि च तां तां शाखां बिभ्रति । न च मानवादिचरणोपलब्धिरस्ति । न च छान्दोग्यब्राह्मणवत् त एव शाखिनो धारका इति शक्यं वक्तुम् । अन्यतमवेदशा-

खानन्तर्गतत्वात् । यदपि शाखिना धारणमुपलभ्यते, तदपि स्मृतित्वेनावे दतया, अङ्गवत् व्रताध्ययनानादरश्चैवमुपपद्यते । ताश्च स्मृतयो नित्या इति वाच्यम् । यदि तावत् कतिपयमन्वादिप्रणीता एवेत्युच्येत, नारदा देरप्रामाण्यप्रसङ्ग । तथास्त्विति चेद्, विशेषहेतुर्वाच्य । इदानीं प्रणीतबौधायनादिस्मृतेश्च मन्वादिवदादरो न स्यात् । यत्त्वप्रयत्नपूर्वकं सर्वा ब्रह्मणो मुखान्निस्सृता इति तच्छाक्यमुनिदेशनेवातिस्थूलम् । अपि च नित्यत्वे स्मृतीनामध्ययनविध्यभावात् सम्प्रदायविच्छित्ति स्यात् । नन्वस्ति

"विदुषा ब्राह्मणेनेदमध्येतव्य प्रयत्नत"

इति । न तेनाखिलस्मृत्यध्ययनविधानम्, इदमिति च प्रकृतपरत्वात् । प्रकृते च विरोधादसमर्थत्वम् । यदि चाध्येतव्यमित्यस्य विधेरर्थावगम्यतोच्येत तदानुपनीतस्य शूद्रसमत्वाद् वेदार्थत्वेन चोपनीतस्य तदध्ययनात् सन्ध्योपासनादिकतिपयार्थशिक्षणवचनाच्च स्मृत्यनध्ययनम् । अधीतवेदस्य च गुरुकुलनिवर्तनमित्यादि प्रपञ्चनीयम् । पाठमात्रपर्यवसायित्वे त्वस्याप्यदृष्टार्थत्वात् स्मृतिसम्प्रदायो दुर्घट स्यात् । वेदमूलत्वे तु स्वाध्यायाध्ययनविधिविजृम्भणात् कथञ्चिदुपपद्येतापि । तदेव दुरुपपादमित्युक्त पुरस्तात् । नन त्रुटितविकलजालेन परावृत्तिचतुरप्रज्ञासहाया गृह्यन्ते । को वा वेदमूलतया स्मृतीना प्रामाण्य ब्रूयात् । सम्प्रदायाविच्छेदाद् वेदवत् स्मृतयोऽपि स्वतन्त्रा यत । न च पूर्वाभिहितदोषप्रपञ्चनम् । ग्रन्थनित्यत्वानभ्युपगमात् । ग्रन्थेन च नातीव प्रयोजन, स्मार्तक्रियानुष्ठानरहितकालाभावात् । यथैव हि कृष्यादयो विशिष्टफलोपायान्वितत्वेन लोकत उपलभ्यन्ते । तथाष्टकादयोऽपि यत । इयास्तु विशेषः — सन्निकृष्टफला कृष्यादय । अनियतफलाश्चाष्टकादय । न चैतावता लौकिकत्व शक्य वक्तुम् । अस्मादेव विवेकानवधारणात् प्रमाणान्तरत । स विवेको भ्रान्त्यापीति चेत् । न । प्रमाणान्तरस्य निराकृतत्वाद् दृढत्वानवगमेश्चाभ्रान्ति । भ्रान्तिकल्पने चावेद एव वेदतया गृहीत इत्यप्याशङ्कयेत । यथैव वेदोऽयमिति बुद्धिर्लौकिकत्वेऽपि वाचकत्वस्मरणान्न भ्रान्तिरित्युच्यते तथाष्टकाद्युपायफले स्वरूपनियमोऽभीत्यवगन्तव्यम् । न च परोक्षत्वात् फलसाव-

नशक्तेरलौकिकत्वाभिधानं, शब्दशक्तिवत् । प्रतिपत्त्यन्यथानुपपत्त्या सेति चेत् । तदत्रापि समानं दृढत्वात् प्रत्ययस्य । यथैव हि शब्दाः प्रत्यायकत्वेन शक्तिकल्पनानिमित्तं, तथा निरूढप्रतिपत्तिहेतवोऽर्थो अपीत्यदोषः । कस्य वात्र परोक्षता । अष्टकादयस्तावत् पुरुषान्तरैरनुष्ठीयमानाः प्रत्यक्षत्वेनाशेषाज्ञा उपलभ्यन्ते । तत्र च वेदशब्दवदष्टकादिशब्दव्युत्पत्तिः । विशिष्टकार्यं निमित्तं च तदनुष्ठानमिति स्वरूपवदनुष्ठातृभ्य एवावगम्यते । तत्प्रसिद्ध्यनुपपत्तिकल्पिते च संबन्धिनि बोधकशक्तिवत् प्रवृत्तेरव्याघातः । तस्मात् स्वातन्त्र्यं स्मृतीनामित्युक्तम् । तथा चाह —

"अग्रन्थकानामर्थानां चकारोपनिबन्धनम्"

इति । आम्नायश्च — 'यदुक्तो भूरि'त्याद्युपक्रम्य 'यजुष्टस्सामत' इत्युक्त्वा 'यदविज्ञातमि'त्याह । स्मार्तं चाविज्ञातमिति संप्रदायः । तच्च वेदमूलत्वे सत्यनुपपन्नम् । सर्वथाविज्ञानासम्भवात् । न हि विद्यमानमूलं निरूप्यमाणेऽविज्ञातमिति शक्यं वक्तुम् । पुरुषान्तरापेक्षया त्वविज्ञानेऽतिप्रसङ्गः । स्वातन्त्र्यपक्षे त्वविरोधः । साहसिक! मैवम् । राजन्वान् जनपदः । न खलु सद्भिः परिगृहीता,नार्यः स्वतन्त्रा भवन्ति । न हि लौकिकमनुष्ठानं प्रमाणरहितं स्मृत्यर्थसतत्त्वायालं भवितुमर्हति । मा भूच्चैत्यवन्दनादिक्रियास्वपि तथात्वम् । अवेदविदां तदनुष्ठानाद् वैषम्यमिति चेत् । किं वा स्वातन्त्र्यवादिनां वेदविद्भिः प्रयोजनम् । न खलु वेदो वेदवित्परिग्रहात् प्रमाणम् । नापि लोकनिबन्धनाः कृष्यादयो वेदविदपेक्षाः । सान्दृष्टिकफलास्त इति चेत् । अन्यथा वा कथं लोकनिबन्धनत्वम् । न ह्यसान्दृष्टिकमर्थमागमानपेक्षो लोकः प्रतिपत्तुं क्षमः । अथ वाचकशब्दवल्लोकव्यवहाराधीनतोच्येत, तदसत् । तत्रार्थप्रत्ययानुपपत्तिः कल्पनामूलम् । इह तु किं नोपपद्यते । व्यवहारस्य चैत्यवन्दनादिष्वपि दर्शनात् । न चाभियुक्तमन्वादिस्मरणाद् विशेषोपपत्तिः । व्यवहारमूलत्वेऽसदागमैरविशेषात् । ननु च वेदस्तावत् प्रमाणमित्युक्तम् । तद्विहितदर्शपूर्णमासाद्यनुष्ठातारश्च धर्मे प्रत्यभियुक्ताः । ते चाष्टकादीनामनुष्ठातारः । तेनेतरव्यवहाराद् वैषम्यम् । मैवम् । विपर्ययेण सुतरामस्योपपत्तेः । वेदविदां हि तेनैव निराकाङ्क्षत्वान्न व्यावहारिकधर्मादरः । परित्यक्तवेदमूलव्यवहा-

राणा त्वनन्यगतिकत्वाद् व्यवहारे सुलभता। अस्तु, तेषामपि कार्यतेति चेत्, सुश्लिष्टमेव सति प्रामाण्यम्।

एव तर्हि चोदनार्थानुष्ठातृव्यवहारसामान्यादेव तत्प्रवृत्तिसमर्थं कारणमनुमीयताम्। ननु तदेव नास्तीत्युक्तम्। अत एवानुमीयते। किमसदप्यनुमीयते। नह्यनुमापकलिङ्गसभवे सत्यसदिति शक्य वक्तुम्। किं पुनस्तल्लिङ्गम्। त्रैवर्णिकानामसान्दृष्टिको व्यवहारश्चोदनामूलो दृष्ट। तथाविधश्चायम्। तस्मादत्राप्यस्ति चोदना मूलभूतेति। नापि तद्द्- दुपलब्धिप्रसङ्ग इत्येव विशेषणविरुद्धत्वम्। अदर्शनस्याबाधकत्वात्। इतरव्यवहारे तु व्याप्त्यभावाद् वैषम्यम्। किमनुपलभ्यमानैव चोदना व्यवहार प्रवर्तयति। किमनयानुपयुज्यमानविचारणया, सर्वथा प्रवर्त- यति। न चानुपलब्धि सामान्यतो विशेषतश्चानुमानात्। नियतकारणा- नि हि कार्याणि तथैव स्वकारणान्यप्यवगमयन्ति। एवञ्च विध्यर्था- नुष्ठानमुपपद्यते। स्वातन्त्र्ये तु क्रियानुष्ठानम्। तत्र च फलाभावप्रसङ्गो- ऽनन्तरोत्पादनानन्वयफलानाम्। न च सस्कारोत्पत्तिद्वारेण कालान्तरे फलोत्पादकत्वमिति शक्य वक्तुम्। लौकिकाभिधानव्याघातात्। कल्पना- हेत्वभावाच्च। अतोऽयमेव पक्ष श्रेयान्। दर्शनानि चात्राप्युपपद्यन्त एव।

नाय पक्षो निर्वहणीय। न खलु प्रमेयगम्यानि प्रमाणानि भव- न्ति। अनुष्ठानानुपपत्त्या हि कारण कल्पयत कुतोऽनुष्ठानम्। न हि प्राक् कारणकल्पनातोऽनुष्ठानसिद्धि। तन्सिद्धौ मुधा कारणकल्पना। अथोच्येत पुरुषान्तरस्थमनुष्ठान दृष्ट्वा तदनुपपत्त्या कारणमनुमाय ततो ऽनुष्ठानप्रवृत्तेरदोष इति। तदयुक्तम्। नहि पुरुषान्तरानुष्ठानानुप- पत्ति, तस्य सिद्धत्वात्। यदप्यनुमानमुक्त कर्तृसामान्यादिति, तत्रा- पि हेतोरप्रयोजकत्वम्। नहि दर्शपूर्णमासादीना त्रैवर्णिकानुष्ठानाद् धर्म्य- त्वम्, अपितु वेदविहितत्वात्। न चेषा तदस्ति। अथासान्दृष्टिक तदनुष्ठान धर्म इति। तदपि व्यभिचार[1]। अवैदिकत्वेऽपि विगुणधर्मा- नुष्ठानदर्शनात्। भ्रान्तेस्तदिति चेत्। एव सत्यत्रापि भ्रान्त्युपप्लवाद् व्य- भिचार। अथाबाधीभावादभ्रान्तिरित्युच्येत, तदप्यसिद्धम्। वेदविरुद्धे

[1] द पै व्यभिचारि। वे' रा पाठ

हि स्मृत्यर्थेऽबाधादर्शनात् । अथ यत्र तदभावस्तत् प्रमाणमित्युच्येत, तदपि दुरधिगमम् । सर्वं चावेदविहित तद्विरुद्धमेवानुष्ठानमसान्दृष्टिकम् । अतोऽयमप्यसारः पक्षः । "स सर्वोऽभिहितो वेदे" इत्याद्यसंबद्धं स्यात् । प्रमाणरहितकारणकल्पनायां त्वन्धपरम्परा । न्यायोक्ते तु दर्शनानामात्मलाभः । "वचनानि त्वपूर्वत्वाद्" इत्यस्यायमविषयः । अनया दिशा परिचोदनीय प्रपञ्चनीयम् । सर्वथा तु स्मृतीनामप्रामाण्यं मूलकारणानुपलब्धौ स्मृतित्वाद् वन्ध्यादौहित्रस्मरणवत् ।

अत्राभिधीयते । नैवं स्वोत्प्रेक्षितविकल्पजालैः स्मृतीनामप्रामाण्यारोपणं युक्तम् । स्वयं हि मन्वादिभिरुक्तं "स सर्वोऽभिहितो वेदे", "वेदो धर्ममूलम्", "आम्नायप्रामाण्यादाचारः", "द्वितीयस्तदनुव्याख्या स्मार्तः", "वेदः स्मृतिः सदाचारः" इत्यादि । न चैवंरूपाभ्युपगमातिक्रमेण मूलान्तरान्वेषणं युक्तम् । युक्तश्चायमभ्युपगमोऽस्मिन्नर्थे प्रमाणान्तराभावात्, चोदनालक्षण एव धर्म इति नियमो यतः । न च भ्रान्त्यादिकल्पनोपपत्तिः, वेदवित्परिग्रहविरोधात् । नाप्यन्यमूलत्वे तत्परिग्रहोपपत्तिः चैत्यवन्दनादिवत् । भ्रान्त्यादिकल्पने वा वेदेऽप्यवेदताप्रसङ्गः । न चासंभाव्यं वेदमूलत्वं, "वेदविदो हि मन्वादयः" इति स्मरणात् । न चैतद् भ्रान्तिः, स्मर्तृत्वस्मरणवत् । अतः सूक्तं वेदमूलत्वम् । आह च —

> 'भ्रान्तेरनुभवाचापि पुंवाक्याद् विप्रलम्भनात् ।
> दृष्टानुगुण्यसाध्यत्वाचोदनैव लघीयसी ॥"

इति । ननु तदेव वेदमूलत्वं दुरुपपादमित्युक्तम् । उक्ता हि सर्वथा वेदस्य मूलत्वानुपपत्तिः । न तत् सम्यगुक्त प्रमाणतो हि मूलत्वोपपत्तेः । उपलभ्यते हि स्मृतीनां तन्मूलत्वम् । विध्यर्थान्यथानुपपत्तिलभ्यत्वात् । तथाहि 'स्वाध्यायोऽध्येय' इत्युक्ते विद्यां चाध्यापयेदिति द्वयस्यानुपपत्त्यान्यो विधिस्तत्र प्रकल्प्यते । विद्यामध्यापयेदिति हि विधिरात्मोपपादनायाध्ययन प्रयुङ्क्ते । अध्ययनविधिरपि तत्प्रयुक्त्यैवोपपन्नानुष्ठानोऽधिकारान्तरकल्पनामन्तरेणौदासीन्य प्रतिपद्यते । न चाध्यापयिताध्येतारमनुपनीयाध्यापयितु क्षमः । तत्र विधिद्वयोपपत्त्यर्थं विध्यन्तरानुमित्या ब्राह्मणादीनुपनयीतेति । एवं वेदार्थावगत्युत्तरकालं विधिद्वये चरितार्थे सत्यनन्तरं

प्रजोत्पादनविध्यपेक्षाया पत्न्यभावे तदनुपपत्तेः कामैकसाधनत्वाच्च "लक्षण्यां स्त्रियमुद्वहेदि"ति विध्यन्तरोत्थानम् । अग्निहोत्राद्यनुष्ठानस्य च पत्न्यपेक्षत्वात् तत्सन्निधानाच्च तया सह यजेतेत्यनतिक्रमणविध्युदयः । तथा "ऋतावुपेयाद्" इत्यादि । तत्र तत्र प्रधानोपपादका विधयः साधिकारा अनयैव दिशा कल्पनीयाः । तथाङ्गसवन्धः प्रत्यक्षैरानुमानिकैश्च श्रुत्यादिभिरध्यवसेयः । निपुणतस्तु ग्रन्थव्याख्यायामेव प्रदर्शयिष्यामः । न चैव सति दुःश्लिष्टता स्मृतप्रामाण्यस्य । नन्वेवं सत्यर्थगम्या स्मार्ता विधयः प्रसज्यन्ते । तद्यथा— जुहुयात् सर्पिषेत्युक्ते स्रुवेणावद्यतीति च आज्यं स्रुवेण गृह्णीयादिति विध्यन्तरोदयः । यथा हि चतुरवत्तविशिष्ट सर्पिषा होमोऽवदानसमर्थद्रव्यविशेषापेक्षः स्रुवाद्याक्षिपति, तथा 'स्रुवेणावद्यती'ति स्रुवविधिः स्वशक्त्यनुसाराद् द्रवद्रव्यविषयतयोपलभ्यमानस्तद्विशेषाभिमुखतां चालोच्य विध्यन्तरमाविर्भावयति स्रुवेणाज्यं गृह्णीयादिति । एवञ्जातीयकाः सर्वे विधयः स्मार्ताः प्रसज्येरन् । नैवम् । एषां विनियोगमात्रावसायित्वात् । यो ह्युत्पादकः पदार्थस्यानुष्ठापको वा स्यात्, स एवोपदेशकारणम् । नतूत्पन्नेदमर्थ्यमात्रनियामकोऽपीत्यविरोधः । एवं तर्हि स्मृतिविनियुक्तानामप्यस्मार्तत्वप्रसङ्गः । न । स्मृतेः पदार्थोत्पादकत्वेन वैषम्यात् । का वाताऽष्टकादिषु । न तदभावे कस्यचिद् विधेरनुपपत्तिः । स्वाध्यायाध्ययनविधेर्मन्त्राणां चोपपन्नत्वात् । उच्यते । अत्राप्यष्टकादिसमाख्यातमन्त्राणां स्वाध्यायाध्ययनविधिर्नोपपद्यते । नहि जपयज्ञाद्यन्वये सति समाख्यानोपपत्तिः । न च स्पष्टतरविनियोगोपलब्धिः, यद्बलेनाख्याया बाधः । शक्यते च मन्त्रैरेवैतदष्टकादिप्रयोगोऽधिकारहेतुश्च प्रतिपादयितुम् । तदुक्तान्यथानविध्यनुपपत्तिरश्रुतविधिकल्पनहेतुरिति । अष्टकानामनियमप्रकारस्तूक्त एव । नन्वेवं समाख्यानाभेदादनेकैर्मन्त्रैरेकमेवाष्टकाकर्मानुमीयेत । नैवम् । सामर्थ्यभेदात्, स्वशक्त्या हि मन्त्राः कर्म प्रतिपादयन्ति । न चैककर्मप्रतिपादनशक्तिरस्ति । अतः सिद्धोऽष्टकादिकर्मणां भेदः । न चैवं मन्त्रप्रामाण्यादेवाष्टकाद्यनुष्ठानमेकस्यैव स्यात् । न सर्वेषां स्वाध्यायाध्ययनक्रियानुष्ठानं तदकरणनिमित्तप्रत्यवायो न

१ 'स्व [illegible] । न [illegible]  २ [illegible] पाठः  ३ क्वचित्'
घ ६..

परिहृतः स्यात् । पठ्यमानत्वे हि कर्मणां भिन्नानां समाननाम्नामप्येकक्रियायामकृती स्यात्, कर्तव्यतावगतेः समानत्वात्, प्रयोजनैक्यानवगमाच्च। अनुमेयत्वे तदनुपपन्नम्, अष्टकाद्यभिन्नकालसंबन्धिनस्तदनुसारेण प्रयोजनस्याभेदात् । अवगतकालादिसंबन्धाविरोधेन हि प्रयोजनं कल्पनीयम् । तच्चानेककर्मानुष्ठानेऽनुपपन्नम् । न ह्येकस्मिन् कालेऽनेककर्मानुष्ठानोपपत्तिः । न चानुमेयत्वे पूर्वाह्णादिकालस्याङ्गत्वकृतः कश्चिद् विशेषोऽस्ति, पठ्यमानवत् । किञ्च पठ्यमानं कर्मात्मानं कारयितुमक्रियायां प्रत्यवायं कल्पयति । काल्पनिकं पुनः पठ्यमानान्यथानुपपत्त्या कल्प्येत । तच्च कल्प्यकर्माननुष्ठाननिमित्तदोषकल्पनामन्तरेणैवोपपन्नमिति न कल्पनावसरोऽस्ति । अथ क्लृप्तकर्मानुष्ठानावगमानुपपत्त्या कल्प्येत, तदेवंरूपा कल्पना स्याद्— यो ह्यस्मिन् कालेऽष्टकाख्यं कर्म न कुर्यात् स प्रत्यवेयादिति । एवं सति तदाख्यैककर्मकरणेऽपि कृती स्यात् । न चैकैकत्र कल्पनाहेतुसद्भावादनेककल्पनाप्रसङ्ग इति शक्यं वक्तुम्। तस्यैककल्पनायामप्यविरोधात् । अथागृह्यमाणविशेषत्वादनेककल्पनमित्युच्यते । तदेकशाखापठ्यमानविषयत्वादेकैकशाखाधिगतत्वेऽनुपपन्नम् । नहि भिन्नशाखाधिगतत्वेऽप्यगृह्यमाणविशेषतास्ति । पठ्यमानेऽप्येतत् समानमिति चेत् । न। तस्य स्वमहिम्नैवानुष्ठापकत्वात् । इह तु स्वरूपस्यान्यतोऽधिगतेर्वैषम्यम् । किञ्च, अनुष्ठानोपपत्त्यर्था कल्पना । न चैककर्तृविषयतया सर्वकर्मानुष्ठानाभ्युपगमे तदुपपत्तिः । नहि स्वहेतुविरोधिन्यः कल्पनाः संभवन्ति । प्रत्यक्षाध्ययने त्वप्राधान्यात् कालस्य प्रसक्तावपि विरोधः परिह्रियेत, न त्वनुमेयत्वेऽपि । अतः सूक्तमेककरणेऽपि कृती स्यादिति । विरोधादर्शनात्तु चतस्रोऽष्टकाः क्रियन्त इत्यनवद्यम् । एवंच सामान्यतः कार्यावगमः । क्वचिच्च प्रत्यक्षतोऽपि पठ्यमानत्वेन सामान्यतः कार्यावगतौ मन्त्रार्थवादा विशेषसमर्पका भवन्ति । तान्यपि स्मृतिमूलानि । यथा — "एतद्‌ खल्वद्धा तपः यदहिंसा यद्दमो यद्दानं यदतिथिसपर्या । अथ परमं तपो भूतानां यदनुजिघृक्षा तस्मादेवंवित् सर्वेषां भूतानामद्धोपकुर्याद्" इति ब्राह्मणम् । अद्धोपकारश्च दृष्टकारणरहित उपकारः । तद-

१. 'च एवंधर्मा', २. 'च्येत त' ख. पाठः.

पेक्षितप्रकारविशेषो मन्त्रार्थवादैरन्यपरैरपि प्रतिपाद्यमानो नापेशलः । यथा — "खलयोदकं परिगृह्णन्ती"ति तटाकादिकरणम् । 'धन्वन्निवे'ति च प्रपाकरणम् । यत्तु फलवत्प्रयोगान्तर्गतेः कल्प्यमानस्यापि तादर्थ्यमिति । तल्लिङ्गेन प्रकरणस्य बाध्यमानत्वादचोद्यम् । यमनियमास्तु प्रायशः प्रत्यक्षमूला एव । यत्र पुनः प्रत्यक्ष तदनुपपत्तौ कल्पम वा न सामान्यकरणमस्ति, तत्राप्यन्यपरत्वान्मृषार्थत्वेन चोपपन्नत्वान्न मन्त्रार्थवादा. स्वान्वितपदार्थसत्यताभाजो भवन्ति । तेनासदागमैर्वैषम्यम् । स्मृतयोऽपि च तद्रूपा एव बाध्यन्ते । न चैतावता समूलत्वेऽपि तन्मिथ्यात्वकल्पनेत्यल प्रसङ्गेन । सर्वथा वेदमूलत्वं स्मृतीनामुपपन्नम् । शक्यते चैव सति स्मृतीनामविज्ञातत्व वक्तु, काल्पनिकत्वात् । कल्पनानिमित्तमेवगर्वेदादय', न व्यपदेशकारणम् । तथा च मनुः "स सर्वोऽभिहितो वेदे" इत्याद्यभिधानमन्त्र ब्रुवन् कल्प्यत्वाद् विशेषैर्वेदव्यपदेशो नास्तीति दर्शयति, आपस्तम्बश्च "ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते" इति वदस्तेषा मूलसत्यताम् । उत्सन्ना इव प्रयोगादनुमीयन्त इत्यर्थ. । स्मार्तव्यपदेशानादिता चैवमुपपद्यत इत्येषा दिक् । विरोधे चैव बाध उपपन्नतरो भवति । अन्यथा तु विरोधे विकल्प. स्यात् । न च भवत्विति शक्य वक्तु, शिष्टानभ्युपगमात् । ननु विपरीत. शिष्टाभ्युपगमः । न खलु स्मृतिविरुद्ध श्रुत्युक्तमप्याद्रियमाणा दृश्यन्ते । तथाहि —

> गोवध नानुमन्यन्ते श्रुत्युक्तमपि तद्विदः ।
> तस्योपपातकश्रैष्ठ्य स्मृतौ यस्मादुदाहृतम् ॥
>
> करण च श्रुतेर्ज्ञात ज्योतिष्टोमादिकर्मणाम् ।
> स्तेयाद्यर्थार्जनेनापि न तत् स्मृतिविरोधतः ॥
>
> मैव न खलु शिष्टाना क्वचित् स्मृतिविरोधतः ।
> श्रुत्युक्तार्थाननुष्ठान दृष्टमल्पीयसामपि ॥
>
> नहिच्छागवध तज्ज्ञा न कुर्वन्ति निवारितम् ।
> अवारित. स चेत् स्मृत्या गोवधोऽपि हि तत्समः ॥

स्मार्ता हि विधयः सर्वे श्रुत्युक्तव्यतिरेकिणः ।
तेन स्मृतिविरुद्धत्वं नाननुष्ठानकारणम् ॥
स्मार्तोऽपि गोवधोऽस्त्यर्घ्यमर्हयेत् प्रथमं गवा * ।
नित्यानि चाष्टकादीनि हेतुस्तदकृतौ च यः ॥
वेदमूलबलं वापि भ्रान्तिर्वा वैदिके च सः ।
न तु स्मृतिबलाच्छिष्टा न कुर्युः कर्म वैदिकम् ॥
अर्धास्तमित आदित्ये प्रारम्भार्क्षविभावनात् ।
जपः स्मृत्युदितस्त्यक्तो विरोधादग्निहोत्रिभिः ॥
अनुष्ठानाननुष्ठाने कारणं न बलाबले ।
मा भूद् धर्मः खरारूढवस्त्रसञ्छादनाद्यपि ॥
वेदमेव त्वदृष्टार्थे प्रमाणं मन्यते मनुः ।
प्रमाणं परमं धर्मे श्रुतिरित्यादिभाषणात् ॥
मन्यन्ते चातिदौर्बल्यं स्मर्तारः श्रुतितः स्मृतेः ।
धर्ममूलतया वेदं वदन्तस्तद्विदामिति ॥
तेन वेदविरुद्धायाः स्मृतेर्बाध इति स्थितिः ।
श्रूयमाणविरुद्धत्वात् कल्पनानुपपत्तितः ॥
प्रत्यक्षोऽप्युपकारादिविधिः सामान्यगोचरः ।
यायादालोच्य दौर्बल्यं विशेषविषयां स्मृतिम् ॥
विध्यर्थानन्यथाभावक्लृप्तैः प्रायो विधायकैः ।
दशभिर्बहुधा भिन्नैः स्मृतयः संप्रवर्तिताः ॥

प्रत्यक्षतः कल्पनया च सम्यक् सिद्धस्य सामान्यविधायकस्य ।
मन्त्रार्थवादैर्विधिभिश्च कुर्याद् द्वयानुमेयैः परिपूरणानि ॥
इत्थं च गाढं नृकृतत्वपङ्कं विधूय धर्माख्यहिरण्यमाला ।
आम्नायसूर्यांशुविकासितानि बिभर्ति विध्यर्थसरोरुहाणि ॥

---

* "तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।
स्रग्विणं तल्प आसीनमर्हयेत् प्रथमं गवा ॥" (मनु० ३. ३)

एवं प्रामाण्यमालोच्य वेदमूलतया स्मृतेः ।
ते सर्वार्थेष्वमीमांस्ये इत्याह भगवान् मनुः ॥ ७ ॥

नन्वेवं सति "धर्ममूलमिदं स्मृतमि"ति वचनादर्थादेर्मूलं न प्राप्नोति । नैवम् । धर्मपदस्य प्रदर्शनार्थत्वात् । अथापि धर्ममात्र एव धर्मपदं स्यात् । तथाप्यर्थकामौ तावच्छास्त्रनियतौ धर्म्यावेव । अपवर्गस्यान्यत्वमिति चेत् । तदप्यसत् —

## इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
## अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ८ ॥

इज्येति यागादीनां वैदिकानामुपलक्षणम् । आचार इति स्मार्तानां सोपनिबन्धानामनुपनिबद्धानां च । दम इन्द्रियसंयमः । अहिंसा यज्ञाद्यातताय्यिव्यतिरेकेण । दानं प्रसिद्धम् । स्वाध्यायो ब्रह्मयज्ञः । एषां कर्मणां धर्म्यत्वं यद्यपि प्रसिद्धं, तथाप्यल्पधर्मोऽयं, धारणाल्पत्वेन योगक्षापेक्ष्यात् । अयमेव परमो धर्मः यद्योगेनात्मदर्शनम् । मनोवृत्तिसन्निरोधो योगः । तेन यदाब्रह्मस्येनात्मदर्शनं तदेवात्यन्तिकधारणत्वेन परमो धर्मः । तस्मात् सिद्धमर्थादीनां शास्त्रावसेयत्वम् । कस्मात् पुनः श्रुतिस्मृत्यन्तर्गतत्वेऽपि दमादीनां पृथगुपन्यासः । स्मार्तत्वप्रदर्शनार्थः । आचारः स्मार्तानां ग्राहकः, तानि पुनर्दमादीन्यपि । अत एव ब्रह्मयज्ञोऽप्यत्रैवोदाहृतः । प्रत्यक्षश्रुतिपाठेऽपि स्मार्तत्वाद् गाथादिलक्षणः शूद्रस्यापि कथं स्यादिति । सर्वाधिकारार्थं वा दमादीनां पृथग् विधानम् । आचारशब्देन त्वष्टकादीनां त्रैवर्णिकार्थानां ग्रहणम् । तथा चाहुः —

"अहिंसा सत्यमक्रोधः शौचमिन्द्रियनिग्रहः ।
एष साधारणो धर्मश्चातुर्वर्ण्ये प्रकीर्तितः ॥"

इति । सत्यमिति चात्र व्याहृत्युपलक्षितो ब्रह्मयज्ञः[1] परिगृह्यते । सत्यवचनस्येन्द्रियनिग्रहादेव लब्धत्वात् । तथा च वक्ष्यत्येतत्—"पञ्चयज्ञान् न हापयेदि"ति । अथवा इज्येति संस्कारोपलक्षणम् । आचार इत्यात्मगुणानाम् । दमादयस्तूदाहरणार्थाः । समानमन्यत् । अपवर्गनिरूपणार्थश्चाय

---

१. 'मस्तेय शौ' ख. पाठ .

श्लोकः । तदेतदृचाप्युक्तं—"तमेवं विदित्वा मृत्युमत्येती"ति । स्मृतिश्चात्मज्ञानं प्रकृत्याह —

"तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः"

इति । सर्वं चैतत् श्रुतिस्मृत्यवसेयमिति तयोः सूक्तं धर्ममूलत्वम् ॥ ८ ॥

ननु च श्रुतिस्मृत्योरबोधकत्वेऽपि पुरुषसामर्थ्यापेक्षया प्रतिभानतोऽर्थनियमः । तथा ह्येकस्मादेव वाक्यादन्यथा चान्यथा च प्रतिपन्ना दृश्यन्ते । एवं चैव सति धर्मनिर्णयः । तदुक्तं — "धर्मस्य तत्त्वं निहितं गुहाया"मिति । सत्यमेवं, यदि निर्णयोपायो न स्यात् । अस्ति ह्युपायः —

**चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा ।**
**सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः ॥९॥**

चत्वार इति नियमः पञ्चादिव्यावृत्त्यर्थः, महासमवाये निश्चयक्लेशात् । वेदविदो धर्मशास्त्रविदश्च वेदधर्मज्ञाः । पारार्थ्याच्च ज्ञानस्य न तन्मात्रावसायिनः, किं तर्हि, ज्ञानिनोऽनुष्ठातारश्च ते सविवेकाः परिषत् । त्रैविद्यं वा । त्रयी विद्या ऋग्यजुस्सामलक्षणा यस्मिन्, तत् त्रैविद्यम् । त्रय ऋग्यजुःसामपारगा इत्यर्थः । पुरुषसंख्यानियमाच्चाथर्ववेदाध्ययनमविरुद्धम् । अस्मिंश्च पक्षे ये प्रतिवाक्यं श्रुतिस्मृत्योर्मूलमूलिभावं जानन्ति, ते गृह्यन्ते । एवकारस्त्वप्यर्थः । स च संभावनायाम् । वाशब्दोऽभ्यर्हितत्वेन विकल्पद्योतनार्थः । त्रयोऽपि यदि भवन्ति द्वौ वा यदि स्याताम् एकोऽपि वाध्यात्मवित्तमः । स हि सम्यग् वेत्तानन्यथावक्ता च । तथा चोक्तम् —

"एकोऽपि वेदविद् धर्मं यं व्यवस्येद् द्विजोत्तमः ।"

इति । आत्मयाजिनोऽपि गृहस्था ब्रह्मविदो नैष्ठिकाश्च ब्रह्मचारिणः वनस्थाश्च । तदर्थमध्यात्मवित्तम इत्युक्तं पराश्रमाभिप्रायम् । नन्वेतदयुक्तं, स खलु हिंसानुग्रहयोरनारम्भीति । को वा तमारम्भिणमाह । अभिगम्य तु समये पृष्टः सोऽपि ब्रूयादित्युक्तमस्माभिः । तथा च व्यासः —

---

1. 'मूलं नि' ख. पाठः.

"सर्वभूतगणाद्रोही चरेदव्याहरन्नपि ।
पृष्टोऽन्यैः साधुभिर्ब्रूयात् पृच्छेदन्यांश्च संशये ॥"

इति । यत्तु 'प्रागुत्तमात् त्रय आश्रमिण' इति, वैखानसाभिप्रायं तद् भिक्षोः समवायप्रतिषेधाद् दशावरादिविषयं द्रष्टव्यम् । तत्रापि तु यदि कश्चित् स्वनियमातिलङ्घनेन समवेयात् ततः परिषत् सगुणैव । तथा चाङ्गिराः—

"ब्रह्मचार्याश्रमादूर्ध्वं त्रय आश्रमिणः स्मृताः"

इत्याह । वाशब्दद्वयाच्च द्वौ वेत्युक्तम् । पूर्वापेक्षया च तौ प्रकृष्टगुणौ द्रष्टव्यौ । तथा चाहुः—

"चत्वारस्तु त्रयो द्वौ वा यद्वैकः स्यादनिन्दितः ।
यतिनामव्यविद्यानामेकोऽपि परिषद्भवेद् ॥"

इति । सा परिषदन्योन्यं विमृश्य सम्यगवधार्य यद् ब्रूते स धर्मः स्यात् । स निर्विचिकित्स्यो धर्म इत्यवगन्तव्यम् । तथा च गौतमः— "यच्चात्मवन्तो वृद्धाः सम्यग्विनीता डम्भलोभमोहवियुक्ता वेदविद आचक्षते तत् समाचरेद्" इति । शङ्खोऽप्याह—"श्रुतिविरोधे त्रैविद्यसमवायेषु निर्णयः" इति, "यथाबलेपं शास्त्रतस्तेऽनुब्रूयुरि"ति च । यत्तु पञ्चावरा दशावरा वा परिषद् धर्मप्रवक्तृभिरुक्ता, सा महापातकादिप्रायश्चित्तविषया द्रष्टव्या । शुद्धयशुद्धयोस्तत्र प्रकाश्यत्वात् । या त्वेकविंशत्या शतेनाङ्गिरसाभिहिता, सा किल भूयांसो ब्राह्मणाः, ते यत् ब्रूयुस्तत् तथैव भवतीति श्रद्धामात्रेणेति मन्तव्या, गायत्रीमात्रसारैश्चीर्णव्रतैरपि धर्मस्य निर्णेतुमशक्यत्वात् । पूर्वोक्तपरिषत्प्रशंसार्थं वा, अविदुषां निन्दार्थम् । तथा चोक्तं—"नेतरे तु सहस्रशः" इति । गुणवद्विषयत्वे वा कार्यगौरवज्ञापनार्थम् । यत्तु

"राज्ञां (तु) सैव द्विगुणा वैश्यानां त्रिगुणा स्मृता"

इति । तत् क्षत्रियवैश्ययोः प्रायश्चित्तदाने यत्नातिरेकार्थम् । आपद्विषयं वा । प्रायश्चित्तस्य चावश्यकार्यताज्ञापनार्थम् । परिषदि वाचावेदननियमार्थं वा ।

१. 'यम्', २. 'वा अथवा अ' ख. पाठ।

यत्तु क्षत्रियादिप्रायश्चित्तदाने पुरोहिताद्यधिकारः, अन्येषां च प्रायश्चित्तमिति तत् प्रायश्चित्तप्रकरणे वक्ष्यामः । सर्वथा परिषदि धर्मनिर्णयः । अल्पापि च प्रकृष्टगुणा परिषत् प्रशस्तेत्याचार्याभिप्रायः । न्यायमूलत्वात् परिषन्निर्णयार्थस्मृतेरनेकार्थत्वमविरुद्धम् । अनयैव दिशा विवेकः कार्यः ॥ ९ ॥

इति उपोद्घातप्रकरणम् ।

---

## अथ ब्रह्मचारिप्रकरणम् ।

उक्तं धर्मादीनां स्वरूपं प्रमाणं च । इदानीं तत्साधनानि वाच्यानि । तत्र च क्रियामात्रसाधारण्यात् कर्तुः पूर्वमभिधानं युक्तमित्यत आह—

**ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।**
**निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥१०॥**

ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा इति व्यवहारार्था परिभाषेयम् । तुशब्दोऽपकृष्यावधारणार्थो व्याख्येयः । आद्यास्त्रयो द्विजा इतीयमपि संज्ञा पूर्ववत् । ननु चाद्या द्विजा इत्येतावद् वाच्यं, बहुवचनात् त्रित्वावगतेः । सत्यमेवम् । रथकारव्यावृत्त्यर्थस्त्रिशब्दः । यत्तु स्मृत्यन्तरे रथकारस्योपनयनस्मरणं, तदाधानाधिकृतत्वाद् भ्रान्तेरित्यवसेयम् । विकल्पो वास्तु । नेत्याचार्यः । तेषां द्विजातीनां निषेकादारभ्याग्निसञ्चयनाद्[*] मन्त्रतः क्रिया भवन्ति । शास्त्रतः इत्यर्थः । तृतीयार्थे पञ्चमी द्रष्टव्या । वैशब्दो हेत्वर्थः । यस्मान्मन्त्रार्हं तेषामुपनयनाख्यं जन्म, तस्मान्मन्त्रैर्वत्यः क्रिया भवन्तीति ॥ १० ॥

काः पुनस्ताः क्रियाः, कस्मिन् काले कर्तव्या इत्यत आह—

**गर्भाधानमृतौ पुंसस्सवनं स्पन्दनात् पुरा ।**
**षष्ठेऽष्टमे वा सीमन्तो मासेऽन्ते[†] जातकर्म च ॥ ११ ॥**

---

१. 'र्याभिप्रायः । ने' ख. पाठः. २. 'न्ततः किं' घ. पाठः.

---

[*] अग्निसञ्चयनमारभ्य पदच्छेदः । [†] 'मास्यन्ते' इति पाठ इत्वा "एवं अत इति भागे गर्भकोशात् कुमारे जाते जातकर्म" इति मिताक्षरा ।

गर्भाधानाख्यः प्रथमः संस्कारो निषेकलक्षणः । स चर्तौ कार्यः । सामर्थ्यादृतुर्वक्ष्यमाणो न वसन्तादिकः । पुंसवनाख्यो द्वितीयः संस्कारः । स च प्राग्गर्भस्पन्दनात् । तथा च पारस्करः — "अथ पुंसवनं पुरा स्पन्दनादि"ति प्रथमकल्पमाह । षष्ठे गर्भमासेऽष्टमे वा सीमन्तोन्नयनाख्यस्तृतीयः । अतः परं नाम्नैवागतकालं जातकर्म भवति । चशब्दात् सोष्यन्तीकर्म च । तथा चाह — "सोष्यन्तीमद्भिरभ्युक्षति जातस्य कुमारस्य चे"ति । एते च संस्काराः कार्त्स्न्येन गृह्यादवगन्तव्याः । प्रतिगर्भं चापसीमन्तोन्नयनाः* प्रवर्तन्ते । तस्य स्त्रीसंस्कारत्वात् । तत्संस्कारत्वं च "सीमन्तमूर्ध्वं विनयन्ती"ति वचनात् । मन्त्रवर्णाच्च "आजीवं फलिनी भवे"ति, सीमन्तिनीति समाख्यानाच्च । अन्या च स्मृतिः — "सीमन्तोन्नयनं पुंसवनवत् प्रथमे गर्भे मासे षष्ठेऽष्टमे वे"ति । न च तदेवं नेयं प्रथमे गर्भे मासनियमार्थमिति, श्रुतिबाधप्रसङ्गात् । न च स्त्रीसंस्कारत्वेऽपि गर्भनिमित्तत्वादावृत्तिरिति शक्यं वक्तुम् । प्रथमगर्भस्यैव निमित्तभावात् । कार्यशून्यत्वाच्चानावृत्तिः । गर्भाधानं त्वर्थादेवावर्तते । लिङ्गाच्च पुंसवनम् । सोष्यन्तीकर्म तु सुखप्रसवार्थत्वात् । अतोऽवैषम्यम् । अतः सूक्तमपसीमन्तोन्नयनाः प्रवर्तन्त इति । एवंच समाचारानुग्रहः ॥ ११ ॥

किचान्यत् —

**अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।**
**षष्ठेऽन्नप्राशनं मासे चूडा कार्या यथाकुलम् ॥ १२ ॥**

एकादशेऽहनि नाम कर्तव्यम् । एवं निष्क्रमणादपि । तथा चाह — "चतुर्थे मासि निष्क्रमणं करोती"ति । यत्तु "दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोती"ति, दशम्यां व्युष्टायामिति तत्रार्थः । तथा चाह मनुः —

"नामधेयं दशम्यां तु द्वादश्यां चास्य कारयेद्"

१. 'पर ॠ ना' ख घ. पाठ., २. 'च ना' क पाठः ३. 'म्या व्युत्था' घ. पाठः. ४. 'वा' ख. पाठ.,

* अपसीमन्तोन्नयना. सीमन्तोन्नयनव्यतिरिक्ताः (संस्काराः) ।

इति । आनन्तर्यार्थश्चकारः । दशम्यां व्युष्टायां द्वादश्यां वेति द्रष्टव्यम् । अंशजातत्वेनैकादश्यामिति नोक्तम् । तुशब्दाच्चायमेवाद्यः कल्प इति द्योतितम् । अथ तु दशम्यामेवेति तस्यार्थः, तदा यस्य प्राग्दशरात्राच्छुद्धिस्तद्विषयत्वेन द्रष्टव्यं, *सूतकवाक्योपरोधात् । एकादशे त्वविशेषेण प्राथमकल्पिकः । यथाकुलमिति चूडाभिप्रायम् । यथा — "पञ्चचूडा भरद्वाजाः" इति । कालस्त्वङ्गम् । गुरुलाघवं गृह्यादवगन्तव्यम् । अथवा कालाभिप्रायमेवैतज्जातकर्मादिविषयत्वेनापि योज्यम् । यथा — जन्मानन्तरं दशरात्रे वा जातकर्म । एकादशे द्वादशे वाह्नि, शतरात्रे पुण्ये नक्षत्रे वा नामकरणम् । दशरात्रे चतुर्थे मासे वा निष्क्रमणम् । षष्ठे मासे संवत्सरे वान्नप्राशनम् । सवत्सरे सार्धे तृतीये वा चूडाकरणम् । तत्सर्वं यथाकुलं वा कार्यम्, उक्तकालं वा । द्विर्मासग्रहणं तु छन्दःसमाधानार्थम् । ऋज्वन्यत् ॥ १२ ॥

कस्मात् पुनरेषा संस्कारकर्मणा प्रयत्नेनैव नियोगतोऽनुष्ठानम् । उच्यते । यस्मात्—

## एवमेनः शमं याति बीजगर्भसमुद्भवम् ।

मातापित्रोर्जन्यस्य वा नियतनिमित्तवादेनसश्च निराकार्यत्वात् प्रयत्नेनैवं नियोगतः करणम् । गर्भार्थत्वेऽपि चाकरणे मातापित्रोरेव प्रत्यवायः । तथा चाह मनुः —

"वैजिकं गार्भिकं चैनो द्विजानामपमृज्यते"

इति ॥

किं पुनरेताः क्रियाः पुंविषया एव, नेत्याह —

## तूष्णीमेताः क्रियाः स्त्रीणां

अपि कार्या इति शेषः, संस्कार्यत्वाविशेषात् । एता इति सर्वनाम्नोऽतत्शब्दावच्छिन्नजातकर्मादिविषयत्वं द्रष्टव्यम् । गर्भाधानादौ त्वविशेषः । पुंसवनार्थत्वात् तु सोष्यन्तीकर्मणश्चशब्दावगतस्यापि ग्रह-

१. 'सदा' प. पाठ     २. 'प्रथम. कल्पः' ख. पाठः

* ततस्तु नाम कुर्वात पितैव दशमेऽहनि' इति विष्णुपुराण(अं० ३. अ० १०, श्लो० ८) गत सूतकवाक्यमिति ।

णम् । नन्वेवं सति स्त्रीणां मन्त्रहानात् तदुक्तकर्माधिकारो दुःश्लिष्टः स्यात् । वचनगम्यत्वादधिकारस्यैतदचोद्यम् ॥ १२ ॥

न च स्त्रीणामात्यन्तिको मन्त्राभावः । यदि नाम जातकर्मादि तूष्णी—

**विवाहस्तु समन्त्रकः ॥ १३ ॥**

समन्त्रक एव । तस्मादविरोधः । कार्याभावाच्च नपुंसके संस्कारनिवृत्तिः । अर्थलक्षणास्तु नामकरणादयः शूद्रस्यापि प्रवर्तन्ते । तथा च मनुः— "शूद्रस्य प्रेष्यसंयुतम्" इति । अविहिताप्रतिषिद्धत्वात् । "मन्त्रवर्जं शूद्रस्ये"ति शङ्खः । निःशेषतो वा स्त्रीसमत्ववचनादिति केचित् । तत्तु सामान्यतोदृष्टत्वाच्छब्दलक्षणे व्यवहारे नादरणीयम् । एते च संस्काराः स्त्रीणामपि ब्राह्मणादीनामेतेष्वेव कालेषु भवन्ति ॥ १३ ॥

अतः परं तु,

**गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।**
**राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥**

नन्वेतत् पारिशेष्याद् ब्राह्मणस्यैवोपनयनमुक्तम् आद्यास्त्रयो द्विजा इति । अयुक्तं ब्राह्मणग्रहणम् । अथ ब्राह्मणस्य सत उपनयनं, नोपनयनाद् ब्राह्मण्यमिति ज्ञापनार्थमित्युच्येत, तदपि वर्णपरिभाषयैव सिद्धेरसारम् । उच्यते । हेत्वर्थमिदम् । गर्भाधानाज्जन्मनो वाष्टमे वर्षे ब्राह्मणमुपनयेत् । कस्मात् । ब्राह्मणत्वादेव । एवं ह्याम्नायः— "गायत्रो वै ब्राह्मणः, अष्टाक्षरा वै गायत्री, तस्मादष्टवर्षं ब्राह्मणमुपनयीत" इत्यादि । एवं क्षत्रियवैश्यशब्दावपि योज्यौ । हेत्वभिधानं तु श्लोके वसन्तादिकालप्राप्त्यर्थम् । तथा चाम्नायः—"ब्रह्म हि वसन्तः, क्षत्रं ग्रीष्मो, विड् वर्षाः" इति । वसन्तादिसंबन्धं च ब्राह्मणादीनामन्यतः सिद्धं हि शब्देनानुवदन् वसन्ते ब्राह्मणोपनयनं कार्यमिति दर्शयति । यद्यप्येतान्याधानादौ वाक्यानि, तथापि हेत्वर्थोपादानसामर्थ्यमुपनयनापेक्षितकालसमर्पणमविरुद्धम् । मन्त्रवर्णश्च— "गायत्री वामन्तीति गायत्रीछन्दो वसन्तादृतोर्निरमिमीत" इति । अयमेव तस्याप्यर्थः । चरकास्तु स्पष्टतराण्युपनयन एव

पठन्ति । तथा चापस्तम्बस्तान्येवानुकरोति— "वसन्ते ब्राह्मणमुपनयीत" इत्यादि । शङ्खश्च "वसन्तो ग्रीष्मः शरदिति कालाः" इत्याह । वैश्यस्य तु विकल्पः । वेदाध्ययनायाचार्यसमीपे नयनमुपनयनम् । तदेवोपनायनमित्युक्तं छन्दोऽनुरोधात् । तदर्थं वा कर्म । राज्ञामिति क्षत्रियराजशब्दयोरेकार्थत्वज्ञापनार्थम् । एकादशेऽब्द उपनयनं कार्यमिति शेषः । सैके विशामिति । द्वादश इत्यर्थः । एके यथाकुलमिति पुनर्वचनात् परमतोपन्यासः । एके यथाकुलमिच्छन्ति, न वसन्तादौ । वयं त्वष्टवर्षं वसन्ते ब्राह्मणमुपनयीतेति । अनुलोमानन्तरजानामप्येत एव कालाः मातृजातीयव्यपदेशात् "पुत्रा येऽनन्तरस्त्रीजा" इति मनुवचनाद् द्रष्टव्याः । लिङ्गस्य च विवक्षितत्वात् स्त्रीष्वप्रसङ्गः । प्रतिलोमास्त्वनधिकृता एव । तथा च गौतमः— "प्रतिलोमात् तु धर्महीनः" इति ॥ १४ ॥

अथ त्रिमुपनीयानन्तरं वेद एवाध्यापयितव्यः, तादर्थ्यादुपनयनस्य । एवं चतु प्राप्नोतीत्यत आह—

**उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।**
**वेदमध्यापयेत् पश्चाच्छौचाचारांश्च शिक्षयेत् ॥ १५ ॥**

तुशब्दार्थश्चशब्दः । उपनयनानन्तरमेव न वेदमध्यापयेत् । किं तर्हि, पश्चात् । शौचाचारांश्चानन्तरमेव शिक्षयेदित्यभिप्रायः । तथा च मनुः—

"उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥"

इति । यदा त्वध्यापयेत्, तदा महाव्याहृतिपूर्वकम् । महाव्याहृतिशब्देन त्वोङ्कारो व्याहृतयः सावित्री चेति प्रत्येतव्यं, स्मृत्यन्तरात् । यथाह मनुः—

"ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव गायत्री विज्ञेया ब्रह्मणो मुखम् ॥"

इति । गौतमीयं तु सामवेदविषयम् "ओंपूर्वा व्याहृतयः पञ्च सत्यान्ताः" इति द्रष्टव्यं, तत्र हि 'पुरुषः सत्यमि'ति पञ्चानां पाठात् । अथवा महा-

व्याहृतय एव पूर्वं यस्य वेदस्य स महाव्याहृतिपूर्वकः। सापेक्षत्वे समासानुपपत्तेः साविव्यभावः। ओङ्कारस्त्वाद्यन्तयोरविरोधात् कर्तव्य एव। "स्रवत्यनोङ्कृतं पूर्वमि"ति वचनात्। मानवं तु विकल्पेन व्याख्येयम्। ओङ्कारपूर्वा व्याहृतयो ब्रह्मणो मुखं तत्पूर्वा वा सावित्रीति। तथा च समाचारः। गुरुग्रहणं तु मुख्यं पितुरुपनेतृत्वमिति। तथा च श्रुतिः— "तस्मात् पुत्रमनुशिष्टं लोक्यमाहुः" इति। शिष्यग्रहणं तु पुत्रत्वेऽप्यखिलशुश्रूषानियमार्थम्। क्षत्रियवैश्ययोरप्यापत्काले पुत्रोपनेतृत्वाद् गुरुत्वमविरुद्धम्। आचार्योपनयन तु ब्राह्मणस्यानुकल्पः। शौचमाचाराश्च शौचाचाराः। शौचं मनोवाक्कायलक्षणं त्रिविधम्। अप्रतिरूपासङ्कल्पनं मनसः शुद्धिः, पाप्मनेतरस्य विरुद्धत्वात्। साधुशब्दप्रयोगः सत्यवचनं च वाचः। तथा च भारद्वाजः—"न म्लेच्छभाषां शिक्षेत। म्लेच्छो ह्वा एष यदपशब्द इति हि विज्ञायते। तस्माच्छिष्यमुपनीय साधुशब्दाञ्छिक्षयेत् सन्ध्योपासनाग्नीन्धनानि" इत्यादि। कायिकं तु मृद्वारिलक्षणं प्रसिद्धम्। अन्ये तु पञ्च शौचान्याचक्षते। तथाहि—

"सत्यं शौचं मनःशौचं शौचमिन्द्रियनिग्रहः।
सर्वभूतदया शौचं जलशौचं तु पञ्चमम्॥"

इति। आचाराश्चाग्नीन्धनाद्या आश्रमसंबन्धिनः। वर्णसंबन्धिनोऽप्यपाद्याः। शिक्षयेदिति चोपदेशात् प्रागुपनयनादप्रवृत्तिः। तथा च गौतमः— "प्रागुपनयात् कामचारवादभक्ष" इति। यद्यपि कश्चित् प्राज्ञः स्वयं जानीयात्, तस्याप्यनुपनीतस्यानधिकारो गौतमवचनादेव। काललक्षणार्थं चोपनयग्रहणम्। न संस्कारार्थम्। कालस्यापेक्षितत्वात्। वर्णधर्मा हि जन्मानन्तरमशक्त्या बाध्यमानास्तस्याश्च प्रतिपुरुषमनियतत्वादवध्यर्थनियतकालापेक्षिणस्तत्परत्वेनोपनयनश्रुतिं परिगृह्णन्ति। तथा चाथर्वणानां वितानकल्पः "अनेनसः पुरोऽग्रमाद् वसन्तात् कुमारकाः कामं चरन्ति सम्राड्धर्माणः पञ्चत्वयाजिनः" इति कालपरतां दर्शयति। स्त्रीणामप्याविवाहात् कामचारित्वम्। तस्यैव वैदिकत्ववचनात्। यथाह मनुः—

"वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः"

---

१. 'प' ग. ष पाठ

इति । यदा च निश्चितं वैदिकत्वेनोपनयनं विवाहो वा प्रवर्तते, तत्सामान्यात् तदैवान्येऽपि वर्णधर्मा इत्यवसेयम् । तथा न्यायविदो याज्ञिकाः पठन्ति—"अपि वा वेदतुल्यत्वादुपनयनेन* प्रवर्तेरन्" इति । शूद्रस्य त्ववध्यर्थकालानुपदेशात् सामर्थ्यं नियामकं, षोडशाब्दं वा प्राग्बालत्वस्मृतेः "बालो वाप्यूनषोडश" इति । ब्राह्मणानामपि परमोपनयनकालात् प्रागनुपनीतानां कामचारित्वं केचित् स्त्रीणां चतुर्त्रयात्, स हि परमो विवाहकाल इति । तत्तु प्रमाणशून्यत्वान्नातीवानुमन्यते, प्राथमकल्पिककाललक्षणायैवोपनयनं यतः । तथा चानेनसः पुरोऽष्टमादित्युक्तमेवेत्यलं प्रसङ्गेन ॥ १५ ॥

इदानीं शौचाभिधित्सया तन्निमित्तत्वान्मूत्रपुरीषोत्सर्गविधिमाह—

**दिवासन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।**
**कुर्यान्मूत्रपुरीषे तु रात्रौ चेद् दक्षिणामुखः ॥ १६ ॥**

दिवा सन्ध्ययोश्च कर्णारोपितयज्ञोपवीत उदङ्मुखो मूत्रपुरीषे कुर्यात् । रात्रावप्येवम् । दक्षिणामुखत्वं तु विशेषः । चेच्छब्दाद् यदा कुर्यात् तदैवमिति गम्यते । तुशब्दोऽवधारणार्थः । मूत्रपुरीषे एवैवं कुर्यात्, नान्यदपि रेतउत्सर्गादि । यद्वा चशब्दार्थे स्मृत्यन्तरोपसङ्ग्रहणाय । यथाह शङ्खः—"वाग्यतोऽवगुण्ठितशिरा भूमिमन्तर्धाय मेहेद्" इति । उपविष्टश्च, उत्थानवचनात् ॥ १६ ॥

किं पुनस्तस्मिन्नेव देशे शौचं कर्तव्यम् । नेत्याह—

**गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।**
**गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ १७ ॥**

चशब्दात् पूर्वमपि गृहीतशिश्नः कुर्यात् । उत्थाय तस्माद् देशात् । मृद्भिरभ्युद्धृतैर्जलैः शौचं कुर्यात् । मृद्भिरिति बहुवचनं स्मृत्यन्तरोक्तपरिमाणप्राप्त्यर्थम् । यथाह मनुः—

"एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश"

१. 'नियत', २. 'वर्तत' घ. पाठ.

* 'उपनयनेन' इत्यस्य स्थाने 'उपायन' इति मामांसकग्रन्थेषु पठ्यते ।

इति । यत्तु स्मृत्यन्तरोक्त "पञ्चापाने" इति, तदग्निहोत्रिविषय द्रष्टव्य, पुलस्त्यवचनात् —

"स्नातकस्य त्रयोऽपाने पञ्चापानेऽग्निहोत्रिण ।
सर्वानेव गृहस्थेषु शौचकल्पान्नियोजयेद् ॥"

इति। एतदेव द्विगुण नैष्ठिकस्य त्रिगुणमपत्नीकवनस्थस्य चतुर्गुण ज्ञानभिक्षोः । मानवात्तु द्विगुणादुपकुर्वाणादीनाम् । यथाह व्यास —

"शुक्ल धौत यथा वस्त्र मलिन तद्भवेत् पुन ।
निर्मल तु भवेत् क्लेशात् स्त्रीपुवर्णाश्रमास्तथा ॥
प्रायश्चित्त च दण्ड च शौच चातो यथाक्रमम् ।
कल्प्यमुत्कृष्टमुत्कृष्टे मध्य मध्येऽधमेऽधमम् ॥"

इति । यत्तु मृद्विशेषपरिमाण दक्षोक्तम् —

"अर्धप्रसृतिमात्रा तु प्रथमा मृदुदाहृता"

इति, तत् नित्वे सति गन्धलेपापकर्षणे च विरोधात् पूर्वा पूर्वा भूयसी परा परा मृदल्पेत्येवमुपलक्षणार्थं विज्ञेयम् । यत्तु तत्रैव मूत्रशौचम्—

"एका लिङ्गे तु दातव्या तथैकत्र करे त्रय "

इति, तत् केवलमूत्रविषयम् । अन्यत्र करशौचस्य तान्त्रिकत्वात् । सर्वाश्रमाणा चैतदेव मूत्रशौच, विशेषानभिधानात् । गृहस्थस्य चेतदिति न द्विगुणकल्पना । तथा मृल्लक्षणमप्यन्वेष्य—

"वल्मीकाखूत्करो(त्के?)* वा जलात् पथि कृता च या ।
कृतशौचावशिष्टा च षड्भि शौच न विद्यते ॥"

इत्यादि । अभ्युद्धृतैर्जलै, जलाशयात् पाण्यादिना । गन्धलेपक्षयकरमिति । तथा मृद् ग्रहीतव्या, यथा तिसृभिरेव गन्धलेपक्षयो भविष्यतीत्यर्थ. । श्लेष्मादिविषय चैतद् द्रष्टव्यम्, अन्यत्र गन्धापकर्षणादेव लेपापकर्षण सिद्धे । अतन्द्रित. अनलस । यथाविहित शौच कुर्यादिति विधि.[१] न यदेत्यर्थ (?)। यद्वा मृद्भिरद्भिश्च यथाविहित शौच कुर्यु । विहितपरिमाणा-

१ 'ध कुर्यात्। न' घ ङ पाठ

* 'वल्मीकाखूत्करोत्थ' इति पाठ स्यात्। तत्र ऊध ऊत्थ खातमृत्तिका।

भिर्यथाश्रमं शौचं कुर्यात् । यस्य तु विशेषपरिमाणं नाम्नातं स मृज्जलै-र्गन्धलेपक्षयकरं शौचं कुर्याच्छूद्रादिः । तथा च पितामहः—

"त्रिषु ये नोपनीयन्ते शूद्राः सौधन्वनाः स्त्रियः ।
*गन्धलेपापक(र्षणं?) तेषां शौचं मृदम्भसा ॥"

इति ॥ १७ ॥

एवं तावन्मूत्रपुरीषलक्षणं शौचं निर्दिश्य तस्माद् देशादपक्रम्य पादौ प्रक्षाल्य ततः—

**अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः ।**
**प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥**

प्राग्वा प्राङ्मुखो वेत्यर्थः । स्मृत्यन्तराच्च बद्धशिखो बद्धकक्ष्य आमणिबन्धनात् पाणी प्रक्षाल्य ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् । तथा च गौतमः— "प्राङ्मुख उदङ्मुखो वा शौचमारभेत । शुचौ देश आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्यामणिबन्धनात् पाणी प्रक्षाल्य वाग्यतः" इत्यादि । द्विजग्रहणं स्त्र्यादिव्यावृत्त्यर्थम् । नित्यशब्दात् सर्वाश्रमेष्वयमेवाचमनकल्पः । सूतकादावप्यनिवृत्तिरित्यन्ये ॥ १८ ॥

ब्राह्मेण तीर्थेनेत्युक्तम् । तस्य चार्थाभिव्यक्त्यर्थमाह—

**कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।**
**प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥**

प्रासङ्गादन्यान्यपि तीर्थानि कार्योपयिकत्वादुच्यन्ते । तीर्थमिति च दक्षिणहस्तेऽवतारप्रदेशनामधेयम् । लोकेऽप्युदकाद्यवतारे तीर्थशब्दः प्रसिद्धः । तानि च विनियुक्तकार्योपयिकत्वात् स्तुत्यर्थं देवताभिराख्यायन्ते । अर्थतश्चतुर्णामवगतानां व्यवहारार्थं विशेषसंज्ञाः कथ्यन्ते । कनिष्ठामूले प्राजापत्यम् । देशिनीमूले पित्र्यम् । देशिन्यङ्गुष्ठानन्तराङ्गुलिः । तस्याङ्गुष्ठस्य चान्तराल इत्यर्थः । ब्राह्मं त्वङ्गुष्ठमूले । कराग्रे दैवम् । तत्र ब्राह्मेणोपस्पृशेदिति प्रकृतसम्बन्धः । तथा च शाट्यायनकः कल्पः— "दक्षिणे ब्राह्मणहस्ते पञ्च तीर्थानि भवन्ति । प्राङ्मुखश्चेत् पुरस्ताद् दैवं,

---

* [illegible]

दक्षिणतः पित्र्यं, पश्चाद् ब्राह्मम्, उत्तरतः प्राजापत्यं, मध्ये पारमेष्ठ्यम्" इत्यादि । वृद्धवासिष्ठेऽप्येवमेव। मध्ये सौम्यमिति तु विशेषः। आचार्यस्य पञ्चतीर्थानभिधानं तस्य कमण्डलूपस्पर्शनादिविनियोगेनाल्पप्रयोजनत्वात्। ब्राह्मणग्रहणं चोदाहरणोपलक्षणार्थम् अन्यपरत्वात् । सव्ये पाणौ विरोधात् तीर्थाभाव एव । अतश्च ब्राह्मोपदेशादेव दक्षिणेनाचमनमिति ज्ञायते । तथा चोक्तं — "दक्षिणेनाचमनम्" इति ॥ १९ ॥

उपस्पृशेदित्युक्तम् । साधारणश्चाल्मनश्चानिपूपस्पर्शनशब्द. । तस्य गुणविधानतो वाक्यशेषान्निर्णयः। तानि पुनस्तानि गुणविधानान्याह —

## त्रिः प्राश्यापो द्विरुन्मृज्यात् खानि चोर्ध्वमुपस्पृशेत् ।

त्रिरपः पीत्वा द्विरुन्मृजेत् । उच्छब्दः परेरर्थे, दृष्टार्थत्वात् । अत एव परिमार्जन मुखस्य, खानि चोर्ध्वमुपस्पृशेदिति वचनात् । ऊर्ध्वमिति। खानि शीर्षण्यानि चक्षुरादीन्युच्यन्ते । चशब्दादधश्च, "पादावुक्षेन्मूर्धनि च दद्यान्नाभिं चोपस्पृशेद्" इति स्मृत्यन्तरानुसारात् । पूर्वं च पादाभ्युक्षणं तत इन्द्रियालम्भः । उपशब्दप्रयोगाच्च बहिः स्पर्शने, नाक्ष्णोः । अत्र प्रकृतत्वादद्भिः । दक्षाद्युक्तश्चाङ्गुलीनियमोऽनुरोद्धव्यः । अविशेषाच्चशब्दसामर्थ्याच्चाचमनप्रयोगभेदोऽपि । यथा—"संहताभिस्तिसृभिः पूर्वमास्यमेवमुपस्पृशेद्" इत्यादि ॥

द्विलक्षणा. पुनरपि आचमनयोग्यास्तदाह—

## अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ २० ॥

अद्भिरिति पुनः श्रुतिर्गुणार्था । तुशब्दो विवेकार्थः । अद्भिरेव नान्यसंसृष्टाभिः । तथा च शङ्खः— "उद्धृत्य परिपूताभिः" इति । प्रकृतिस्थाः स्वभावतः स्थिताः अक्षारा अशृताश्चेत्यर्थः । तथा चापस्तम्बः— "न तप्ताभिश्चाकारणाद्" इति । आतपादितप्तास्तु जलाशये न दुष्यन्ति। मानवं च "अनुष्णाभिः" इति । शङ्खवचनादशृताभिरिति व्याख्येयम् । तथा चातुरापवादः —

---

१. 'स्वाचाद्भि' ख घ पाठ   २. बहि' ख. पाठ

"अनापदि द्विजातीनामशृतेन यथाम्भसा ।
तद्वदेव भवेच्छुद्धिः शृतेन शृतपायिनाम् ॥"

इति । "न तप्ताभिश्चाकारणाद्" इत्यस्याप्ययमेवार्थः । ऋज्वन्यत् ॥ २० ॥

किं पुनस्तासां परिमाणम् । उच्यते —

**हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।**
**शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१ ॥**

तुशब्दात् प्राग्हृदयप्राप्तेरशुद्धिः, न परतो गमने । स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः । पूर्वश्चकार उत्कृष्यैवकारार्थो व्याख्येयः । स्पृष्टाभिरेवेत्यर्थः । ततश्चान्यपरिसंख्यानादिन्द्रियालम्भनादिनिवृत्तिः । परिमार्जनं तु दृष्टार्थत्वात् प्रवर्तते । तथा च बौधायनः— "न बुद्बुदाभिर्न फेनाभिर्न कलुषाभिर्न हसन्न जल्पन्न तिष्ठन्न विलोकयन्न प्रह्वो न प्रणतो न मुक्तशिखो नावद्धकक्ष्यो न बहिर्जानुः शब्दमकुर्वन् त्रिरपो हृदयङ्गमाः पिबेद् द्विः परिमृज्यात् । त्रिरित्येके । सकृदुभय शूद्रस्य स्त्रियाश्च" इति सकृत् परिमार्जनं दर्शयति । अन्ततो जिह्वयेत्यर्थः । तृतीयार्थे पञ्चमी ॥ २१ ॥

एवं तावदाचमनविधिमुक्त्वानन्तरं स्नानादिविधिमाह —

**स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।**
**सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥**

कार्य इति शेषः । स्नानं प्रत्यहं कुर्यात् । तस्य च विधिराचार्येणैवान्यत्राभिहित[१] ।

"नियमेन प्रभूते हि सलिले स्नानं समाचरेद्"

इति । उभयात्मकं हि स्नानं शौचमाचारश्च । तत्र केचित् पञ्चविधमाहुः "आग्नेयं वारुणमि"त्यादि । तत्पुनर्गृहस्थस्यापद्विषयं द्रष्टव्यम् । इह त्वम्भसैव स्नानं दण्डवदाप्लववचनाद् ब्रह्मचारिणः । सन्ध्योपासनादयस्त्वाचाराः । तत्रायं सन्ध्योपासनविधिः—अब्दैवतैर्मन्त्रैर्मार्जनम् "आपो

---

१. 'त्यादि । ' ङ्. प. पाठः.

हि ष्ठ"त्येवमादिभिः । प्राणसंयमश्च वक्ष्यमाणः । सूर्यस्य चाप्युपस्थानं, चशब्दाद् द्रुपदायाश्च* । तथाच सन्ध्योपासनविधौ हारीतः —

> "यतः प्राणान् समाधाय त्रिर्जपेद् द्रुपदामृचम् ।
> त्रिसन्ध्यमेनसो मुक्तो दीपिकेव विराजते ॥"

इति । सूर्योपस्थानंच सौरीभ्यामृग्भ्याम् । यथोक्तम्—

> "आपोहिष्ठातृचेनाद्भिर्मार्जयित्वा शुचिर्नरः ।
> अथोदुत्यमिति द्वाभ्यामुपतिष्ठेत भास्करम् ॥"

इति । सावित्री च गायत्रीं "तत्सवितुरि"त्योङ्कारव्याहृतिपूर्विकां प्रत्यहं जपेत् । तथा च मनुः—

> "एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् ।
> सन्ध्ययोरुभयोर्विप्रो वेदपुण्येन युज्यते ॥"

इति । अपिशब्दात् स्नानाद्यपि नित्यम् । स्नानं च दण्डवदाप्लवनं ब्रह्मचारिणोऽविरुद्धम् । गौतमीयं तु सुखार्थस्य प्रतिषेधः । तथाचापस्तम्बः "नाप्सु श्लाघमानः स्नायाद्" इत्यदृष्टार्थमनिषिद्धमिति दर्शयति । एव मनुः—

> "नित्यं स्नात्वा शुचिः कुर्याद् देवर्षिपितृतर्पणम्"

इति । देवतर्पणादिप्राप्त्यर्थो वापिशब्दो व्याख्येयः, अस्मादेव मनु-वचनात् ॥ २२ ॥

प्राणायाम कर्तव्य इत्युक्तम् । तत्स्वरूपमाह —

**गायत्रीं शिरसा सार्धं जपेद् व्याहृतिपूर्विकाम् ।**
**†प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ २३ ॥**

‡महर्जनस्तपः सत्य भूर्भुवः सुवस्तत्सवितुर्वरेण्यमित्यृचम् ।
"सावित्र्याश्च शिरः पुण्यमापो ज्योती रसोऽमृतम्"

---

* 'द्रुपदा ऋक् च ' द्रुपदादिव-मुमुचान स्विन्नः स्नात्वी मलादिव । पूतं पवित्रेण-वाज्यम् आपः शुन्धन्तु मैनसः (तै० ब्रा० कां० २ प्र० ६ अ० ६) इति । † प्रति-व्याहृति प्रणवेन सयुक्ताम् ओं भूः ओं भुवः ओं सुवः इति । ‡ इदं कियाधिद् व्याख्या-नांशो गलित इव भाति ।

इति । अयं च प्राणसंयमस्त्रिः कार्य इति योजनीयम् । अन्ये त्वेवंरूपां सावित्रीं त्रिर्जपेद् अयं च प्राणसंयम इति वर्णयन्ति । संयतोच्छ्वासेन चाय जपः कार्यः, समाख्यानात् । तथाच मनुः—

"त्रिर्जपेदायतप्राणः प्राणयामः स उच्यते"

इति ॥ २३ ॥

पाठक्रमाच्च मार्जनात् परतः प्राणायामप्राप्तावाह—

**प्राणानायम्य संशुद्धस्तृचेनाब्दैवतेन तु ।**
**जपन्नासीत सावित्रीं प्रत्यगातारकोदयम् ॥ २४ ॥**

यद्वा, अयं सायंसन्ध्याविषय एव क्रमः । पूर्वं प्राणानायम्य संशोधनं कार्यम् । सशब्दाचाद्भिर्मार्जनं दर्भैः । तृचेनेत्यधिकनिवृत्त्यर्थम् । पुनर्वचनमत्रैव । अतश्च मध्यन्दिन आधिक्यमविरुद्धम् । तुशब्दश्चशब्दार्थे द्रुपदाप्राप्त्यर्थः । अर्धास्तमित आदित्ये प्राणानायम्य 'आपो हि ष्ठे'ति तृचेन मार्जयित्वा द्रुपदां च जप्त्वा सूर्यमुपस्थाय जपन्नासीत सावित्रीमोङ्कारमहाव्याहृतिपूर्विकां प्रत्यङ्मुख आ नक्षत्रोदयात् । यदपि "आ ज्योतिषो दर्शनाद्" इत्युक्त, तदप्युदयोपलक्षणार्थमेव । दर्शनस्यानियतत्वात् । द्वयं चानेन श्लोकेन विधीयते— प्राणायामस्य पूर्वकालता सायं च सन्ध्याविधानम्, आ नक्षत्रदर्शनादिति लिङ्गात् । कालविशिष्टसन्ध्योपासनविधिर्वा स्यात् । एवच 'तृचेनाब्दैवतेने'त्यधिकनिवृत्त्यर्थं पुनर्वचनमर्थवत् । तथाच स्नानविधौ स्पष्टीकरिष्यते ॥ २४ ॥

किं सायमेव सन्ध्योपासनम् उत प्रातरपि । यदा च प्रातः, तदा किमेवमेव । उच्यते—

**सन्ध्यां प्राङ् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ।**
**अग्निकार्यं ततः कुर्यात् सन्ध्ययोरुभयोरपि ॥ २५ ॥**

एवमेव प्रातः सन्ध्योपासनं कुर्यात् । अत्र तु विशेषः—प्राङ्मुखस्तिष्ठन् नक्षत्रदर्शनादारभ्यासूर्यदर्शनाज्जपं कुर्यात् । मध्यन्दिने तु विशेषानभिधानात् प्राङ्मुख उदङ्मुखो वासीनः शक्त्या सावित्रीं जपेत् । अन्ये

त्यादित्याभिमुखस्तिष्ठन् सहस्रादिसंख्यातान् जपेदित्याहुः । हारीतवचनात् —

"देवी सहस्रशीर्षा तु शतमध्या दशावरा ।
जपेदतः सहस्रान्तां शतमध्यां दशावराम् ॥"

इति । तत्तु कार्योपरोधादग्निहोत्रिविषयं द्रष्टव्यम् । प्राक् सूर्योदयादुपस्थानानुपपत्तेरुत्कर्ष इति केचित् । न त्वेवं समाचारः । अभिविधावाङ् द्रष्टव्यः,

"ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुयुः"

इति स्मृत्यन्तरदर्शनात् । सन्ध्येति चोपस्थानकर्मणो नामधेयं, कालस्य चान्यतः प्राप्तत्वात् । यथाह गार्ग्यः —

"पूर्वां सन्ध्यां सनक्षत्रां प्रातराभास्करोदयात् ।
आ तारकोदयात् सायं पश्चिमां सदिवाकराम् ॥"

इति । "अर्धास्तमितभास्कराम्" इति संवर्तः । मार्जनं त्वात्मसंस्कारार्थं सन्ध्याङ्गं च । अन्ये तु जपकर्मप्राधान्यं मन्यन्ते । यथाह मनुः —

"पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनाद्"

इति । तिष्ठञ्जपेदिति विभक्तिव्यत्ययस्तथा स्यात् । एवंच सन्ध्यामुपास्याग्निकार्यं कुर्यात् । तस्य विधिर्गृह्याद‍वगन्तव्यः । सन्ध्ययोरुभयोः, सन्ध्याशब्दश्चायमनन्तरकालोपलक्षणार्थः, विरोधात् । उभयग्रहणं चादरार्थम् । 'कृताग्निकार्यो भुञ्जीत'त्यग्निकार्यमन्यत् कर्तव्यमित्याशङ्का मा भूदित्यादरः । अन्ये तु सन्ध्ययोरित्यङ्गाङ्गिभावं मन्यन्ते । तत् पुनर्नातीव पेशलम् । तत इति क्रमाभिधानात् सप्तमीनिर्देशाच्च । अपिशब्दो नित्यत्वज्ञापनार्थः । *अहरहरित्यनुकर्षणात् ॥ २५ ॥

एवमाग्निकार्यं निर्वर्त्य

**ततोऽभिवादयेद् वृद्धानसावहमिति ब्रुवन् ।**
**गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ २६ ॥**

---

* 'अनुवर्तत्' आकार ... अहरहरित्य ... [illegible]

नत इति क्रमार्थम् । अभिवादयेद् वृद्धान् विद्याभिजनवृत्तवयोधनादिभिः । असाविति च नामादेशः । *इतिकरणः प्रकारार्थः । यथाह बौधायनः — "काममन्यस्मै साधुवृत्ताय गुरुणानुज्ञातः असावहं भो इति श्रोत्रे संस्पृश्य मनसः समाधानार्थमधस्ताज्जान्वोरा पद्भ्याम्" इत्यादि । श्रोत्रसंस्पर्शश्च समाचाराद् देशनियत इति केचित् । यदापस्तम्बेनोक्तं— "दक्षिण बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयेद्" इत्यादि । तद् दृष्टार्थत्वाद् दूरस्थविषयं द्रष्टव्यम् । अभिवाद्यानभिवाद्यविवेकोऽन्वेष्टव्यः । यथा — "नाप्रयतो नाप्रयताये"त्यादि । यथा "समिन्मृदुदकुम्भहस्तो नाभिवादयेत्" । अन्यदप्येवंसयुक्तं "न समवायेऽभिवादनम् अत्यन्तशो भ्रातृपत्नीनां जातवीर्यश्चेद्" इत्यादि । "नाम्नोऽन्ते ये न प्लुतिं विदुरि"त्यादि । गुरुं चैवाप्युपासीतेति तुशब्दार्थश्चशब्दः । एवशब्दश्च मकारान्तः । ‡गुरुं त्वेवम् उपसगृह्णीयात्, †नाभिवादयेदित्यर्थः । यथाह मनुः —

"व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥"

इति वचनात् । यत्त्वापस्तम्बोक्तं — "दक्षिणं पादं पाणिभ्यां परिमृज्य हस्तं गृह्णीयादि"ति, तत् प्रसादविशेषार्थत्वान्नैमित्तिकम् । पूर्वं गुरोरुपसङ्ग्रहणम् । "गुरुणानुज्ञातः" इति वचनात् । न केवलमुपसगृह्णीयात् । अप्युपासीत स्वाध्यायार्थं समाहितः प्रणिहितमनाः । यद्वा, अन्तरेणापि स्वाध्यायार्थमुपासीतेत्येवमपिशब्दार्थः ॥ २६ ॥

अयं चान्यस्तद्धर्मः —

**आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ।
हितं चास्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥ २७ ॥**

आहूतोऽविचारयन् गुरुणा गच्छेत् । चशब्दादनाहूतश्च । किञ्चान्यत् । अप्यधीयीत गुरुणानुज्ञातः, अपिशब्दात् । प्रकारार्थो वापिशब्दः,

* 'नियत ज्ञात करण कर्मणि ल्युट् । इति-बाशो करणश्चेति समासः । निर्दिश्यमान इतिशब्द इत्यर्थः । 'इतिकरण' इत्यय प्रयोग "इतिकरणोऽर्थनिर्देशार्थः" इति नवेतिविभाषासूत्रभाष्यप्रयोगवत् । ‡ मकारस्य च लोप आर्षः । † एवशब्दस्यार्थ उपसङ्ग्रहणमादिति ।

"अर्थनित्यः परीक्षेते"ति शब्दज्ञा यतः । प्रकारं चाह गौतमः— 'पाणिना सव्यमुपसंगृह्ये'त्यादि । लब्धं च भैक्षमस्मै निवेदयेत्, लाभान्तराभावात् ।' यद्वा, अन्यदप्ययाचितमप्रत्याख्येयं, ब्राह्मणाद्याहृतमस्मादेव वचनाद् गृह्णीयात् । गुर्वर्थं वा तदनुज्ञया भिक्षेतेति । तथाचापस्तम्बः "सर्वं लाभमाहरन् गुरव" इति सर्वग्रहणाद् भैक्षस्यं पृथङ्निवेदनादेतदेव ज्ञापयति । यत्तु "पक्वान्नस्वामिनो भिक्षवः" इति, तदात्मवृत्त्यर्थं द्रष्टव्यम् । हितं तस्याचरेन्नियम् । चशब्दात् प्रियं च । तथाह गौतमः — "युक्तः प्रियहितयोरि"ति । अप्रियमपि च तदात्वे हितं भवत्येवौषधादि । अतो भेदेनाभिधानम् । नित्यशब्दाच्च समावृत्तोऽपीति गम्यते । मनोवाक्कायकर्मभिरिति सर्वथेत्यर्थः । यथाहाम्नायः — "यस्तेन द्रुह्येत् कतमच्च नाहं ये गुरुं नाद्रियन्ते विप्रा मनसा वाचा कर्मणा वा" इति । हितप्रकारविशेषश्च लोकतः शास्त्रान्तरतश्चावगमयितव्यः । एते ब्रह्मचारिणो नियमाः ॥ २७ ॥

गुरो पुन —

**कृतज्ञोऽद्रोही मेधावी शुचिः कुल्योऽनसूयकाः ।**
**अध्याप्याः साधुशक्ताप्तस्वार्थदा धर्मतस्त्विमे ॥२८॥**

कृतज्ञः प्रसिद्ध एव । अद्रोही सर्वभूतानाम्, आचार्यद्रोहस्य हितवचनादेव सिद्धत्वात् । शुचिर्व्याख्यातः । कुल्यः कुलीनः । अनसूयकाः असूयारहिताः । असूया परमर्मसूचनमभिनयादिना, परिवादो वा । उक्तवक्ष्यमाणविशेषण चैतद्, बहुवचनसामर्थ्यात् । एकवचनपाठेऽप्ययमध्याप्यान्तरोपन्यासः । साधुः सद्भिर्व्याख्यातः । शक्तोऽभियोगग्रहणसमर्थ ऊहापोहक्षमो वा । आप्तो मित्रम् । स्वः पुत्रव्यतिरेकेण भ्रात्रादिः । अर्थदो द्रव्यदः, विद्याप्रदो वा । "विद्या मनुष्याश्च विहिताः परिवर्तकेने"ति स्मृत्यन्तरात् । द्रव्यदश्चापणेन, धर्मत इति वचनाद् भृतकाध्यापनप्रतिषेधाच्च । एते धर्मतोऽध्याप्याः । तुशब्दाच्च वृत्त्यर्थमन्योऽपि । यथाह मनुः —

---

१ 'राश्चेत' ग घ पाठ.. २ 'कारथ यजाह' ख घ पाठः. ३. 'स्य च पू'. घ. पाठ. ४. 'नाह ये' ख पाठ.

"आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
शक्तोऽर्थदोऽर्थी स्वः साधुरध्याप्या दश धर्मतः ॥"

इति । आचार्यच्छलेन शिष्यस्यामी धर्मा विधीयन्ते । एवंगुणोऽध्याप्यः । तेन चैव भवितव्यमित्यर्थः । अमी च ब्रह्मचारिण एव ॥ २८ ॥

**दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।**
**ब्राह्मणेषु चरेद् भैक्षमनिन्द्येष्वात्मवृत्तये ॥ २९ ॥**

एवशब्दो मकारान्तो द्रष्टव्यः, स्मृत्यन्तरोक्तप्रकारार्थः । चशब्दोऽनुक्तसमुच्चयार्थः । यथाह गौतमः — "वासांसि शाणक्षौमचीरकुतपाः सर्वेषामि"त्यादि । दण्डप्रकारश्च — "बैल्वपालाशौ ब्राह्मणदण्डावि"त्यादि । "कृष्णरुरुबस्ताजिनानी"त्यजिनप्रकारः । तानि चोत्तरीयाणि । यथाहापस्तम्बः — "अजिनमेवोत्तरीयं धारयेयुरि"ति । उपवीतं च । यथाह बौधायनः — "कौशं सौत्रं वा त्रिस्त्रिवृद् यज्ञोपवीतम् । आ नाभेर्दक्षिणं बाहुमवधाय शिरोऽवदध्याद्" इति । मानवं तु "उद्धृते दक्षिणे पाणावि"त्यादि विन्यासार्थम् । यत्तु वर्णविशेषेण "कार्पासमुपवीतं स्याद् विप्रस्ये"त्यादि, तज्जातुकर्णिवचनाद् "दीक्षितौ चेद् राजन्यवैश्यौ शाणाविकं कुर्यातामि"ति दीक्षितविषयम् । मेखलाप्रकारश्च — "मौञ्जी त्रिवृत् समा श्लक्ष्णे"त्यादि । एतानि च दण्डादीन्यविरुद्धेषु कालेषु नित्यं धार्याणि । यत्तु मनुनोक्तं — "प्रतिगृह्येप्सितं दण्डमि"ति, तदापद्यन्यदण्डग्रहणार्थं द्रष्टव्यम् । ब्राह्मणेषु चरेद् भैक्षमनिन्द्येष्वात्मवृत्तये, न सर्वार्थम् । ब्राह्मणकुलेष्विति चायं प्रथमः कल्पः । क्षत्रियवैश्यकुलेष्विति चायमनुकल्पः । शूद्रकुलेष्वपीत्यापत्कल्पः । तथाचाह मनुः —

"वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद् भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥
सर्वं वा विचरेद् ग्रामं पूर्वोक्तानामसम्भवे ।"

इति । "सार्ववर्णिकं भैक्षचरणमि"ति च गौतमः । ब्राह्मणवचनेऽपि ब्राह्मणस्त्रीभ्यो भैक्षचरणम् । यथाहापस्तम्बः —"अप्रत्याचक्षाणामि"ति । आ-

१. 'रोरुस्तप्रकार.' ग. पाठ. २. 'दि प्र' ग. ड. पाठ.

म्नायश्च "यस्या आचारभूयिष्ठ श्लक्ष्णता च तां भिक्षेदित्याहुस्तल्लो-क्यमिति । अथ यद्यन्यां भिक्षितव्यां न विन्देतापि स्वामेवाचार्यानीं भिक्षेते"ति स्त्रियं भिक्षितव्यां दर्शयति। "स्वस्ति वाच्य भिक्षादानमपूर्वमि"-त्येतदपि स्त्रीविषयमेव । दातुर्वैतदित्यदोषः ॥ २९ ॥

ब्राह्मणविषयैवेय भैक्षवृत्ति । इतरयो प्रतिग्रहानधिकारादित्याशङ्का निराकरिष्णुर्गुणोपदेशद्वारेण प्राप्तिमाह —

आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥ ३० ॥

निगदव्याख्यानः श्लोकः ॥ ३० ॥

वृत्त्यर्थत्वादविद्यमानधनस्यैव प्राप्तावाह —

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ ३१ ॥

स्थितवचनादन्यथा वृत्तावब्रह्मचारी स्यात्। "नैकस्मिन् गृहे भुञ्जीतानापदी"ति ब्रुवन्नापदि प्रतिप्रसवाद् विद्यमानधनस्यापि भैक्षेण वृत्तिनियम दर्शयति । ब्राह्मणः काममश्नीयाद्, भिक्षार्थमागतोऽनिन्द्यैरामन्त्रितश्च । न राजन्यवैश्यौ। व्रतमपीडयन्, मधुमासादिवर्जमित्यर्थः। तथाच मनुः —

"व्रतवद् दैवदैवत्ये पित्र्ये कर्मण्युपस्थिते ।
काममभ्यर्थितोऽश्नीयाद् व्रतमस्य न लुप्यते ॥"

इति । अनन्तर च ब्राह्मणस्तुत्या राजन्यवैश्ययोरनधिकार दर्शयति । यत्तु ब्रह्मचारिणः श्राद्धभोजने प्रायश्चित्तमाम्नात, तत् पूर्वेद्युरामन्त्रितस्येति द्रष्टव्यम् ॥ ३१ ॥

उक्ताश्च ब्रह्मचारिणो नियमा । यमा उच्यन्ते —

मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादांश्च वर्जयेत् ॥ ३२ ॥

१. 'न्वाम' ख घ ङ पाठ

यद्यपि मध्वशनमाम्नायेऽनुमतं—"तत् स्वादुकारमेवाश्नीयादि"ति, तथाप्याचार्यस्य न ब्रह्मचारी सन् मध्वश्नीयादित्ययमेव पक्षोऽभिमतः । अनुज्ञानस्यापद्विषयत्वात् । ऋग्यजुःसामादिभिर्व्यवहारवान् विद्वान् कर्तव्यमित्यापदि मध्वश्नीयादित्यर्थः, नान्यस्मिन् । तथाच चरकाः पठन्ति— "श्वेतकेतुं हारुणेयं ब्रह्मचर्यं चरन्तं किलासो जग्राह । तमश्विनावूचतुः— मधुमांसौ किल ते भैषज्यमिति । स होवाच— ब्रह्मचर्यमानी कथं मध्वश्नीयामिति । तौ होचतुः— यदा चात्मना पुरुषो जीवति, अथान्यत् सुकृतं करोमीत्यात्मानं ह्येव सर्वतो गोपायेत् ।" अथ खल्वाहुर्वाजसनेयिनः—आचार्याय मधुमांसे प्रदास्यामस्तदुच्छिष्टं भोक्ष्यामः । तथा न दुष्यामहे, तद्यथाग्निहोत्रोच्छिष्टमेव नस्तद् भविष्यति" इत्यादिना आपद्विषयता वाजसनेयिवाक्यस्येति विज्ञायते । ततश्चानापद्यन्यथाभक्षणे च प्रायश्चित्तम् । अञ्जनग्रहणं त्वलङ्कारलक्षणार्थम् । उच्छिष्टं चागुरोः । तथा चाहुः—"उच्छिष्टमगुरोरभोज्यमि"ति । शुक्तं पर्युषितं भक्ष्यादि । स्त्रियश्च संभाषणादावपि । अन्यत्रावश्यकार्यात् । तथा चापस्तम्बः— "स्त्रीभिर्यावदर्थं संभाषेते"ति । प्राणिहिंसनं मनसापि । तथा च भरद्वाजः—"मनसा प्राणिहिंसायां त्रिर्द्रुपदामावर्तयेदि"ति । भास्करालोकनम् उदयास्तमयादौ । यथाहुः—

"नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन"

इति । अश्लीलं सङ्कल्पनमपि । "यदिवेदमप्रतिरूपं सङ्कल्पयती"ति श्रुतेः । यत्तु 'शुक्ता वाचः' इति, तत् प्रायश्चित्तविशेषार्थम् । परिवादं द्विषद्भ्योऽपि । चशब्दः स्मृत्यन्तरोक्तयमप्राप्त्यर्थः । यथोक्तम्—"उपानच्छत्रकामक्रोधे"-त्यादि । औषधार्थं चानलङ्कारत्वादञ्जनाद्यप्रतिषिद्धम् । तथाचाम्नायः "आत्मानं ह्येव सर्वतो गोपायेदि"ति दर्शित एव । एवमुदाहरणार्थं कतिचिद् यमनियमा उक्ताः । सर्वथा यानेव गुरुराचार्यो वा ब्रूयात्, त एव ब्रह्मचारिणो यमनियमा इत्यवसेयम् । तथाच शौनकः "यदेव विद्वानाचार्यो वा ब्रूयात् तदेवाविचिकित्सन्नाचरेत् । उपदेशत एव ब्रह्मचारिणो धर्म इति हि विज्ञायत" इत्याह ॥ ३२ ॥

---

१. 'रि' क. ग. घ. ङ पाठ. २. 'क्ता' ग पाठ.. ३. 'ति । त' ख. पाठ. ४. 'षर्थता' ङ पाठ. ५. 'यथाह शौ' ख. पाठ. ६. 'ति वि' ग. पाठ.

किंलक्षण पुनर्गुरु: किंलक्षणो वाचार्य इति । उच्यते —

**स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।**
**उपनीय ददद् वेदमाचार्यः स उदाहृतः ॥ ३३ ॥**

निषेकाद्याः क्रिया कृत्वा वेदमस्मै प्रयच्छति यः, स गुरुरुच्यते । "निषेकादीनि कर्माणी"ति स्मृत्यन्तरात् पितेत्यर्थः । उपनयनमेव केवलं कृत्वा वेदं ददद् आचार्यः स उदाहृतो मन्वादिभिः । तथाचाह मनुः—

> "उपनीय तु यः शिष्य वेदमध्यापयेद् द्विजः ।
> सकल्प सरहस्य च तमाचार्यं प्रचक्षते ॥"

इति ॥ ३३ ॥

मान्यत्वज्ञापनार्थं प्रसङ्गादृत्विगुपाध्यायावुच्येते —

**एकदेशमुपाध्याय ऋत्विग् यज्ञकृदुच्यते ।**
**एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ ३४॥**

प्रकृतस्य वेदस्यैकदेश दददुपाध्याय उच्यते, सर्वाणि वा वेदाङ्गानि । यथाह मनुः —

> "एकदेश तु वेदस्य वेदाङ्गान्यपि वा पुन. ।
> योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥"

इति । अत्र च श्लोके वृत्त्यर्थमपीति योजनीयम् । परार्थं तु यज्ञकृदृत्विगुच्यते । स च त्रिविधः । यथाह नारदः —

> "ऋत्विक् तु त्रिविधः प्रोक्तः पूर्वजुष्टः स्वय वृतः ।
> यदृच्छया च य' कुर्यादार्त्विज्य विधिपूर्वकम् ॥"

इति । यत्तु मानवम् —

> "अग्न्याधेय पाकयज्ञमग्निष्टोमादिकान् मखान् ।
> यः करोति वृतो यज्ञे स तस्यर्त्विगिहोच्यते ॥"

इति । तद् इहेति वचनान्मानातिशयज्ञापनार्थं, न त्वन्यव्यावृत्त्यर्थम् । एषां पूर्वः पूर्वोऽतिशयेन मान्य । माता तु सर्वेभ्यो गरीयसीति द्रष्टव्यम् ।

तथाच गौतमः — "मातेत्येक" इति । मनुरप्येवंविधादेव पितुर्मातरं गरीयसीमाह —

"सहस्रं तु पितुर्माता गौरवेणातिरिच्यते"

इति । अन्यादृशस्तु पिताप्याचार्यादूनः । तथाचापस्तम्बः — "तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयत" इति । उत्पादकमात्रत्वेऽपि मातैव पितुर्गरीयसी । यस्तु पिता प्रागुपनयनान्निषेकादीनि विधिवत् कुर्यात् कारयेद् वा, अन्नेन च संभावयेत्, स आचार्येण तुल्यः । यथाह मनुः—

"निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥"

इति । विप्रग्रहणं चोपलक्षणार्थम् अनुपनेतृत्वात् । मातापि हि पित्राद्यपेक्षया सगुणनिर्गुणत्वेनालोच्य माननीया । ये त्वन्ये वित्तादिभिर्मान्यास्तेषामत्रानुपन्यासः, यस्मात् तन्माननेऽभ्युदयो न त्वन्यथा प्रत्यवायः । मातृग्रहणाचान्या अपि स्त्रियो मान्या इति ज्ञायते । यथाह मनुः—

"पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि ।
मातृवद् वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥"

इति । पितृमातृसंबद्धाश्च सर्वे मान्याः स्मृत्यन्तरात् समाचाराच । मान्याश्चैवं मानिता भवन्ति, यदि तत्संबद्धा अपि मान्यन्ते । तस्मान्मान्यसंबन्धिनो मान्या एव । तेभ्यश्चान्योन्यं वित्तादिभिर्मानविशेषः । अमान्यसंबद्धानामपि वित्तादिभिर्मान्यत्वमुक्तं कामतः । वित्तादिवाक्यानि च स्वावसरे वक्ष्यामः। सर्वथा "श्रुतं तु सर्वेभ्यो गरीय" इत्ययमेव समस्तवाक्यालोचनायामपि राद्धान्तः। "तन्मूलत्वाद् धर्मस्ये"ति हेत्वभिधानाद् वित्तादीनामपि धर्मोपयोगापेक्षं मानकारणत्वम् ॥ ३४ ॥

भूयश्च गुरोर्मान्यत्वं दर्शयितुमाह —

**कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।**
**अपोशनक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥ ३५ ॥**

गुर्वनुज्ञया सत्कृत्यान्नं भुञ्जीतेति संबन्धः । इत्थं गुरुर्मान्यः, येन कृताग्निकार्यस्यापि तदनुज्ञया भोजनमन्नसंस्कारश्च भवति । अग्निकार्यं तु

१. 'ओ', २. 'रे विंशद्व' ग. घ. ड. पाठः. ३. 'शा' घ. ग. घ. पाठः.

प्रातःकालीनमेवानूद्यते गुरुप्रशसार्थम् ।यद्वा भैक्षादग्नौ होमोऽग्निकार्य प्रकरणात्, न समिदाधान, तस्य 'सायं प्रातरि'ति नियमात् । तथाचापस्तम्बो 'भैक्षादग्नौ कृत्वे'त्यादिनैतदेवाग्निकार्यमिति दर्शयति । एवच भैक्षादग्नौ हुत्वा गुरवे निवेद्य तदनुज्ञया सत्कृत्यापोशंनक्रियापूर्वं वाग्यतोऽश्नीयात् । गुरुनिवेदन च भैक्षसस्कारोऽदृष्टार्थः, आत्मवृत्तय इति वचनात् । अकुत्सयन् अन्नदोषानुद्भावयन्नित्यर्थः ॥ ३५ ॥

कियान् पुन काल एव व्रतचर्यायाः । उच्यते—

**प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च-वा ।**
**ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥ ३६ ॥**

परिसमाप्यैक वेदं वेदान्तरारम्भः । स चेच्छातो न नैयमिकः । यथाह मनुः—

"वेदानधीत्य वेदौ वा वेद वापि यथाक्रमम्"

इति । ग्रहणान्तिकमित्येक इति । अनेतिकरणो हेत्वर्थः । वेदार्थत्वाद् ब्रह्मचर्यस्य तद् ग्रहणान्तमेव युक्तमित्येके मन्यन्ते । केशान्तस्तु सर्वपक्षेषु षोडश एवाब्दे कर्तव्यः । चशब्दस्तुशब्दस्यार्थे । एवकारस्योत्कर्षः । केशान्ताख्यश्च सस्कारश्चूडाकरणादीपद्भिन्नः । स गृह्यादवगन्तव्यः । यदा पुनः प्राक् षोडशाब्दात् कथञ्चिन्नोपनीतस्तदा कालप्राप्तावनुपनीतस्य तदभावः, तदा चासमावृत्तस्यापि केशान्तप्रवृत्तिः । तस्मिंस्तु काले उपनयनं कार्यं प्राधान्यात् । केशान्तस्य गुणत्वात् कालबाधः । किं पुनर्गर्भाष्टमादिकालादूर्ध्वमप्युपनयन प्रवर्तेत । बाढं प्रवर्तते । गुणत्वात् कालस्य यथोक्ताभावेऽपि प्रधानस्य प्रवृत्तिरविरुद्धा ॥ ३६ ॥

एव तर्हि यावज्जीवमुपनयन स्यात् । तत्राह—

**आ षोडशाद् द्वाविंशाच्च चतुर्विंशाच्च वत्सरात् ।**
**ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ ३७ ॥**

---

१ 'शा ख ग. घ पाठ २ 'क्षे षो' ग पाठ. ३. 'न्दार्थे' ख, ग. पाठ. ४ क्य स ग. ङ पाठ ५ 'शात् क' ख, घ, ङ, पाठ.

आ षोडशादित्यभिविधावाद् द्रष्टव्यः, "द्विगुणां गायत्रीमतिक्रम्य ब्राह्मणो व्रात्यः स्यादि"ति जातुकर्णिवचनात् । गौतमश्च "द्व्यधिकाया वैश्यस्ये"त्यधिकग्रहणादेतदेव ज्ञापयति । द्वाविंशाच्चतुर्विंशाच्चेत्यत्राप्याऽनुषङ्गेण द्रष्टव्यः । गुणत्वेऽपि कालस्यातः परं नोपनयनमिति ॥ ३७ ॥

एतदेव निन्दार्थवादेन स्पष्टीकरोति —

**अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।**
**सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ ३८ ॥**

अतः परं षोडशाद् द्वाविंशाच्चतुर्विंशाच्च वर्षात् । पतन्त्येते ब्राह्मणादयो द्विजातिकर्मभ्यः, प्रागेतस्मात् कालादापद्यप्यनुपनयने अध्यापनसामर्थ्ये तु प्राथमकल्पिकात् कालादूर्ध्वं पतनमेव । यथाह मनुः —

"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते"

इत्यादि । ततश्च द्विजातिकर्महानात् सर्वधर्मबहिष्कृता असंव्यवहार्या भवन्ति । यथाचापस्तम्बः "ते ब्रह्महसंस्तुतास्तेषामभ्यागमनं भोजनं विवाह इति च वर्जयेदि"त्यादिना असंव्यवहार्यतां दर्शयति । कस्मात् पुनरसव्यवहार्या भवन्ति । यस्मात् सावित्रीपतिता व्रात्याः । सावित्रीशब्दश्चोपनयनकालोपलक्षणार्थः । तथाच वसिष्ठः — "अत ऊर्ध्वं पतितसावित्रीका भवन्ति । नैनानुपनयेयुरि"त्यादि । आख्याकरणं च निन्दाव्यवहारार्थम् । अथ किमेते व्रात्या एव । न । व्रात्यस्तोमादृते क्रतोः । क्रतुग्रहणं गौरवार्थम् । स्तोममात्रव्यावृत्त्यर्थं वा । तथाच याज्ञिकाः "व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद् निरमेयुर्व्यवहार्या भवन्ती"त्याहुः । कार्यगौरवार्थं वा । अप्रकरणे प्रायश्चित्ताभिधानमनन्तरानुष्ठानार्थं, लाघवार्थं वा । स्मृत्यन्तरोक्तानां व्रात्यप्रायश्चित्तानां स्वावसरे विवेकं वक्ष्यामः । कामं पतितसावित्रीकत्वादुपनयनमध्ययनं वा मा भूद्, द्विजातिकर्महानं तु कुतस्त्वित्युक्तम् अद्विजातित्वादित्युच्यते ॥ ३८ ॥

कस्मात् पुनरद्विजातित्वम् । यस्मात्,

**मातुरग्रेऽधिजायन्ते द्वितीयं मौञ्जिबन्धने ।**
**ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजातयः ॥ ३९ ॥**

"तद् द्वितीयं जन्मे"ति स्मृत्यन्तरम् । न चानुपनीतानां तदस्ति । अत एव शूद्रोऽप्यद्विजातिः । अद्विजातित्वादेव द्विजातिकर्मभ्यः पतनम् । वर्णधर्मास्तु प्रवर्तन्त इत्युक्तम् । अतः सूक्तं पतन्त्येते सर्वधर्मबहिष्कृता इति ॥ ३९ ॥

अस्यैव दार्ढ्यार्थमियमन्या व्रात्यनिन्दा द्विजातिस्तुतिर्वा —

**यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।**
**वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ ४० ॥**

चशब्दैवशब्दौ छन्दःसमाधानार्थौ । यज्ञानां ज्योतिष्टोमादीनाम् । तपसां चान्द्रायणादीनाम् । मूलं परम् । परश्च नैःश्रेयसकरः, अपवर्गमूलत्वात् । सर्वकर्मणां च कारणाधीनत्वात् परत्वाभिधानमविरुद्धम् । स च द्विजातीनामेवेति स्तुतिः । अद्विजातीनां वा स एव नास्तीति निन्दा । ब्रह्मयज्ञस्य चायमुपोद्घातः । एवंच वक्ष्यमाणश्लोकानामपि प्रकृतसंबन्धो वाच्यः । ब्रह्मयज्ञविधानपरत्वेऽपि व्रात्यनिन्देयं, तेषामनधिकारात् । द्विजातिस्तुतिर्वा, तेषामधिकारात् ॥ ४० ॥

तथाचाह[1] —

**मधुना पयसा चैव स देवांस्तर्पयेद् द्विजः ।**
**पितॄन् मधुघृताभ्यां च ऋचोऽधीते हि योऽन्वहम् ॥ ४१ ॥**

द्विजग्रहणं स्तुत्यर्थम् । अन्वहमिति नित्याधिकारज्ञापनार्थम्, अधिकाराविशेषत्वात् कामपदाननुबन्धित्वाच्च । देवादितर्पणमर्थवादः । स्तुत्या च विधिकल्पनम् । चशब्दस्यापकर्षविषयत्वम् । पितॄंश्चेति योजना । एवं वक्ष्यमाणविषया अपि श्लोका व्याख्येयाः । ऋगादिशब्दा ऋग्वेदादिवचना एवेत्युपक्रमसामर्थ्यादवसेयम् । ऋज्वन्यत् ॥ ४१ ॥

**यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः ।**
**प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ॥ ४२ ॥**

---

1. यथाह ग पाठ.

प्रीणातीत्यनुषङ्गः । घृतान्यमृतानि वा घृतामृतानि । घृतबहुत्वं चाहुतिभेदात् । अमृतं त्वमरणधर्मकत्वात् सुवर्णम् । तेन शतकृष्णलादौ तर्पणम् । दुग्धाब्धिप्रभवं वा । तदैतिहासिकानां प्रसिद्धम् ॥ ४२ ॥

**स तु सोमघृतैर्देवांस्तर्पयेद् योऽन्वहं पठेत् ।**
**सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४३ ॥**

चशब्दस्योत्कृष्य पितॄणां चेति योजना ॥ ४३ ॥

**मेदसा तर्पयेद् देवानथर्वाङ्गिरसः पठन् ।**
**पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥ ४४ ॥**

पुनः पुनरन्वहमित्यादरार्थमुक्तम् । ऋगादीनां नैरपेक्ष्यकथनार्थं वा । द्विजग्रहणं चात्र वाकोवाक्यादावद्विजातिप्राप्त्यर्थम् । ऋज्वन्यत् ॥ ४४ ॥

**वाकोवाक्यं पुराणं च नाराशंसीश्च* गाथिकाः ।**
**इतिहासांस्तथा विद्या योऽधीते शक्तितोऽन्वहम् ॥ ४५ ॥**

वाकोवाक्यं ऋच्यनुगतानि वादप्रकरणानि । नाराशंस्यः पौरुषेय्यो यज्ञगाथाः, देवस्तोत्राणि पुरुषकृतान्येवेत्यन्ये । गाथा आत्मवादश्लोकाः । पुरुषकृता एव यज्ञगाथा इत्यन्ये । विद्या मीमांसादयः । योऽन्वहं शक्तितो द्विजातिरद्विजातिर्वाधिकृतः सन्नधीते ॥ ४५ ॥

**मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ।**
**करोति तृप्तिं च तथा पितॄणां मधुसर्पिषा ॥ ४६ ॥**

मांसौदनक्षीरौदनाभ्यां मधुना च तर्पणम् । दिवि ओको निवासो येषां ते दिवौकसः । देवा इत्यर्थः । तथा पितॄणां च मधुसर्पिषा तृप्तिं करोतीति योजना ॥ ४६ ॥

* 'नाराशंस्यश्च' इत्यादर्शेषु पाठो दृश्यते ।

किं पुनस्तैस्तृप्तै प्रयोजन —

**ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।**
**यं यं क्रतुमधीते च तस्य तस्याप्नुयात् फलम् ॥४७॥**

ते देवा पितरश्च । तृप्ता , एन स्वाध्यायिनम् । तर्पयन्ति, सर्वकामफलै सर्वे कामा फलानि येषा ते सर्वकामफला क्रतवं । तैस्तर्पयन्ति, तृप्तिं कुर्वन्तीत्यर्थ । शुभैरिति श्येनादिव्यावृत्त्यर्थम् । समानमेतद् द्विजातीनामद्विजातीना च । यद्वा, एव ब्रह्मयज्ञाभ्यस्ता ऋगादयो मन्त्रा क्रत्वङ्ग भवन्ति, ब्राह्मणानि च विधानक्षमाणि । अतश्च यो यो य य क्रतु मधीते, स स तत्र तत्राधिकारलाभात् तस्य तस्याप्नुयात् फल, नान्य । अद्विजातेश्चानध्ययनान्महाफलक्रत्वनधिकारान्निन्दा । क्रत्वभिधानाच्चायमृग्वेदाद्यध्ययनशेष श्लोक । उत्तरार्धा वा । न वाकोवाक्याद्यध्ययनशेष ॥

इयमन्या ब्रह्मयज्ञस्यातिस्तुति —

**त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ।**
**तपसश्च परस्येह नित्यस्वाध्यायवान् द्विज ॥ ४८ ॥**

तथाचाम्नाय — "यावन्त ह वा इमा वित्तेन पूर्णां ददत् स्वर्गं लोक जयति त्रिस्ताव त लोक जयति भूयास चाक्षय्यमि'त्यादि । तपसश्च परस्य फलमश्नुते । चतुर्थाश्रमगतस्येत्यर्थ । इहैव ब्रह्मचर्ये स्थित । नित्यस्वाध्यायवान् निष्काम इत्यर्थ । द्विजग्रहणमुक्तार्थम् । यद्वा इहेत्यस्यान्योऽर्थ । इह ग्राम्ये धर्मे स्थितोऽलङ्कृत सुखित सुखे शयने शयान परस्य तपस फल प्राप्नुयात् । द्विजग्रहण द्विजातीना यावज्जीविकोऽय ब्रह्मयज्ञ इति ज्ञापनार्थम् । तथाचाह मनु —

"आ हैव स नखाग्रेभ्य परम तप्यते तप ।
य स्रग्व्यपि द्विजोऽधीते स्वाध्याय शक्तितोऽन्वहम् ॥'

इति। उपलक्षणार्थं चैतत् तृतीय द्विजग्रहणम् । द्विजोऽद्विजो वा यथाविहितस्वाध्यायवानिद नाम प्राप्नुयादिति । एवच सर्वशेषोऽय श्लोक ।

१ तऽपि द न ट पाठ व इत्यर्थ । त ग घ पाठ
३ इवेल घ ट पाठ ४ ३ ग पाठ

क्रतुप्राप्त्यादयश्च फलार्थवादा इति प्रपञ्चनीयम् । तदालम्बनानि च कारणे कार्यवदुपचारात् सादृश्यादिभिर्वा कथञ्चिदुपपादनीयानि ॥ ४८ ॥

एवमुक्तकाल ब्रह्मचर्यं समाप्यानन्तर गुरुकुलात् समावर्तितव्य गृहस्थधर्मानुष्ठानाय । नैष्ठिक वा ब्रह्मचर्यमनन्तर प्रतिपत्तव्यम् । यथाह वसिष्ठ —"अवशीर्णब्रह्मचर्यो यमिच्छेत् तमावसेद्" इति । गौतमश्च "तस्याश्रमविकल्पमेके ब्रुवत" इत्येतदेव दर्शयति । तस्य चावशीर्णव्रतस्येत्यर्थ । तत्रानन्तर्याद् ब्रह्मचारिण एवान्य प्रकारो नैष्ठिकस्य तावदुच्यते—

**नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।**
**तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥**

तुशब्दस्यापकर्षः । नैष्ठिकस्त्वाचार्यसन्निधौ वसेत् । सन्निधिवचनाददृष्टार्थो वासः । समाख्यानाच्च तच्छुश्रूषणपरस्तत्रैव निष्ठां गमयेत् । तदभावे त्वस्यैव पुत्रे गुणान्विते पत्न्यां वा गुणान्वितायाम् । वाशब्दापिशब्दात् सपिण्डे वाचार्यस्यात्मनो वा सब्रह्मचारिणि वा । तथाचाह मनुः —

"आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा काङ्क्षन् गतिमनुत्तमाम् ॥"

इति । गौतमश्च —"गुर्वभावे तदपत्ये वृत्तिः । तदभावे वृद्धे सब्रह्मचारिणी"त्यादि । वैश्वानरेऽपि वा, नित्यधारणभैक्षहोमसमिदिन्धनोपलेपनादिभिः शुश्रूषाविशेषैर्देहं क्षपयेत् । आचार्याग्न्योरिच्छाविकल्पः । दोषवति चाचार्येऽग्निः । इतरेषां स्वभावतो गुणतो वा ग्रहणम् । सर्वत्र साद्गुण्याभावात् ॥ ४९ ॥

ततश्च —

**अनेन विधिना देहं साधयन् विजितेन्द्रियः ।**
**ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः ॥ ५० ॥**

साधनं क्षपणम् । अनेन विधिना पूर्वोक्तेनाग्नीन्धनादिना आचार्यादिसन्निधौ देहं समापयन् ब्रह्मलोकमवाप्नोति । न च पुनरिहाजायते ।

---

१. 'चा' ग. घ । पाठ

यद्वा, अनेन विधिनेति स्मृत्यन्तरोक्तविधिसंबन्ध , अस्य च प्रकरणादेव सिद्धे, "चतुर्थषष्ठाष्टमकालभोजी भैक्षमि"त्यादिना स्मृत्यन्तरोक्तेन विधिना । विजितेन्द्रियत्व चात्मोपासनमभिप्रेत, ब्रह्मलोकप्राप्तिवचनात् पुनराजननप्रतिषेधाच्च । तथाह मनु —

८ "आ निपाताच्छरीरस्य यस्तु शुश्रूषते गुरुम् ।
स गच्छत्यञ्जसा विप्रो ब्रह्मण सद्म शाश्वतम् ॥"

इति । अञ्जसा आत्मज्ञानेनेत्यर्थ । "गुरौ कर्मशेषेण जपेदि"ति गोतम । एवम्भूतो ब्रह्मलोकमवाप्नोति जितेन्द्रिय इति । एवम्भूतो जितेन्द्रिय आत्मविदित्यर्थ । बाह्येन्द्रियजयस्तु पूर्वमुक्त । नन्विय नैष्ठिकत्वविधानस्मृतिराम्नायविरुद्धा । कथ, 'यावज्जीवमग्निहोत्र जुहुयात्", "यावज्जीव दर्शपूर्णमासाभ्या यजेते"त्येवमाद्याम्नाय प्रत्यक्ष । स नैष्ठिकत्वे सत्युपरुध्येत । तद्विरोधिन्यश्च स्मृतयो न प्रमाणमित्युक्तम् । न चैवमविरोधसभव , कृतदाराणामेवाग्निहोत्रादिविषय इति । प्रागपि जीवनान्वयात् तद्वतश्चाधिकारे । काममधिकृतानामेवास्तु दारसग्रह । न चैव सति प्रागुपनयना[1]दुपनीतमात्रस्य वा प्रसङ्ग इति शक्य वक्तुम्, अविदुषोऽनधिकारात् । न च निषादवद् वाचनिकोऽधिकार सभवति, अनध्ययनप्रसङ्गात् । यदि ह्यविदुषामधिकार स्यात्, कोऽध्ययनादिक्लेश कुर्यात् । न चाध्ययनात् फलान्तरमिति शक्य वक्तुम्, अश्रवणात् । फलवत्कर्मावबोधनेन च प्रयोजनवत्त्वाद् घृतकुल्यादीनामर्थवादत्वम् । न चास्त्वनध्ययनमिति शक्य वक्तु, सप्रदायोच्छेदप्रसङ्गाच्च । अतश्च युक्त वक्तुमविदुषामनधिकारकल्पनम् । न च प्रागध्ययनादविदुषा परतस्तु विदुषामिति युक्त, वैरूप्यप्रसङ्गात् । तेनाविदुषा निरास । विदुषा पुनरनधिकारहेतु पत्न्यभाव इति चेत्, क्रियता तर्हि पत्नीसङ्ग्रह । न च केवलकामप्रयुक्ता सेति शक्य वक्तुम् "अन्यतरापाये दारान् कुर्वीते"ति वचनात् । किञ्च "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इत्युपक्रम्य, "अथ तर्ह्यनृणो भवति यदि हि यज्वा ब्रह्मचारी प्रजामुत्पादयेदि"त्यादिना

१ मन्युक्त घ ङ पाठ    रात् । का ग पाठ

प्रजोत्पादननियमं दर्शयति । न चाकृतदारत्वे तदुपपत्तिः । अतोऽपि नियोगतः कार्यो दारसङ्ग्रहः । अपिच, स्मृतिविरोधोऽपि स्यात्, तन्नैयमिकसंस्कारहानात् । तथाच मनुः —

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"

इति । "चत्वारिंशत्संस्कारैः संस्कृत" इति गौतमः । न चैतदगृहस्थस्य सभवति । न च यो गृहस्थस्तस्य तदिति युक्तम्, अविशेषश्रुतेः । तथाच गौतमः "तस्याश्रमविकल्पमेके ब्रुवते" इत्युपक्रम्याश्रमानभिधायानन्तरम् "ऐकाश्रम्यं त्वाचार्याः, प्रत्यक्षविधानाद् गार्हस्थ्यस्ये"त्युपसंहरन्नेतदेव स्पष्टीकरोति, यदुपवर्णितमस्माभिः । अतो नैष्ठिकत्वस्मृतिरसारा । तत्रान्येऽग्निहोत्राद्यनधिकृतानामन्त्यार्पयाणामन्धपङ्ग्वादीनां नैष्ठिकादिस्मृतय इति वर्णयन्ति । तेषामप्याश्रमसमुच्चयो दुःश्लिष्ट एव । स्वाभिप्रायेण च विषयकल्पना — "यमिच्छेत् तमावसेदि"ति । अतोऽशब्दार्थकल्पनातस्तु वरमप्रामाण्यमेव । तथाचाङ्गिराः —

"स्वाभिप्रायकृतं कर्म यत्तु धर्मविवर्जितम् ।
क्रीडाकर्मेव बालानां तत् सर्वं निष्प्रयोजनम् ॥"

इति । अत्राभिधीयते — नेयमपस्मृतिः, वेदमूलत्वाविशेषात् । विरोधादतन्मूलत्वमिति चेत् । कः खल्वत्र विरोधः । यदि हि न कृतदाराः कामतः स्युस्तदाग्निहोत्रादिविधयः प्रयोजका इति कल्प्येत । कामानां तु प्रयोजकत्वे न तत्कल्पनावसरः । न च क्रत्वर्थत्वे प्रमाणमस्ति । नापि द्रव्यार्जनवद् दारा इति शक्यं वक्तुं, द्रव्याभावे हि जीवनानुपपत्तेः । सर्वेण हि द्रव्यमर्थ्यते यतः, अतश्चाद्रव्यत्वं निरुणद्धि । तथाच न्यायविदो याज्ञिकाः "जीविष्यति हि विधानेनेत्यनुपपन्नमि"त्याहुः । न चैवं दारसङ्ग्रहे प्रवृत्तिरिति वैषम्यम् । नहि दाराभावे जीवनानुपपत्तिः । या "त्वन्यतरापाये दारान् कुर्वीते"ति क्रतोः प्रयोजकत्वाशङ्का, सा कृतदारस्याधिकृतत्वात् केवलानौपयिकदारसद्भावे च द्रव्यार्जनेनाविशिष्टा । यथैव ह्यात्मार्थमार्जने प्रवृत्त आत्मार्थत्वाविशेषात् क्रत्वर्थमप्यार्जयति, नाहमद्रव्यत्वा-

१. 'ष्यति' ख. पाठः २ 'मन्ध' घ. ङ. पाठः. ३. 'मि' ग. घ. ङ. पाठः. ४. 'त्व' ख. पाठ.

दनधिकृत इति मन्यते, तथैव कृतदारेणाकृतदारोऽहमिति च नावमन्तव्यम्। वीतरागस्य त्वात्मार्थमपि प्रवृत्त्यभावान्नाधिकृतत्वम्। तथाच वसिष्ठः "गृहस्थोऽविनीतक्रोधहर्ष." इत्येतदेव दर्शयति। अविनीतक्रोधहर्षस्यैव गार्हस्थ्यं, विनीतक्रोधहर्षस्तु "वमिच्छेत् तमावसेदि"त्यस्यार्थो यत। यत्तु गौतमीयमैकाश्रम्यमिति, तद् वनस्थाश्रमनिरूपणे निर्णेष्याम। यत्तु "ब्राह्मीय क्रियते तनुरि"ति। सस्कारस्व यज्ञादीनामिति तस्यार्थः, न तु तद्रहितानामब्राह्मी तनुरिति। गौतमीयं त्वात्मगुणप्रशसार्थमित्युक्तमेवेत्यनवद्यम्। एवमृणत्रास्यमपि गृहस्थविषयतयैव व्याख्येयम्। यथैवाविदुषो न प्रजोत्पादनाय दारसङ्ग्रह, तथैव विदुषोऽप्यरागिण। नन्वेतत् कामप्रयुक्तत्वेऽपि समानम्, असमावृत्तस्यापि कामसम्भवात्। नैवम्। कामप्रयुक्तत्वे ब्रह्मचारिणो दाराधिगम स्मृत्या निराक्रियते, प्रजोत्पादनविधिप्रयुक्तत्वेऽग्निहोत्रादिविधिप्रयुक्तत्वे च स्मृतेर्दौर्बल्यात् केन वार्यते। अत कामप्रयुक्तत्वे वैषम्यम्। आम्नायश्च "ये चामी अरण्ये श्रद्धा सत्यमुपासते" इत्यग्निहोत्राद्यनपेक्षामपवर्गप्राप्ति दर्शयति। एव छान्दोग्येऽपि—"त्रयो धर्मस्कन्धाः—यज्ञोऽध्ययनं दानमिति प्रथमः। तप एव द्वितीय। ब्रह्मचार्याचार्यकुलेवासीति तृतीय। अत्यन्तमात्मानमाचार्यकुलेऽवासादयन्नि"ति नैष्ठिकत्व दर्शयति। अत सूक्त नैष्ठिको ब्रह्मचारीत्यादि ॥ ५० ॥

इति ब्रह्मचारिप्रकरणम्।

---

अथ विवाहप्रकरणम्।

उक्तो ब्रह्मचारी, अनन्तर गृहस्थो वक्तव्य। तदभिधानायाह—

## गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया।
## वेदं व्रतानि वा पारं नीत्वाप्युभयमेव वा ॥ ५१ ॥

अपीत्यस्यापकृष्य योजना, स्मृत्यन्तरैकवाक्यत्वाद् अर्थवत्त्वाच्च। वेदमधीत्य नैष्ठिकावाश्रमे वसेत्। अपिवा गार्हस्थ्य कर्तुं स्नायीत। स्नानमिति च सस्कारकर्मणो नामधेयम्। तच्च गृह्यादवगन्तव्यम्। गृहस्थतां

---

१ वक्ष्याम' ख ग पाठ २ 'त्वेऽपि म' ग पाठ ३ 'कर्तुं' ख. पाठ

च प्रतिपद्यमानस्यैव स्नानसंस्कारो नाश्रमान्तरमपि, तत्परत्वविधानात् । यथाह गौतमः — "स विधिपूर्वं स्नात्वे"ति । स इत्यनेन गृहस्थोऽभिधीयते । तथा वासिष्ठेऽपि, "गृहस्थोऽविनीतक्रोधहर्षः" इति प्रकृत्य स्नानविधानं — "गुरुणानुज्ञातः स्नात्वे"ति । यदा स्नायात् तदा गुरवे वरं दत्त्वा । वरदानं च गवादेः श्रेष्ठद्रव्यस्य दानम् । यथाह पारस्करः— "गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वो वैश्यस्ये"ति । अनुज्ञातश्च गुरुणा न वरदानमात्रेण कृती स्यात् । यद्वा, वरं वा दत्त्वा स्नायीत । तदनुज्ञया वा वरमदत्त्वा स्नायीत । तथाच गौतमः — "कृत्वानुज्ञातस्य वा स्नानमि"ति । तुशब्दोऽवधारणार्थः । गुरव एव वरं दद्याद्, नान्यस्मै । अनुज्ञानं चान्यतोऽपीति केचित् । एवं त्वदृष्टार्थत्वमसामञ्जस्यं च स्यात् । तस्मात् पितुर्वरदानाभावाशङ्कानिवृत्त्यर्थस्तुशब्दः । वेदं व्रतानि वा पारं नीत्वा । वेदस्य पारनयनमर्थतो ग्रन्थतश्च स्वीकरणं, न ग्रन्थत एव । तथाच वक्तारो भवन्ति — वेदाध्याय्ययं न वेदपारग इति । व्रतानां पारनयनं द्वादश वर्षाणि प्रयत्नतोऽनुष्ठानम् । उभयमेव वा पारं नीत्वा, वेदं व्रतानि च । अयं प्रथमः कल्पः, उभयानुग्रहाद्, एवकाराच्च । वेदमिति चानुकल्पः । प्राधान्येऽपि वेदस्य व्रतानुपसंहारात् । व्रतान्येवेत्यपकल्पः, वेदार्थत्वाद् ब्रह्मचर्यस्य, तस्य चानिर्वृत्तेरित्यादि प्रपञ्चनीयम् । वेदमिति चैकवचनं शाखान्तराध्ययनव्यावृत्त्यर्थम्, ब्रह्मत्वे त्रिवेदसंयोगवचनात् । तथाचाह मनुः —

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्"

इति । पाठान्तरेऽप्ययमेवार्थः वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वेति । वेदं व्रतानि च वेदव्रतानीत्येवं विग्रहः । हिशब्दश्च हेत्वर्थः । यदेति चाध्याहार्यम् । यदा स्नायात्, तदैवाभिमति । समानमन्यत् ॥ ५१ ॥

ब्रह्मचारिणो ब्रह्मचर्यविधानान् समावृत्तस्य निवृत्तिः प्राप्नोतीत्यत आह—

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।**
**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥**

---

१. 'व एव व' ग. पाठः. २. 'चा' ग. पाठ. ३. 'व्यसी' ख. ग. पाठ. ४ 'विद्यार्थवत्ता' घ पाठ. ५. 'रव्यावृत्त्या' ख. पाठः. ६. 'दत्र' ग. पाठ.

समावृत्तोऽपि सन्नविप्लुतब्रह्मचर्य एवोद्वाह कुर्यात्। ब्रह्मचर्यवच नाच मध्वशनादौ विप्लव। कथ पुन' प्राग् विवाहाद् विप्लवाशङ्का। परदाराभिगमन हि निषिद्धमेव। सत्यमेवम्। वक्ष्यति तु — 'यत्नात् परीक्षित. पुंस्त्व' इति। परीक्षणोपायत्वेन विप्लवाशङ्कास्त्येव। अन्ये तु नियोगपक्षेण विप्लवमाहु। लक्षण्या लक्षणोपेताम्। यथाह मनु. — "सवर्णा लक्षणान्विताम्" इति। तथाच —

"अव्यङ्गाङ्गीं सोम्यनाम्नीं हसवारणगामिनीम्"

इति। स्त्रीग्रहणमनुवाद., गुणार्थं वा। अपत्रपणशीलामित्यर्थ.। एवमप्यनन्यपूर्विकामिति। अन्येनानुपभुक्तामित्यर्थ। कान्ता च कमनीयाम्। असपिण्डा च मातृत. पितृतश्च। यवीयसीम् आत्मनो हीनवयसम्। तामेवविधोक्तलक्षणामुद्वहेदिति सम्बन्ध' ॥ ५२ ॥

किश्चान्यत् —

**अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।**
**पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ॥ ५३ ॥**

अरोगिणीं कुष्ठादिरोगरहिताम्। दृष्टमूलत्वान्न स्मृते. समावेयरोगित्वमदोष.। भ्रातृमतीं च, पुत्रिकाशङ्कानिवृत्त्यर्थम्। "नाभ्रात्रीमुपयच्छेत् तत्तोक ह्यस्य भवती"ति भाल्लविना श्रुते.। यदा पुनरय हेतुवन्निगदः, तदा "नाभ्रात्रीमुपयच्छेदि"त्येव मन्यन्ते। असमानार्षगोत्रजाम् असमानार्षेयगोत्रप्रभवाम्। असमानप्रवरामित्यर्थ.। तथाच गोतम. — "असमानप्रवरैर्विवाह" इति। यदपि "असगोत्रामि"ति मानव, तदप्येवमेव व्याख्येयम्। ततश्च समानगोत्राणामप्यसमानप्रवराणामनिषिद्धो विवाह.। यथा पञ्चार्षेयाणा त्र्यार्षेयाणा भरद्वाजानाम्। तथेदमपर—पञ्चमीं मातृतः, सप्तमीं पितृत। मातृपितृशब्दौ च ज्ञातिलक्षणार्थौ, "मातृबन्धुभ्य. पितृबन्धुभ्यश्चे"ति स्मृत्यन्तरात्। असपिण्डामित्यनेनैव सिद्धे निषेधार्थ. पुनरारम्भः। मा भूत्

१ 'स्याह। य ख. ग पाठ २ 'मउ' ग पाठ. ३ 'भा' ग प. ह पाठ.

"सपिण्डता तु पुरुषे सप्तमे विनिवर्तते"

इत्यविशेषवचनान्मातृतोऽपि सप्तपुरुषी सपिण्डता । तथाचाह गौतमः— "पिण्डनिवृत्तिः सप्तमे पञ्चमे वे"ति । अयं च तस्यार्थः — सप्तमे पितृतः पञ्चमे मातृत इति, मातृबन्धुभ्यः पञ्चमादित्यारम्भात् । तथेति बीजिग्रहणार्थम् । तथाचाह गौतमः — "ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमादि"ति । चशब्दैवशब्दौ छन्दःसमाधानार्थौ । यद्वा, विकल्पार्थश्चशब्दः । पञ्चमीं सप्तमीं वा मातृतः पितृतश्चोद्वहेत्, सपिण्डतायास्तदवधिकत्वात् । तथाच गौतमीयं सूत्रमविशेषाभिधानात् समर्थितं भवति । एवञ्चोभयत्र पञ्चमे विवाहः स्यात् । यत्तु "ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो मातृबन्धुभ्यः पञ्चमादि"ति, तन्मातृतः पञ्चमादेवेत्यवधारणार्थम् । पितृतस्तु सप्तमात् पञ्चमाद् वेति विकल्पः । पञ्चमादित्यनुकल्पोऽयम्, अन्यानर्थक्यात् । प्रथमकल्पे च न्यूनत्वदर्शनादनुकल्पः । मातृतश्चतुर्थेऽपीति केचित् । तत् पुनः सामान्यतोदृष्टम् । तेनोभयत्र समत्वमेवानुकल्पः । तथाच शङ्खः — "पञ्चमीं वोभयतः" इति । यत्त्वाम्नायवचन — "तस्मादु समानादेव पुरुषादत्ता चाद्यं च जायते । इदं हि चतुर्थे तृतीये वा पुरुषे सङ्गच्छावहे इति हि विदेवं दीव्यमानया जान्या सहासत" इति । तन्मन्त्रविकारस्तुतिमात्रार्थत्वादनादृत्यमिति केचित् । अथापि जान्या इत्यादिपदार्थोपपत्त्यर्थं कर्तव्यतोच्येत । तथापि देशोपसंहृतस्येत्याहुः । तत् पुनर्न्यायस्मृतिविरुद्धम् । यथाह बौधायनः — "पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः" इत्युपक्रम्य "इतरदितरस्मिन् कुर्वन् दुष्यतीतरदितरस्मिन्नि"ति चोक्त्वा, "उभयं त्वेव नाद्रियेत" इत्यादि । न्यायविदश्च याज्ञिकाः —"अपिवा सर्वधर्मः स्यात् तन्न्यायत्वाद् विधानस्ये"ति । अतः कार्यत्वे सति सर्वधर्मत्वम् । अयं चात्र वाक्यार्थः — समानादेकस्मात् पुरुषादत्ता च भोक्ता, आद्यं च भोग्यं, द्वावप्युत्पद्येते । तत्रोत्पन्नमात्रः परिणेता क्रीडन् सङ्कल्पयति — इदं भोग्यं चतुर्थे पुरुषे तृतीये वा भोक्ष्यामीति । तत्रोत्पत्तिपुरुषात् पञ्चमः संभवति, तृतीयपक्षे

---

१. 'य' ख पाठः. २. 'ति वि' घ. ङ पाठ. ३. 'ञ्चविधा' घ. पाठ. ४. 'न्मूलत्वा' ग. घ. ङ. पाठ. ५ 'क्षे वा च' ग घ. पाठ.

चतुर्थः । ते चामी श्रुतिस्मृत्यनुसाराच्चत्वारः कल्पा — ऊर्ध्वं सप्तमात् पञ्चमाद् वेत्येकः । पञ्चमे मातृत' सप्तमे पितृत इति द्वितीयः । उभयतः पञ्चम इति तृतीयः । चतुर्थेऽपीति चतुर्थं । पूर्वः पूर्वः श्रेयान् । स्त्रीविषयश्चान्यः कल्पः, इदमिति सर्वनाम्नो भोग्यपरत्वात् । एवच वरचतुर्थे न विवाहः । मन्त्रवर्णोऽप्येवमेव व्याख्येयः, "क्लप्तां मातुलस्येव योपाम्" इति, व्यवधानेऽपि षष्ठ्युपपत्तेः, वाजपेयस्य यूप इतिवत्, "पैतृष्वसेयी वपामिवे"ति च । अपत्यापत्येऽपि तद्धिताविरोधात् । श्रुतिस्मृत्यनुसाराच्चैव कल्पनेत्येषा दिक् । भूतपूर्वगत्या च मातृतः सपिण्डत्वमिति सूतकाद्यप्रसङ्ग । नन्वेवं सति स्त्रीतस्तृतीयेऽपि प्राप्नोति, "अप्रत्तानां तु स्त्रीणा त्रिपुरुषी सपिण्डता विज्ञायते" इति वसिष्ठवचनात् । नैवम् । तस्याशौचमात्रविषयत्वात् । अप्रत्ताना तु पारिभाषिक तदुक्तम् । तथाच विवाहे पञ्चमीत्युपपन्न भवति । अन्यथा तदसमञ्जसं स्यात् । क्षत्रियादीनां तु ब्राह्मणादिप्रभवानामुभयतश्चतुर्थेऽप्यविरुद्धो विवाहः । क्षत्रियादिप्रभवानां तु विशेषाभावात् पूर्वोक्त एव कल्प । तथाच शङ्खः —

"यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः ।
एकपिण्डाः पृथक्छौचाः पिण्डस्त्वावर्तते त्रिषु ॥"

इति । एवमन्यान्यप्यनयैव दिशा वाक्यानि योजनीयानि ॥ ५३ ॥

किंचान्यत् —

**दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।**
**स्फीतादपि न सञ्चारिरोगदोषसमन्वितात् ॥ ५४ ॥**

श्रोत्रियत्वेनैव ख्यातिर्गरीयसी, न राजसत्कारादिभिः । तथाचाह मनु. —

"मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ।
कुलसङ्ख्यां च गच्छन्ति प्राप्नुवन्ति महद्यश' ॥"

इति । तेनाल्पधनादपि श्रोत्रियकुलात् कन्यामुद्वहेत्, न तु धनादिसमृद्धादपि सञ्चारिरोगसयुक्ताद् दोषसयुक्ताद्वा । मौर्ख्यादयोऽपि हि मातु-

१. 'तेऽमी' घ पाठ.

लादिसम्पर्कात् सञ्चारिण एव, रोगाश्च श्वित्रकुष्ठादयः । न तु सञ्चारिणोऽपि शिरःशूलादयः, दृष्टमूलत्वात् स्मृतेः । तथाचाह मनुः —

"महान्त्यपि समृद्धानि गोजाविधनधान्यतः ।
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत् ॥
हीनक्रियं निष्पुरुषं निश्छन्दोरोमशार्शसम् ।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥"

इति । कुलग्रहणाच्च सिद्धे यदरोगिणीमित्युक्तं, तदादरार्थम् । एवमन्येऽपि गुणदोषाः स्मृत्यन्तराल्लोकतश्चान्वेष्याः । प्रमाणान्तरमूलत्वात् स्मरणस्य ॥ ५४ ॥

उक्ता कन्यागुणा । वरस्येदानामुच्यन्ते—

**एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।**
**यत्नात् परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः ॥ ५५ ॥**

एतैरेव गुणैर्युक्तो वरोऽपि स्यात् । अयं तु विशेषः, यः सवर्ण श्रोत्रियश्च । सवर्णग्रहणं च हीनवर्णव्यावृत्त्यर्थम् । यद्वा, उत्कृष्टवेदनस्य नुकल्पत्वज्ञापनार्थम् । अनुकल्पत्वं चाधिकारविप्रकर्षाल्लोकपङ्क्त्यनुसाराच्च पुंसां तु 'श्रोत्रियाणां महाकुलादि'ति वचनात् स्त्रिय इत्येव प्रथमः कल्प स्मृत्यन्तराद्वा सवर्णेतरोद्वहनमनुकल्पः । तथाचाह मनुः —

"सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥"

इति । एवगुणत्वेऽपि ब्रह्मचर्यविश्लेषेण यत्नात् परीक्षितः पुंस्त्वे । वीत चीजादिव्युदासद्वारेण । एवं स्त्रियोऽपि स्त्रीत्वे परीक्षणीयाः, पुंस्त्व इत्युप लक्षणार्थत्वात् । स्त्रियमुद्वहेदिति वा स्त्रीग्रहणस्यैतदेव प्रयोजनमिति व्य ख्येयम् । आदरार्थं वा । पुंसः परीक्षणाभिधानमपरित्यागज्ञापनार्थम् अनन्यपूर्वत्वं तु स्त्रीविषयमेव । पुंविषयत्वेऽपि वा प्रथमः कल्पः । एवम्भूत यः, स वरः स्यात् । स वरयितव्यः । तादृशो वा कन्यां वरयेद् इ व्याख्येयम् । ऋज्वन्यत् ॥ ५५ ॥

---

१ 'प स' ख. पाठः. २ 'दस्या' घ पाठः ३ 'च' ग. च. पाठः.

'श्रोत्रियाणा महाकुलादि'ति वचनाच्छूद्राविवाह' न प्राप्नोति । इष्यते च कैश्चित् तत्राचार्य स्वमतमुपन्यस्यति स्म —

**यदुच्यते द्विजातीनां शूद्राद् दारोपसंग्रहः ।**
**न तन्मम मतं यस्मात् तत्रायं जायते स्वयम् ॥५६॥**

"कृष्णवर्णीया रामा रमणायैवोपेयत" इति ब्राह्मणवाद । न च विदुषां कामार्थे प्रवृत्तिर्युक्ता । अत शूद्राविवाहो न कर्तव्य इत्येतदेव स्पष्टीकरोति हेतुना — यस्मात् तत्राय जायते स्वयमिति । तथा बह्वृचा. पठन्ति —

> "पतिर्जाया प्रविशति गर्भो भूत्वा स मातरम् ।
> तस्या पुनर्नवो भूत्वा दशमे मासि जायते ॥"

इति । अतो नैतन्ममाभिप्रेतम् ॥ ५६ ॥

इद पुनरस्माभिरप्यभिप्रेत

**तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।**
**ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः ॥ ५७ ॥**

शूद्रस्येति वक्तव्ये शूद्रजन्मन इत्युक्त, सापि हि ब्राह्मणादिजाता शूद्रजन्मना न विवाह्येति ज्ञापनार्थम् । एव क्षत्रियादीनामन्तरप्रभवाना चानुलोमप्रतिलोमाना यथायथ योज्यम् । सर्वथा मनागप्युत्कृष्टजा निकृष्टजन्मना न विवाह्या । निकृष्टापि यथासन्निकर्ष क्रमाद् विवाह्येति श्लोकार्थ । ऋज्वन्यत् ॥ ५७ ॥

नन्वय विवाहाख्य सस्कारो न नित्यमुपसहर्तु शक्य , पराधीनत्वात् कन्यालाभस्य । उच्यते । स्यादय दोष। दात्रभावाद् यद्यप्रार्थिता कन्या न प्रदीयेत, ददतो वा प्रत्यवाय स्यात् । अत्र तु खलु दातुरभ्युदय । यथाह

**ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।**
**तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥**

ब्राह्मण एवैनमर्हतीति ब्राह्म । तत्र चाय विधि । यथाशक्त्यलङ्कृत्य उक्तलक्षण वरमाहूय गृह्योक्तेन विधिना कन्याप्रदान(यदा), तदा नोक्त-

दोषप्रसङ्गः । न चैवं ब्राह्मे लोकानुसारिभिर्भवितव्यम्, कथमप्रार्थिता कन्या दीयत इति । अयमेव सतां धर्मो यत । तस्यां तथोढायां जातः पुत्रः उभयतः पितृतो मातृतश्चैकविंशतिं कुलानि पुनाति शोधयतीत्यर्थः । यद्वा दशातीतानि दशोत्पत्स्यमानानि आत्मानं चेत्येवं योजना । तथाचाह गौतम — "दश पूर्वान् दशावरानात्मानं च ब्राह्मीपुत्रः" इति । स्तुतिमात्रमेतद्, भूतानां भाविनां पावनानुपपत्तेः । उपपत्तौ वा कृतनाशाकृतागमप्रसङ्गात् । यद्वास्तु फलविधिः । विवाहविशेषस्य फलविशेषापेक्षत्वात् । न चागमानुसारिण्यर्थेऽनुपपत्तिरिति शक्यं वक्तुम् । तथा च नैयायिका "न हि वचनस्यातिभारोऽस्ती"त्याहुः । अयं च ब्राह्मणस्य प्राथमकल्पिको विवाहः ॥ ५८ ॥

इम स्वनुकल्पा —

**यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोद्वयम् ।**
**चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ५९ ॥**

यज्ञस्थवचनं पूर्वेजुष्टादिव्यावृत्त्यर्थम् । देवा ऋत्विजस्त एनमर्हन्तीति दैव । अतश्च ब्राह्मणस्यैवायम्, इतरयोरार्त्विज्यानधिकारात् । महर्त्विग्भ्यश्च । यथाह व्यासः —

"स्तेयं कुर्यां यद्यह वो विप्रानां महर्त्विजां वितते यज्ञतन्त्रे ।
अध्वर्यवे दुहितर संप्रदद्यामुद्गात्रे वा ब्रह्मणे वाथ होत्रे ॥"

इति । उद्गातृवचनाच्च सोमर्त्विक्प्रत्यय । दक्षिणातिरिक्त चैतद्दान, फलश्रवणात् । आर्षस्तु वराद् गोद्वयमादाय । तच्च मिथुन, स्मृत्यन्तरात् । (मन्त्र)द्रष्टारो ब्राह्मणा ऋषयः, त एनमर्हन्तीत्यार्षः । तुशब्दः परिक्रयाशङ्कानिवृत्त्यर्थः । तथाचाह मनुः —

"एकं गोमिथुन द्वे वा वरादादाय धर्मतः"

इति । कस्मात् पुनरिमावनुकल्पौ, पूर्वस्मादूनफलत्वात् । तथाचाह — प्रथमजश्चतुर्दश पुनाति । प्रथमो दैवः, तत्र जातः प्रथमजः । तथोत्तरजः

---

१ ग'·१ ग न दा॰ २ 'न्न्म् म ग ३1३

पद्। उत्तर आर्षः, तत्र जात उत्तरजः। प्रविभज्य पौर्वापर्येण योजना। तथाचाह मनुः—

"दैवोढायाः सुतश्चैव सप्त सप्त परावरान्।
आर्षोढायाः सुतस्त्रींस्त्रीन् षट् षट् कायोढजः सुतः॥"

इति। न्यूनफलत्वाचास्य दैवान्निकृष्टत्वम्। दैवसहपाठाचायमपि ब्राह्मणस्यैव। प्राजापत्यान्न्यूनफलत्वेऽपि चास्यात एव पूर्वपाठ इति मन्तव्यम्॥ ५९॥

अथ तु सार्ववर्णिकः—

**सह धर्मश्चर्यतामित्युक्त्वा या दीयतेऽर्थिने।**
**स कायः पावयत्यायः षट् षड् वंश्यान् सहात्मना॥ ६०॥**

धर्मश्चर्यतामित्येतावदेवोक्त्वार्थिने यत् कन्यादान, स प्राजापत्यः। उक्त्वेति वचनान्नाभ्युपगमादेव। यथाह गौतमः— "संयोगमन्त्रः प्राजापत्ये" इत्यादि। प्रजोत्पादनेच्छासामान्यात् प्रजापतिः स्नातकः। स एनमर्हतीति प्राजापत्यः। एवंचार्थिन इत्यनुवादो मन्त्रविधानार्थः। सार्ववर्णिकत्वेऽपि शूद्रनिवृत्तिः मन्त्रप्रयोगात्। सोऽयं प्राजापत्यः आयः आर्षात् पूर्व इत्यर्थः। कुत एतत्, फलभूयस्त्वात्। अत्र हि जातः षट् षड् वंश्यान् पुनाति, आत्मानं च। आर्षजस्तु त्रींस्त्रीन्। सहात्मनेत्येतत् पूर्वत्रापि योज्यम्॥ ६०॥

नन्वेव सत्याहूय यदि कश्चिदार्गत्वज्यादिभिर्वा न कन्यां दद्यात्, तथापि गृहस्थाश्रमो तु क्लिष्ट एव। सत्यम। यद्येत एव विवाहा स्युः। अन्येऽपि तु विवाहा पठ्यन्ते। अतो नेयमसत्कल्पना। के पुनस्त इत्यत आह—

**आसुरो द्रविणादानाद् गान्धर्वः समयान्मिथः।**
**राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात्॥६१॥**

समयः सङ्केतः। मिथः सहेत्यर्थः। आसुरः, आत्मार्थं कन्यार्थं च धनादानम्। यथाह मनुः—

---

१. 'याहूताम्' क. पाठ. २ 'त्वे सह धर्मश्चर्यतामिति। प्र' ख. ग. पाठ.

"ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायाश्चैव शक्तितः ।
कन्यादानं तु स्वाच्छन्द्यादासुरो धर्म उच्यते ॥
इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स विधिर्ज्ञेयो मैथुन्यः कामसम्भवः ॥
हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥
सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः ॥"

इति । उपगमनशब्द आलिङ्गनादिष्विति केचित् । तत्तच्छब्दार्थत्वादनादृत्यम् । पापिष्ठता चैवमुपपन्नतरा भवति, उपपातकयोगाच्च । अन्यथा तदसमञ्जसं स्यात् । तथाच "केवलं मन्त्रसंस्कृते"त्युक्त्वा "सा चेदक्षतयोनिः स्यादि"ति वसिष्ठोऽप्येतदेव ज्ञापयति । अतः श्रौतार्थग्रहणं युक्तमिति । असुरा धनवन्तः । स्त्रीसक्ता गन्धर्वाः । तेनानयोः सार्ववर्णिकत्वम् । दारुणत्वसामान्याद् रक्षः क्षत्रियाः । त एनमर्हन्तीति राक्षसः । क्षात्र इत्यर्थः । तथाच वसिष्ठः "भित्त्वा छित्त्वे"त्युपक्रम्य 'स क्षात्र'' इत्याह । छलवृत्तयः पिशाचाः, तदर्हः पैशाचः । सर्ववर्णानां चायमेवापत्कल्पः । आसुरादीनां तु यथाभिधानं क्षत्रियादिविशेषापेक्षया च स्तुतिनिन्दाकल्पनम् ॥ ६१ ॥

किमकल्प एव सवर्णासवर्णयोर्विवाह । नेत्युच्यते—

**पाणिर्ग्राह्यः सवर्णासु गृह्णीत क्षत्रिया शरम् ।**
**वैश्या प्रतोदमादद्याद् वेदने त्वग्रजन्मनः ॥ ६२ ॥**

ब्राह्मणपाणिगृहीतं धनुःशरं क्षत्रिया गृह्णीयात् । प्रतोदं च वैश्या । प्रतोदो नाजनिकः । स्त्रियाश्च ग्रहणे कर्तृत्वान्मन्त्रनिवृत्तिः । ऊहेन वा प्रयोग इत्यन्ये । क्षत्रियवेदनेऽपि वैश्या प्रतोदमेव गृह्णीयादिति केचित्, 'उत्कृष्टवेदन' इति मनुवचनात् । तत्पुनः सामान्यस्य विशेषोपसंहृतेरयुक्तम् ॥ ६२ ॥

१. 'सन्द्र' प क पाठ.

कस्य पुनरय कन्याप्रदानोपदेश । यदि तावत् पितु , तदभावे तु क्लिष्टतैव । अथ नावेऽप्यन्यस्य । स किमिति परकीया दद्यात् ? तेन क कन्या दद्यादिति । उच्यते —

**पिता मातामहो भ्राता स्वकुल्यो जननी तथा ।**
**कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ ६३ ॥**

स्वकुल्य इति भ्रातृविशेषणं पितृव्यपुत्रादिव्यावृत्त्यर्थम् । पूर्वस्य नाशाभावे परः परः कन्याप्रदः । प्रकृतिस्थश्च स्वभावस्थः । उन्मादाद्यनभिभूत इत्यर्थः । कन्याप्रद इति वचनादक्षताया एव नैयमिकं दानम् । माता स्वकन्यामपि दद्यादिति केचित् । छन्दोनुरोधाच्च मातामहस्य पूर्वपाठः । अर्थतस्तु भ्रातैव पूर्वः । सर्वेषां च स्वत्वसंबन्धाचोदनातो वा प्रवृत्तेरविरोधः । पाठान्तरं वा — "पिता पितामहो भ्राता सकुल्यो जननी तथे"ति । तत्र पाठक्रमेणैव नियमः । सकुल्य इति च मातुलादिपरिग्रहार्थ. । तथान्येऽपि योनिसंबद्धा इत्यध्याहारः । समानमन्यत् ॥ ६३ ॥

यत्तु परकीया किमिति दद्यादिति, तत्राह । यस्मात् —

**अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।**
**निन्दार्थवादोऽयं प्रवृत्त्यर्थ. । प्रत्यवायविधिर्वा ॥ ६३ ॥**

नन्वेतदप्युक्तम् । दातभाव गृहस्थाश्रमो तु क्लिष्ट एव । तत्र पुमान् आश्रमान्तराश्रयणेनापि कृतेन स्यु । स्त्रीणां तु का गतिरिति । उच्यते । स्यादय दोष , यदि पराधीनतैव स्त्रीणामात्यन्तिकी स्यात् । दातृसद्भाव एव तु तासा पराधीनता । तदभावे तु किम् । उच्यते —

**गम्यं त्वभावे दातॄणां कन्या कुर्यात् स्वयं वरम् ॥**

गम्यं गमनार्हम् उक्तलक्षणम् । स्वयमेवर्तुमती वर्षत्रयादूर्ध्वं वरं कुर्याद् दात्रभावे । विद्यमानोऽपि च दाता यदि न दद्यात्, ततोऽस्यामवस्थायां तदीयमलङ्कारमुत्सृज्य स्वयमेव वर वरयेत्, स्मृत्यन्तरात् । यदाप्युक्तलक्षणस्तां नेच्छेत्, तदापि सवर्णमात्राश्रयणमविरुद्धम् । यथाह बौधायनः —

"त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
अलभ्यमाने सदृशे गुणहीनं समाश्रयेद् ।"

इति । गुणवचनाच्च जातिनियमः । सर्वथा भार्याया भर्तृप्राप्तिः, भर्तुश्च भार्याप्राप्तिः, इत्यनवद्यो गृहस्थाश्रमः । तथाचाम्नायः — "उत वै याचन् दातारं लभत एव । अतो भर्ता भार्यामि"त्यादि ॥ ६४ ॥

कस्मात् पुनरद्भिर्वाचा कन्या दत्त्वा पूर्वदातरि प्रेते पर स्वातन्त्र्यादन्यस्मै न दद्यात् । यस्मात् —

**सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक् ।**

तस्मादन्यस्मै न दद्यात् । तेनैव विवाहं कारयेत् ॥ ६४३ ॥

किमेष एवोत्सर्ग । नेत्याह —

**दत्तामपि हरेत् पूर्वं श्रेयांश्चेद्वर आव्रजेत् ॥ ६५ ॥**

पूर्ववचनादद्भिर्वाचा च दत्तामपि हरेत् । न तु श्रेयांसमपि वरं प्राप्य मन्त्रोपनीतामित्यभिप्रायः ॥ ६५ ॥

यः पुनर्दुष्टा कन्यामदुष्टेयमिति प्रयच्छेत्, तस्य का कथेति । उच्यते । स तादृश —

**अनाख्याय ददद् दोषं दण्ड्य उत्तमसाहसम् ।**

यद्वैवं योजना—पूर्ववरे स्पष्टं दोषमनाख्याय न्यायतोऽनुद्भाव्यान्यस्मै श्रेयानिति मत्वा यः प्रयच्छति, स दण्ड्यः ॥ ६५३ ॥

न केवल दाता, वरोऽपि च—

**अदुष्टां यस्त्यजेत् कन्यां दूषयंस्तु मृषा शतम् ॥ ६६ ॥**

यस्तु दोषरहितां त्यजेत् कन्यां, सोऽप्येवं दण्ड्यः । मृषैव तु दूषयन् कार्षापणशतं दण्ड्यः । वाग्दूषणे च शतं दण्ड्यः, मृषेत्यभिधानात् । अदुष्टवचनाच्च दुष्टां त्यजतो न दोषः ॥ ६६ ॥

---

१. 'म् ॥ दो', २. 'तां यस्त्यजे' प. क पाठ.

कस्मात् पुनर्मृते भर्तरि न पाणिमात्रदूषितान्यस्मै पुनर्दीयते । यस्मात्—

**अक्षता वा क्षता वापि पुनर्भूः संस्कृता पुनः ।**

यथैव क्षतयोनिः पुनर्भर्तृसंयोगात् पुनर्भूर्भवति । एवमक्षतयोनिरपि, अविशेषात् । कस्मात् पुनर्दानम् । स्मृत्यन्तरात्[1] । यथाह मनुः —

"सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति"

इति । तत् कामतः प्रवृत्तौ विशेषविधानं, न कर्तव्यतयोपदेशः । तथा चाह मनुः —

*"न विवाहविधावुक्तं विधवावेदन क्वचित्"

इति ।

"न द्वितीयश्च साध्वीनां क्वचिद् भर्तोपदिश्यते"

इति च । तस्मान्न पुन.सस्कार इत्याचार्याभिप्रायः ॥ ६६३ ॥

यदा पुन स्वयमेवान्य सवर्णमुत्कृष्ट वा समाश्रयेत्, तदा को दोष इति । उच्यते —

**स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥६७॥**

पुनर्भूः स्वैरिणीति च सञ्ज्ञा दौष्ट्यज्ञापनार्था । जीवन्तं मृतं वा या भर्तारं त्यक्त्वा स्वातन्त्र्यात् सवर्णमुत्कृष्टवर्णं वा समाश्रयेत्, सापि स्वैरिणी । अतः स्वयमपि नान्य आश्रयितव्यः । यत् पुनः शङ्खेनोक्तं — "तिस्रः पुनर्भ्वश्चतस्रः स्वैरिण्यः" इति । तदनयोर्दौष्ट्यप्रपञ्चनार्थं प्रायश्चित्तविवेकार्थं वेत्येतन्नातीवोपयुज्यते । एव वासिष्ठमपि पुनर्भूलक्षण द्रष्टव्यम् । सर्वथा भोग्ये अप्येते निर्णीतत्वादुपेक्षणीये इति श्लोकार्थः । तथा च वक्ष्यति — "मृते जीवति वा पत्याविति" ॥ ६७ ॥

नन्वेव सत्यपुत्रस्य मरणान् सन्ततुच्छेदप्रसङ्ग । अस्तु । का न पीडा । अथवा—

**अपुत्रां गुर्वनुज्ञानाद् देवरः पुत्रकाम्यया ।**
**सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥**

---

1 'त् । सा' घ पाठ

---

* 'सा चेदक्षतयोनि स्याद् गतप्रत्यागतापि वा ।
पौनर्भवेन भर्त्रा सा पुन संस्कारमर्हति ॥' इति मनुः ।

घृताभ्यञ्जनवचनं कामप्रवृत्तिनिरोधार्थम् । ततश्चालिङ्गनादि वैकारिकत्वाद् दूरापेतम् । ऋतुग्रहणं त्वन्यदा दर्शनाद्यपि कथं न स्यादित्येवमर्थम् ॥ ६८ ॥

किं सकृदेव गमनम् । न, अदृष्टार्थत्वप्रसङ्गात् । अपत्यार्थं ह्येतद्गमनम्[2] । अतस्तु—

**आ गर्भसंभवाद् गच्छेत् पतितस्त्वन्यथा भवेत् ।**

प्राग् गर्भसंभूतेः परित्यागात् । तुशब्दश्चैवकारार्थः ॥ ६८३ ॥

यद्येवं योजना । नन्वय नियोगपक्षो दुःश्लिष्टः, पातकप्रसङ्गात् । न ।

**अनेन विधिना जातः क्षेत्रिणः स भवेत् सुतः ॥**

अनेन नियोगविधिना जातः क्षेत्रिणो भ्रात्रादेरौरसवत् पुत्रो भवतीत्ययं[3] विधिः । नात्र विचिकित्सा कार्येत्यर्थः । न चैवंवृत्तः पतितो भवति । कथं तर्हि पतितस्त्वन्यथा भवेदिति । तदनियुक्तेर्विकाराद् वा गच्छन्नित्यभिप्रायः । अथ पुनः परोपकाराय प्रवृत्तेरभ्युदयभागित्यनवद्यो नियोगः । अत्र चोदयन्ति — नायं नियोगपक्षः श्रेयान्, स्मृत्याचारविरोधात् । तथाचाह मनुः —

"नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥"

इति । पुराकल्पं चोपन्यस्योपसंहृतं—

"तदाप्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थे तं विगर्हन्ति साधवः ॥"

इति । अतो नास्ति नियोगः । तथाच शिष्टसमाचारः । नन्वियमपि स्मृतिरेव "अपुत्रां गुर्वनुज्ञाता"दि"त्यादि । मानवेऽपि—

"देवराद् वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया"

इत्यादि । न चैवं लोभादिमूलेति[6] शक्यं वक्तुम् । सर्वथा विकारप्रतिषेधात् । तदुक्तं — घृताभ्यक्त इति । मनुनापि च—

१. 'न का' ख. ग. प. पाठ. २. 'तद् । अ' ग. पाठ. ३. 'ति । अयं' ग. ङ. पाठ. ४. 'रत्र' ग. पाठ. ५. 'चैवं लो', ६ 'लेचामाने' ख पाठ. ७. 'रि— वि' ग. ङ. पाठ.

"विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि"

इति। अतो नेयमर्पस्मृतिः। अथ श्वशुरधनादीच्छया लोभ आशङ्क्येत, तदपि

"प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये"

इत्यनेनैव निरस्तम्। तथाचोक्तं —

"पतितौ भवतो गत्वा नियुक्तावप्यनापदि"

इति। वसिष्ठेनापि— "धनलोभान्नास्ति नियोगः" इति। अतो निर्दोषः। शास्त्राविशेषात्तु प्रतिषेधो विकल्पाय भवति। अतो न विरोधः। अन्ये तु प्राग् विवाहादुपरते भर्तरि नियोगाधिकारं वर्णयन्ति। सामान्यविशेषोपसंहृतिन्यायात्। यथाह मनुः —

"यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः।
तामनेन विधानेन निजो विन्देत देवरः॥"

इति। तत्तु विधवायां नियुक्तस्त्वित्यनेनैव निरस्तम्। ननु च सापि विधवेति शक्यं वक्तुम्। न। स्मृत्यन्तरविरोधात्। यथाह वसिष्ठः— "प्रेतपत्नी षण्मास व्रतचारिणी"त्युपक्रम्य "पित्रा भ्रात्रा वा नियोगं कारयेदि"त्यादि। नन्वनूढापि प्रेते पत्यौ प्रेतपत्न्येव। मैवम्। नहि प्राग् विवाहात् पत्नीशब्दप्रवृत्तिरिति। एवं हि भगवतः पाणिनेः स्मरणं— "पत्युर्नो यज्ञसंयोगे" इति। अतोऽसत्कल्पनम्, उपक्रमोपसंहारात्। कथं तर्हि 'यस्या म्रियेते'त्ययं श्लोकः। आसुरविवाहविषयतया व्याख्येयः। यस्याः कन्यायाः शुल्कं दत्त्वा शुल्कदो म्रियेत, सा यदीच्छेत्, ततो देवराय पूर्ववत् प्रदातव्या। न चेद्, नियोगं देवरेणैव कारयेत्। यद्वा 'निजो विन्देते'ति निजग्रहणात् सोदर्यो देवरः अनेन विधिना नैयोगिकेन वैवाहिकेन वा विन्देतैव। साप्त्नस्तु कन्यानुमतः। तथाचाह —

"कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः।
देवराय प्रदातव्या यदि कन्यानुमन्यते॥"

---

१. 'प्रमाणम्।अ' घ ङ पाठ. २. 'नादिलो', ३. 'तु' ख. पाठ.
४. 'वोह्यतो' ख ग. पाठ. ५ 'विरुद्धम्' घ. ङ पाठ

इति । यदा त्वदत्तशुल्क एवं म्रियेत, तदा तस्मिन् प्रेते कुमार्येव सती-च्छयान्यस्मै पित्रा विधिवद् देया । यथाह वसिष्ठः—

"अद्भिर्वाचा च दत्ता या म्रियेतादौ वरो यदि ।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥"

इति । आदाविति वचनाद् विवाहसन्निधौ वाग्दत्ताप्यकन्यकेति ज्ञायते । "बलाच्चेत् प्रहृता कन्ये"त्यस्य पुनरयमर्थः—प्रहृता दूषिता, प्रशब्दसाम-र्थ्यात् । क्षात्राच्च विधेरन्यत्रैव द्रष्टव्यं, तत्र दूषणासंभवात् । यदि मन्त्रैर्न संस्कृता ततोऽन्यस्मै विधिवत् प्रायश्चित्तं कारयित्वा देया । कृतप्राय-श्चित्ता च यथा कन्या तथैव सेति मन्तव्यम् । इदं तु कल्पान्तरं—

"पाणिग्राहे मृते कन्या केवलं मन्त्रसंस्कृता"

इति । अस्यार्थः— ग्रामधर्मेण पूर्वमपि विवाहात् पाणिग्रहणम् । तस्मिन् पाणिग्राहे। मृते कन्याहुतेर्वा प्राक् पाणिग्रहणाद्, यद्यक्षतयोनिः । तथा-प्यन्येन भर्त्रा पुनर्विवाहसंस्कारमर्हतीति । सर्वथा परिणीतायाः पुनः परि-णयनाभावः । तदुक्तं—"न विवाहविधावुक्तं विधवावेदनं क्वचिद्" इति । तथाच बौधायनः—

"निसृष्टायां हुते वापि यस्यै भर्ता म्रियेत सः"

इति । अपि निसृष्टायाम्, अपि हुते, न परिणीतायामित्यर्थः । "सा चेदक्षतयोनिः स्यादित्ये"तदेव स्पष्टीकरोति, यदुपवर्णितमस्माभिः । अतो न कन्याविषया नियोगस्मृतिः । कस्तर्हि विषयः । प्रेते पत्यौ सन्तानप-रिक्षये च । प्रतिषेधसामर्थ्याच्च विकल्पः । तथाचाम्नायः—"तस्मादे-कस्य बह्वयो जाया भवन्ति, नैकस्यै बह्वः सहपतयः" इति । सहप्रति-षेधाच्च क्रमेण भवन्तीति ज्ञायते । तथा "यस्मै मां पिता दद्याद् नैवाहं तं जीवन्तं हास्यामी"ति जीवन्नहानवचनाच्च मृते भर्तरि नियोगोऽस्तीति ज्ञायते । "को वां शयुना विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ" इत्यस्मात् पुनर्मन्त्रवर्णात् स्पष्टतरो नियोगः । एवं हीन्द्रेण चिराद् दृष्टव-भिनावुक्तौ दुर्दर्शौ युवां क पुनर्विधवेव योषा देवरं मर्यं मनुष्यभावं शयने

१. 'स प्रभाग' ग. ङ पाठः. २. 'प्रा दे' घ. पाठ ३. 'प्र द्र' घ. पाठः.
४. 'रक्ष्यन्ते' घ. ङ. पाठ..

हर्षस्थाने आपादयन्ती काचिदा कुरुते वाम् उपचरतीत्यर्थः । अनेन नियोगं स्पष्टीकरोति । तथाच वसिष्ठः — "प्राजापत्ये मुहूर्ते पाणिग्राहवदुपचरेद्" इति । अतोऽनवद्यो नियोगः । अत्रोच्यते । नैवं नियोगस्मृतिर्व्याख्येया, समाचारविरोधात् । विकल्पस्य चान्याय्यत्वात् । कथं तर्हि । शूद्रविषया नियोगस्मृतिः । कुत एतद् , मनुवचनात् ।

"नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभि."

इति द्विजातिसंबद्धः प्रतिषेधः । सामान्यतः शूद्रसबन्धितया विधिः । तस्मादविकल्पः । तथाचोक्तम् —

"अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेने राज्य प्रशासति ॥"[1]

इति । मनुष्याणामपि शूद्राणामपीत्यर्थः । तथाच समाचारः । यत्पुनर्व्यासेन विचित्रवीर्यभार्यास्वपत्योत्पादन, तद् द्रौपदीविवाहवदनादृत्यम् । अथवा क्षत्रियाणामप्यन्वयक्षये राज्यपरिपालनाय नियोगोऽभ्यनुज्ञायते । स च राज्ञामेव । कार्यानुरोधाद्, व्यासवचनाच्च । राज्ञां ब्राह्मणेनैव कारयितव्यम् । एवंच सत्याम्नाया अपि क्षत्रियविषया एव "नैवाहं तं जीवन्तं हास्यामी"त्यादि । जीवन् समर्थो न हातव्य इत्याम्नायार्थः । "नैकस्यै बहव सहपतयः" इति तु पुनःसंस्कारविषयम् । तत्र मुख्यः पतिशब्दः । मन्त्रवर्णस्तु शूद्रविषय एव व्याख्येयः । एवं देवरादिवाक्यान्यन्यान्यपि व्याख्येयानि । तथाच वृद्धमनुः—

"शूद्राणामेव धर्मोऽयं पत्यौ प्रेतेऽन्यसंश्रयः ।
लोभान्मूढैरविद्वद्भिः क्षत्रियैरपि चर्यते ॥"

इत्युक्त्वाह —

"वायुप्रोक्तां तथा गाथां पठन्त्यत्र मनीषिणः ।
विप्राणां न नियोगोऽस्ति प्रेते पत्यौ न वेदनम् ॥"

इयं सा गाथा —

"अकार्यमेतद् विप्राणां विधवा यन्नियुज्यते ।
उद्यते वा मृते पत्यौ देवरेण विशेषतः ॥"

---

1. द्वादिवि' ख पाठ.

इति । कथमिदानीमेतद् वसिष्ठवचनं —

"भ्रातर्यव्यपदेशेन नाध्येतव्यं कदाचन"

इति । अनेन ह्यध्यापनसंबन्धाद् ब्राह्मणानामपि नियोगाधिकारोऽस्तीति गम्यते । उच्यते । नैतद् युक्तम्, उक्तत्वान्न्यायस्य । भूयसामनन्यपराणां चानर्थक्याद् वरमेकस्यान्यपरस्य च बाधकल्पना । क्षत्रियविषयं चैतद् वाक्यम् । तेषां ह्यापदि नियोगाधिकारात् । स च ब्राह्मणेनैवेत्युक्तम् । तेनैवं योजना— भ्रातर्यध्यापयत्यपि नाध्येतव्यम् । केन । अव्यपदेशेन । न व्यपदिश्यतेऽनेनेत्यव्यपदेशः । अन्यजातीय इत्यर्थः । किमर्थम् । वोढव्यं गुरुतल्पस्य निमित्ते, भ्रातुः शिष्यभार्यागमनात् । भर्ता ह्यापत्सु देवरः । भर्तेति भरणयोगाच्छ्रेष्ठत्वाच्च ब्राह्मणः स यस्मादापत्सु देवरो भवति, नियोज्यत इत्यर्थः । तस्मात् ततो नाध्येतव्यम् । आपत्स्विति चैकस्यामेवापदि । बहुवचनं गौरवार्थम् । सन्तानपरिक्षयलक्षणैवापद् यथा स्यात् । नाध्यापयितव्य इति च वक्तव्ये नाध्येतव्यमित्युक्त क्षेत्रिणः पुत्र इति ज्ञापनार्थम् । कथं वास्य ब्राह्मणविषयत्वोपपत्तिः । न हि सोदर्ययोर्नियोगसम्भवः । कथं कृत्वा । यदि तावन्नियोज्योऽप्यपुत्रः, तदात्मन एवोत्पादयेत् । अथ तस्य पुत्रोऽस्ति, तदा

"भ्रातॄणामेकजातानां यद्येकः पुत्रवान् भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥"

इति वचनादक्षीणत्वात् सन्तानस्य कुतो नियोगः । क्षत्रियविषयत्वे तु नैष विरोधः । अथ सापत्नविषयतोच्येत । तत् क्षत्रियेऽपि समानम् । यदा त्वेकजातानामित्यस्यैकवर्णजातानामित्यर्थः, तदा स्पष्टैव क्षत्रियविषयता । यत्तु ब्राह्मण्याः प्रोषिते भर्तरि कालप्रतीक्षणवचनं, तद् भर्तुरन्तिकगमनार्थं न नियोगार्थमिति विविच्य वचनीयम् । तस्मात् सूक्ता नियोगवाक्यानां विषयकल्पना । एवं तावच्छूद्राणां नियोगाधिकार उक्तः ॥ ६९ ॥

---

१. 'ध्वमिति' ध. ड. पा० . २. 'ग' ग. ग. पाठ. ३ 'नत्र' घ. ड. पाठः. ४. 'ति मनुर' ड. पाठ .

यदा पुनर्ब्राह्मण्यप्येवं कुर्यात् तदा ता तद्रक्षणाधिकृत —

**हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद् व्यभिचारिणीम् ॥ ७० ॥**

एवं तावत् सन्तानपरिक्षयेऽपि नियोगानधिकारात् प्रवर्तमाना व्यभिचारिण्येव । तामेवमपनीतगृहाधिपत्यां कुचेलां वरोपनीतसंस्काररहितां ग्रासमात्रभक्तां सर्वथा परिभूतां स्थण्डिलशायिनीं वासयेत् । एतदेव प्रायश्चित्तं न वक्ष्यमाणं, शास्त्रव्यामोहात् प्रवृत्तेरल्पदोषता यतः । स्मृत्यन्तराच्चैतत् संवत्सरप्रायश्चित्तम् ॥ ७० ॥

अथवा, यदि स्त्रिय. स्वातन्त्र्यादन्यमाश्रयेयुस्ततो दोषभागिन्य स्यु । यदा पुनर्धनलोभाद् व्यामोहाद् वा बन्धुभिर्नियुज्यन्ते, तदा तेषामेव दोष प्रायश्चित्त च । न तु स्त्रीणाम् । अतः स्त्रियो निर्दोषा. । किन्तु—

**सोमः शौचं ददौ स्त्रीणां गन्धर्वश्च शुभां गिरम् ।
पावकः सर्वभक्षत्वं मेध्या वै योपितो मताः ॥ ७१ ॥**

वैशब्दोऽवधारणार्थः । यस्मात् सोमादिभिरासां शौचं मनोवाक्कायलक्षणं दत्तं, तस्मान्निर्दोषा एवैताः । पुंसामेव नियोगकर्तॄणां दोष इत्यभिप्रायः । अनेन नियोगकर्तॄणामपि[3] प्रायश्चित्तमस्तीत्युक्त, न तु स्त्रीणां निषिद्धं, पूर्वश्लोकानर्थक्यप्रसङ्गात् । स्वातन्त्र्याद् व्यभिचारे वा तद् द्रष्टव्यम् । नियोगे तु पारतन्त्र्यात् स्त्रियो निर्दोषाः ॥ ७१ ॥

क पुन. स्त्रीणा दोष । क वा त्याग । उच्यते—

**व्यभिचार ऋतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्तृवधे चासां तथा महति पातके ॥ ७२ ॥**

स्त्रीणां दोषो व्यभिचाराद् भर्तुः । तत्र चोक्तं प्रायश्चित्तं हृताधिकारामित्यादि । एवमृतावपि व्यभिचारे न चेद् गर्भसंभवः शुद्धिरस्त्येवेत्य-

---

१. 'दिशक्षिता गि', २., ३. 'योक्तृणा' ख पाठः. ४. 'क्याद्' ग. पाठः.

भिप्रायः । गर्भोत्पत्तौ त्याग एव । विधीयत इति विचिकित्सानिवृत्त्यर्थम् । तथा गर्भवधे भर्तृवधे महापातकसंबद्धे च ब्रह्महत्यादौ । त्याग इत्यनुषङ्गः । गर्भवधश्च सौभाग्यदर्पादिना ऋतुस्कन्दनम् । तथाच बौधायनः—

"भर्तुः प्रतिनिवेशेन या भार्या स्कन्दयेदृतुम् ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं निर्धमेद् गृहात् ॥"

इति । भर्तृवधश्च वाचनिकः । अन्यत्र महापातकवचनादेव सिद्धत्वात् । तथाचाह गार्ग्यः —"पतिताः स्त्रियस्त्याज्याः भर्तृवधप्रतिज्ञायां चे"ति । क्षत्रियादिविषयो वायं गर्भभर्तृवधो योज्यः । अतोऽन्यत्र महत्यपि दोषे न त्याज्याः ॥ ७२ ॥

किं तर्हि—

**सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा ।**
**स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ ७३ ॥**

एवमादिभिर्दोषैरधिवेत्तव्या । न त्याज्येत्यर्थः । सुराशब्देन चात्र गौडीमाध्व्योर्ग्रहण, महापातके त्यागोपदेशात् । क्षत्रियादिभिरपि निषिद्धां पिबन्त्यस्त्याज्याः । व्याधिता असमाधेयकुष्ठादिरोगग्रस्ता । धूर्ता वञ्चनशीला । वन्ध्या प्रसिद्धा । अर्थशब्दस्तु धर्मकामयोरपि ग्राहकः । पुरुषार्थघ्नीत्यर्थः । अप्रियंवदा प्रसिद्धैव । स्त्रीप्रसूः केवलस्त्रीप्रजननी । पुरुषद्वेषिणी रतिपराङ्मुखी । अधिवेदनमुपरिपरिणयनम् । तदासामनुभाष्य दोषं कर्तव्य, स्मृत्यन्तरात् । "दुष्टां भार्यां जायां परिभाष्याधिवेदये"दिति ॥

नन्वधिवेदनमपि त्याग एव । अन्योपादान तया त्यागाभावात् । नैवम् —

**अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ।**
**यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते ॥ ७४ ॥**

स्यात् । महापातकमित्यर्थः । कस्मात् पुनरेवमधिवेदनाद्युपदेशः । यस्मात्—यत्रानुकूल्यमेकमत्यं जायापत्योः । त्रिवर्गो धर्मार्थकामलक्षणस्तत्र वृद्धिमुपैति । अन्यथा तु विपर्ययः स्यात् । तस्मात् सूक्तमधिवेदनाद्यनुष्ठानम् ॥ ७४ ॥

कस्मात् पुनरधिविन्ना भर्तारं परित्यज्यान्यं न समाश्रयेत्[1] । यस्मात्—

**मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।**
**सेह कीर्तिमवाप्नोति मोदते चोमया सह ॥ ७५ ॥**

सहेत्युपमार्थे । अनुपगमे च स्तुतिदर्शनादुपगमे[2] दोषानुमानम् । ऐहिकफलं च कीर्तिः, आमुष्मिकं स्वर्गावाप्तिः । अन्यथा तु द्वयविपर्ययः । तस्मादधिविन्नयापि न भर्ता त्याज्यः ॥ ७५ ॥

भर्ता तु दोषवान्मध्ये त्याज्य, तादृशस्येव चाज्ञानन्यपराभिरनुष्ठया, यस्मात्—

**स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः ।**
**आ शुद्धेः संप्रतीक्ष्योऽपि महापातकदूषितः ॥ ७६ ॥**

दोषवतोऽपि भर्तुः[3] स्त्रीभिर्वचनमविकल्पमानाभिः कार्यम् । एष स्त्रीणां परो धर्मः । अवधारणार्थो वा परशब्दः । एष एव धर्मः । नान्यो धर्म इत्यर्थः । तथाच मनुः—

"विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
उपचर्यः स्त्रिया साध्व्या सततं देववत् पतिः ॥"

इति । यदा पुनर्महापातकदोषाद् व्यवहारायोग्यो भर्ता स्यात्, तदा किम् । तदाप्या शुद्धेः सप्रतीक्ष्यः । अभिविधावाङ् द्रष्टव्यः । अपेश्चोत्कृष्य योजना । महापातकदूषितोऽपीत्यर्थः । ततश्च तत्समादौ प्रागपि शुद्धेर्न त्याज्यः । संशब्दाच्च ब्रह्मचारिण्या तत्परया च प्रतीक्षितव्यः । सर्वथा स्त्रीभिर्भर्ता जीवन् मृतो वा न त्याज्य इति प्रकरणार्थः । तथाच व्यासः—"भर्त्रेकदेवता नार्यः" इति ॥ ७६ ॥

१. 'सम', २ म च दो' घ. ङ पाठ. ३ 'पुंसे' ख पाठ..

याश्चैव भर्तारमनन्यपरतयैवोपचरन्ति, ता प्रयत्नतो भर्तृभिरपि—

**लोकानन्त्यदिवप्राप्तिः पुत्रपौत्रप्रपौत्रिका ।**

स्त्रीतः ॥

**यस्मात् तस्मात् स्त्रियः सेव्याः**

किञ्च,

**भर्तव्याश्च सुरक्षिताः ॥**

लोकप्राप्तिरानन्त्यप्राप्तिर्दिवप्राप्तिश्च क्रमेण पुत्रपौत्रप्रपौत्रिका यस्मात्, तस्मात् स्त्रियः सेव्याः । तथाचाहुः —

"पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥"

इति । लोकः पृथिवी । आनन्त्यम् अन्तरिक्षम् । दिवः स्वर्ग । पाठान्तरेम् । लोकानन्त्य दिवप्राप्तिरिति । तस्यार्थः — दिवप्राप्तिस्त्वग्निहोत्राद्यनुष्ठानात् । लोकानन्त्य च तदभ्यासात् । तथाच चरकाः — "न स तस्माल्लोकात् प्रच्यवते, यस्त्रिरीजान." इति । किञ्च पुत्रपौत्रप्रपौत्रिका च सन्ततिरत एव । यस्माच्चैव तस्मात् स्त्रियः सेव्या इत्यादि समानम् ॥७७॥

स्त्रिय सव्या इत्युक्तम् । तत्रानियमप्राप्तावाह —

**षोडशर्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् ।**
**ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ॥ ७८ ॥**

रजोदर्शनादिः षोडश रात्रय ऋतुसञ्ज्ञक. कालः । तत्र नार्यो गर्भग्रहणसमर्था भवन्तीति तासु युग्मासु रात्रिषूपगच्छेत् । किमेव स्याद्, ब्रह्मचार्येव, एव गच्छन्नित्यनेनोपरितनश्लोकेनास्य सबन्धः । ब्रह्मचर्यशब्दश्चाय निरोधात् तत्फले वर्तते । ब्रह्मचर्यफल ब्रह्मलोकप्राप्तिरस्येत्यर्थः । तथाच वसिष्ठः —

"ऋतौ च गच्छन् विधिवच्च जुह्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकाद्"

---

१ 'या । य' ग. घ पाठ. २. 'र या । त्र' ग पाठ ३ ममन्वर ॥'
४ 'ब्रह्मफला' घ पा

इति। यद्वा कारणान्तराद् ब्रह्मचर्ये स्थितोऽपि गच्छेत्। यतो गच्छन्नपि ब्रह्मचार्येव, व्रतान्न हीयत इत्यर्थः। एव चातिप्रसक्ताचाह — पर्वाण्यमावास्यादीनि। आद्याश्चतॊ चतस्रो रात्रीर्वर्जयेदिति ॥ ७८ ॥

किञ्चान्यत् —

**एवं गच्छन् स्त्रियं क्षामां मघामूलं च वर्जयेत्।**
**सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत् पुमान्॥७९॥**

क्षामा दुर्बला रोगिणी वा। वन्ध्येत्यन्ये, यथाह भृगु —

"अधिविन्नां तु यो भार्यामुपेयादप्यृतो द्विज।
रक्षणार्थमकामश्चेत् प्राजापत्येन शुध्यति॥"

इति। तत्पुन. पुत्रार्थत्वादधिगमनस्यात्राप्रसक्तमेव। मघापौष्ण चेत्यन्ते पठन्ति। तथाच गणितज्ञा —

"प्रसवस्तु निषेकर्क्षात् दशमे योषितामुडो।
यस्मात् त वर्जयेत् तस्माद् रेवतीषु मघासु च॥"

इति। तत् पुनश्चशब्दादेव रेवत्यवाप्तेरकिञ्चित्। मूलमप्यश्विन्यादेर्गण्डान्तत्वाद् वर्जनीयमेव। उपलक्षणार्थत्वाच्च मूलश्रुतेरन्यदपीदृक् परिहरणीय, प्रमाणान्तरमूलत्वाच्चास्य पुनर्वर्जनवचनस्य। किञ्च, सुस्थ इन्दौ सकृत् पुत्र लक्षण्य जनयेत् पुमान्। सकृदित्यस्य पूर्वश्लोकगतेन सबन्ध. सविशेषेदित्यनेन। तथाचाह मनु[1] —

"निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्जयेत्।
ब्रह्मचार्येव भवति यत्र तत्राश्रमे वसन्॥"

इति। षड् निन्द्या. आद्याश्चतस्र[2] एकादशी त्रयोदशी च। अष्टावन्या अनिन्द्याः। एव चतुर्दश वर्ज्या। शिष्ट रात्रिद्वयम्। तत्रैका स्व्यर्थेति स्वभिप्राय। आचार्यस्तु पुत्रोत्पादनमेव नैयोगिक मन्यमान. सकृदिप्याह। अत एव चतस्रश्चेत्ययमपि चकारो न रात्र्यन्तरार्थ। चतस्र इति तिषेधोऽन्यदावर्जनार्थ[3]। अस्तु वैव रात्र्यन्तरग्रहणार्थश्चकारोऽपि, अधी-

१ 'अ' क पाठ २ 'श्च' ख पाट. ३ 'त' ङ पाट.

तिरेकात्। एवं गच्छन् लक्षण्यं जनयेत् पुमान् स्त्रीतोऽतिरिक्तशुक्रः।
तथाचाह मनुः — "पुमान् पुंसोऽधिके शुक्रे" इति। सर्वथा शास्त्रा-
बाधेन भिषग्दैवज्ञाद्युपदेशानुसारात् तथाभिगमनक्रिया, यथा च लक्षण्य-
पुत्रोत्पादः स्यादिति श्लोकद्वयस्यार्थः। पुत्रमिति चोद्देश्यत्वादतन्त्रं
संख्या। तथाच शङ्खः —

"पुत्रपौत्रप्रतिष्ठस्य बह्वपत्यस्य जीवतः"

इति। मन्त्रवर्णश्च "अशून्योपस्था जीवतामस्तु माते"ति बहुपुत्रतां दर्श-
यति, "दशास्यां पुत्रानाधेहि पतिमेकादशं कृधी"ति च। युग्मरात्र्यादि-
वचनं तु लिङ्गविवक्षयेत्यदोषः। पूर्वश्लोकादेवं च पुत्रार्थं स्त्रियः सेव्या
इत्यृतावेव गमनप्राप्तेः सकृद्गमननियमपरतयैतच्छ्लोकद्वयम् ऋतुगतरात्र्य-
न्तरनिवृत्तिफलं द्रष्टव्यम्। मानवं तु "ऋतुकालाभिगामी स्यादि"ति
मतेऽर्थे स्मर्यमाणणिनिप्रत्ययान्तत्वान्नियमपरतयैव व्याख्येयम्। श्लोका-
न्तरानुसारात्तु पुत्रार्थिनः सकृद् गमननियम इति व्याख्यातम्। एतेनैव
वासिष्ठं व्याख्यातम्। "ऋतुकालाभिगामी स्यादि"ति फलश्रुतेश्च "ऋतौ
गच्छन्नि"ति स्मृत्यन्तरानुसाराच्च युग्मायां रात्रौ सकृदिति व्याख्येयम्।
गौतमीयं त्वनृतुपरिसंख्यार्थम् "ऋतावुपेयादि"ति केचित्। ऋतावनृतौ वा-
र्थादेव गमनप्राप्ते, सूत्रान्तरारम्भाच्च — "सर्वत्र वा प्रतिषिद्धवर्जमि"ति।
तथा सूत्रद्वयमप्यनर्थकं स्याद्, अर्थादेव विकल्पप्राप्तेः। तस्मात् तदपि
नियमार्थमेव व्याख्येयम्। उत्तरसूत्रं त्वर्थप्राप्तमेवानृतौ गमनविकल्पमनूद्य
प्रतिषिद्धवर्जमित्येवमर्थम्। अयं त्वत्र संप्रदायः— ऋतावजातपुत्रः सकृ-
दगच्छन् प्रत्यवैति। जातपुत्रस्य त्वगमनेऽप्यदोषः। तथाचाहुः —

"ज्येष्ठ एव तु पुत्रः स्यात् कामजानितरान् विदुः"

इति। यावद्भार्यं चैकैकपुत्रानुत्पादने प्रत्यवायः। तदपेक्षयैव पुत्रोत्पादन-
विधानात्। अग्रवर्णासु तु जातपुत्रस्य याथाकाम्यं, स्मृत्यन्तरात् —

कृतदारोऽपरान् दारान् भिक्षित्वा योऽधिगच्छति।
रतिमात्रं फलं तस्य द्रव्यदातुस्तु सन्ततिः॥"

इति । अवरशब्दोऽयमसवर्णाभिप्राय, सवर्णयैव कृतदारत्वात् । यथा चैतदेव तथोक्तं प्राक् । जातूकर्णश्चाह — 'सवर्णया कृतदारो नान्यामिच्छेत् सन्तानस्यान्यगामित्वादि' ति । नार्युत्पादने तु विकल्प, रात्रिद्वयस्य मनुनोक्तत्वात् । अत्र च सकृच्छ्रुते । अनृतौ तु स्त्रीकामादेव गमन, "सर्वत्र वे"ति सूत्रारम्भात् । ऋतावप्युक्तकालातिरेकेणानृतुतुल्यत्वात् स्त्र्यनुरोधेनैव गमनमिति स्थिति । नन्वृतावपि स्त्रीकामादेव गमन युक्त, कामात्मतानिषेधात् । मन्त्रवर्णाच्च — "उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा" इति । अस्यैकस्मै वाग्विसृज्यमात्मानमर्पयति जायेव पत्ये उशती कामयमाना सुवासा ऋतुकालेष्विति स्त्रीकामादेवं गमनप्रवृत्तिं दर्शयति । नैवम् । उभयनियमद्योतनार्थोऽयं मन्त्रवर्ण इति । विशेषेण पुत्रोत्पादनचोदना स्त्रीपुंसयोर्यत, तथा च द्वयोरप्यगमने प्रत्यवायाम्नानम् । तथाचाह बौधायन- —

"ऋतुमती तु यो भार्यां सन्निधौ नोपगच्छति ।
तस्या रजसि तं मासं पितरस्तस्य शेरते ॥"

स्त्रियोऽपि,

"भर्तुः प्रतिनिवेशेन या भार्या स्कन्दयेदृतुम् ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं निर्धमेद् गृहात् ॥"

इति । तस्मादृतौ न स्त्रीकामादेव गमनं युक्तम् इत्येषा दिक् ॥ ७९ ॥

एवं तावदृतौ गमनावधिमुक्त्वाधुनेदानीमयथाकालं गमनस्यानियमं प्राप्तं आह—

**याथाकामी भवेद् वापि स्त्रीणां वरमनुस्मरन् ।**
**स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥ ८० ॥**

अपिशब्दस्य क्रमभेदेन योजना — याथाकाम्यपि वा भवेत् । स्त्रीवत् कामो यस्य स याथाकामी, वचनाभावेऽपि यदृच्छया गमनस्य प्राप्तत्वात् । यद्वा याथाकाम्यपि वा याथाकाम्येव स्यादित्यवधारणार्थो वा शब्द । कस्मात् । स्त्रीणां वरमनुस्मरन् । 'अपि न' श्व इत्यादि

माणाः पतिभिः, सह शयीरन्नि"त्यादिवाक्यं सूचयति। स्त्रीकामादनृतावपि गच्छेदिति श्लोकार्थः। किञ्च स्वदारनिरतश्चैव स्यात्। कुतः। स्त्रियो रक्ष्या यतः स्मृताः। उक्तमेतत्— भर्तव्याश्च सुरक्षिता इति। रक्षा च स्त्रीणां स्वदारनिरतत्वमेव परमार्थत्वेन। न तु ताडनादिका। तया तासामनर्थोऽपि संभाव्येत। तथाच लौकिकाः "पाञ्चालस्त्रीषु मार्दवमि"ति पठन्ति। चकार एवकारश्च पादपूरणार्थौ। यद्वोत्कृष्य स्त्रियो रक्ष्या एव यतः स्मृता इति योज्यम्। रक्षणविधिनैव स्वदारनिरतत्वनियमान्न विध्यन्तरापेक्षेत्यभिप्रायः। तथाच वसिष्ठः—

"या स्यादनतिचारेण रतिः सा धर्मसंश्रिता"

इति। मनुरप्याह—

"स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च।
स्वं च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति॥"

इति। "प्रसूतिरक्षणमसङ्करो धर्मः" इति च गौतमः। तेन रक्षणार्थं वैरश्रुतेरनृतावपि स्त्रीकामादगच्छतो दोष इत्यनवद्यम्॥ ८०॥

यस्माच्च लोकानन्त्यदिवप्राप्ति पुनर्गौनप्रपौत्रिका श्रुति, स्त्रिय सेव्या इति च स्थितम्। तस्मादेव कारणात्—

**भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः।**
**बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः॥८१॥**

सर्वोपकारकत्वात् सन्तानस्य स्त्रीणां च तत्कारणत्वात् सर्वैः पूज्या इति। न मूलान्तरापेक्षा। ज्ञातिशब्दो मातुलाद्यर्थः। चशब्दः सख्याद्यर्थः॥ ८१॥

एवं सर्वैः परिपूज्यमाना न गर्विता व्ययशीला च स्यात्। किं तर्हि—

**संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी।**
**कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा॥ ८२॥**

च स्यादिति शेषः॥ ८२॥

१. 'पितृभि.' – पाठ. २. 'तद्दक्ष' न. पाठः. ३. 'पत्नी', ४ 'द्यर्थः' म. पाठ ५ 'त्॥' न. प. ट. पाठ.

इद चान्यत्—

**क्रीडाशरीरसंस्कारसमाजोत्सवदर्शनम् ।**
**हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ॥ ८३ ॥**

तथाचाह मनुः—

"पान दुर्जनससर्ग पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहवासश्च नारीसन्दूषणानि षट् ॥"

इति ॥ ८३ ॥

यदा पुनरेता यनियमात् आस्वाभाव्यात् सवज्ञातिपूज्यत्वाद वा स्वय नानुतिष्ठेत् तदा क एनामनुशासयेत् । यदा वा प्रोषिता भर्ता विपन्नोऽनुपन्ना वा तदा काऽस्या पालक इत्यत आह—

**रक्षेत् कन्यां पिता विन्नां पतिः पुत्रस्तु वार्धके ।**
**अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित् स्त्रियाः॥८४॥**

काले कर्मणि वा । तथाचाह मनु'—

"नास्ति स्त्रीणा पृथग्यज्ञो न व्रत नाप्युपोषितम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥"

इति कर्मण्यपि पारतन्त्र्य दर्शयति ॥ ८४ ॥

नन्वेव सति स्त्रीणामदाय, पित्रादीना रक्षणप्रदर्शनात् । यद्वान्यरक्षकासन्निधाने यद्युत्तरक्षकाभावात् तदा कामचरितानि स्त्रीणा प्रसज्यन । मन्द! मैव—

**पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ।**
**हीना न स्याद्विना भर्त्रा गर्हणीयान्यथा भवेत् ॥ ८५॥**

भर्तृशब्दोऽय रक्षकमात्रे वर्तते । मात्रादिवचनादन्यामपि स्त्रिय वृद्धा काञ्चिदुपासीत । न तु स्वतन्त्रा स्यात् । यत्र वा कश्चित् पालयिता, तत्र यायात् । गर्हणीयान्यथा भवेत् । अस्मिन् लोके । प्रेत्य च नरकपात । अस्मादेव गर्हानुमानात् ॥ ८५ ॥

न वव मात भर्तृनस्त्यत्वात् स्त्रीणा तस्य च स्वतन्त्रत्वाद् यास्या जायास्ता सवा स्तुत्यवत् कर्माणि त्रानियुञ्जात । मैव—

**सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।**
**सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतराम् ॥ ८६॥**

सत्यां सवर्णायामन्यां धर्मकार्यं न कारयेदिति संबन्धः । सवर्णास्वपि ज्येष्ठया विना नेतरां कनिष्ठाम् । तासामपि यथाज्यैष्ठ्यम् । विधौ अग्निहोत्रादिकर्मणि । धर्म्ये आज्यावेक्षणादौ, क्रत्वर्थ इति यावत् । कनीयसीमपि तु सवर्णामेव कारयेत् । असवर्णास्वप्येकान्तरत्वज्यैष्ठ्यादिक्रमेण व्याख्येयम् ॥ ८६ ॥

नन्वेव सति ज्येष्ठाया म्रियमाणायां यदि कनिष्ठा प्रमीयेत, तस्या अग्निहोत्रादिभिः न भिन्ना दाहो न प्राप्नोति । उच्यते —

**दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।**
**आहरेद्विधिवद् दारानग्नींश्चैवाविलम्बितः ॥ ८७॥**

क्रत्वर्थेषु हि ज्येष्ठाया नियमो न पुरुषार्थेषु । पुरुषार्थश्च दाहः, शरीरसंस्कारत्वात् । अतश्च वृत्तवती चेत् संस्कर्तव्यैव । वृत्तवत्यधिकारिणीति यावत् । ननु पुरुषार्थेष्वपि वरकर्तृकेषु ज्येष्ठैवाग्रे संस्कर्तव्या । तथा नामास्तु । को दोषः । द्वयोर्युगपन्मरणे कनिष्ठायाः संस्कारलोपः स्यात् । पात्राणामग्नीनां च ज्येष्ठायामुपक्षीणत्वात् । प्रतिपाद्यत्वाच्च न पात्रान्तरोत्पत्तिः । अग्नीनां त्वशक्यतैव । एकचितिकरणेऽपि यथोक्ताया दाहाकृतोऽनुपपत्तिरेव । उच्यते । अयाज्ञिकचोद्यमेतत् । सन्तापजत्वादग्नीनाम् अनेकाग्निसम्प्याहवनीयसन्तापजे तच्छब्दलाभात् । नन्वेकस्मिन् सन्तापेन रूढे शिष्टोऽग्निरनाहवनीय एव, लौकिकत्वात् । केनाख्यातमायुष्मतः । अपवृक्तकर्मा हि लौकिको भवति । दाहार्थं चोद्धृतो दाहानुसारेणैवापवृज्यतेति विशेषाग्रहणाच्चोद्धरणस्य सर्वदाहार्थत्वमविरुद्धम् । पात्रचयस्तु ज्येष्ठाया एव, मुख्यत्वात् । शरीरसंस्कारत्वेऽपि च पात्राणामप्रयोज्यत्वं स्विष्टकृदुत्तरार्धस्येव । तेनैव च कनीयसी निन्द्यते । यद्वा, अग्नीनामेव संस्कारकत्वम् । पात्रचयस्तु तत्प्रतिपत्तिः । तथा च पात्रेषु द्वितीयैव दृश्यते — "जुहूं घृतेन पूर्णां दक्षिणे पाणौ सादयती"ति ।

१ 'इति' ग. पाठः । २. 'न्यनि' ब. पाठः । ३. 'अंशि' स. पाठः ।

"अग्निभिरादीपयन्ती" त्यग्निषु तृतीयाप्रतिपाद्यत्वं तु कर्मान्तरानुसारात् । "यावद्भिरग्निभिर्दहन्ती यज्ञपात्रैश्चे' ति तृतीया अर्थप्राप्तत्वादनुवाद । यज्ञा सुधिवाक्य एवेनादत्वादकिञ्चित् । तस्मात् तावत्य पत्न्य सर्वा एवा ग्निहोत्राद्यर्थेनाग्निना दग्धव्या इति स्थितम् । केचित्सदारत्वेन पत्न्या इच्छन्ति । तत्पुन "आहिताग्निमग्निभिर्दहन्ती ति लिङ्गन्याग्निसंज्ञितत्वात् प्रातिपदिकार्थसमवाय श्रुतिविरुद्धम् । तथा काठके श्रुतौ ' नवाग्नयो वा एते भवन्ति, ये पत्न्या प्रमीताया धार्यन्त ' इत्युपक्रम्य "तस्मात् पत्नीमग्निभिर्देहेदि' ति स्पष्टो विशेषविधि । सन्नाराद्वचनानि श्रु तिविरुद्धत्वादनाख्यान । एवमर्थवादाशुद्धेन विषय प्रत्याख्येया इत्यल प्रसङ्गेन । नन्वसवर्णाग्निहोत्रेण न दह्या । यथाह मनु —

' "एवंवृत्तां सवर्णां स्त्रीं द्विजाति पूर्वमारिणीम् ।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥ '

इति । मैवम् । आहिताग्नित्वाविशेषात् । मानव तु सवर्णाग्रहणमधिकारा-पलक्षणार्थम् । यज्ञप्राप्त्या हि सवस्य ब्राह्मणत्वात सावर्ण्य यत । तथा चाम्नाय — "ब्राह्मणो हि जायते यो यज्ञाज्जायत ' इति । अपिच दाह-येदग्निहोत्रेण सवर्णां चेति वाक्यभेद स्यात् । तस्मादा नवैव दाह । आहरेद् विधिवद् दारानग्नीश्चाविलम्बित । शीघ्रम् । यद्यविलम्बित शब्द स्वहेतावपराभवे विज्ञय । न चेत् पराभवो गार्हस्थ्याद् दारान् हरेत् । भङ्गश्चेदाश्रमान्तर प्रतिपद्येत । अविद्यमानदारस्य च दारक्रिया दृष्टार्थत्वात् । विधिवदित्यस्याप्ययमेवार्थ । न चयोग्या पत्न्यस्ति, अ-न्यामुपयच्छेदिति । आहरणाधिकारश्चेदाहरत् । धर्मप्रजासम्पन्नेऽन्यानधि कारात् । यत्तु "अन्यतरापाये दारान् कुर्वीते' ति । तस्याप्ययमेवावसर समर्थ , कृताधानस्योद्वाहासम्भवात् । तथा स्मरन्ति — ' यदुद्वहेत् प्रागग्न्याधेयाद्" इति । न्यायविदश्च याज्ञिका 'सनाथत्वात् पुनर्वे न प्रयोजयेदि"त्याहु । यत् पुन "आहृताग्न्या भार्याया पुनराद"धीति"ति, तदावसथ्यविषयमित्यल प्रसङ्गेन विस्तरेण ॥ ८७ ॥

---

१ ाद के ख ग पाठ २ स्यात्यमेव' घ पाठ ३ 'या ए' ख पाठ ।

वृत्तवत्या अग्निहोत्रेण दाह इत्युक्तम् । किं पुनस्तल्लक्षणमित्यत आह—

**पतिप्रियहिते युक्ता स्वाचारा संयतेन्द्रिया ।**
**सेह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥ ८८ ॥**

एतद् वृत्तवत्या लक्षणम् । प्रियहिते युक्ता न रामणीयकप्रधाना । साध्वाचारा कामाद्यनभिभूता च या, सेवेहास्मद्दर्शने कीर्तिं यज्ञाधिकारं प्राप्नोति प्राकाश्यात् कीर्तनाद् वा । प्रकरणानुग्रहाच्च कीर्तिरधिकार, यज्ञो वा । प्रेत्य चानुत्तमां गतिमिति । नास्या उत्तमा अन्या गतिरस्तीत्यनुत्तमा ज्ञानकर्मसमुच्चयगम्या भर्तृसायुज्यलक्षणा, तां प्राप्नोतीति व्याख्येयम् ॥ ८८ ॥

पुत्रार्थं स्त्रिय सेव्या भर्तव्याश्च सुरक्षिता इत्युक्तम् । सवर्णायाश्चोत्कृष्टत्व विवाहनियमश्च । अस्येव दार्ढ्यार्थे जातिनि[2]रूपणमाह—

**सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।**
**अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥ ८९ ॥**

यस्मात् सवर्णास्वेव सवर्णेभ्यः सजातयः पुत्रा जायन्ते, यस्माच्चानिन्द्यब्राह्मादिविवाहोढास्वे[3]नैते उत्पन्नाः पुत्राः सन्तानवृद्ध्या पितृभ्य आनृण्यं कुर्वन्ति, यस्माच्चान्यथा जातिनाशाद् विपर्ययः, तस्मात् पूर्वोक्तं सर्वं विवाहादि प्रयत्नतोऽनुष्ठेयमिति श्लोकार्थः प्रकरणार्थश्च समासतः ॥

एवं तावत् सवर्णाया अव्यभिचारे जातिनियम उक्तः । व्यभिचारेऽप्युत्कृष्टवर्णविषय एव श्रेयान् । यतः—

**विप्रान्मूर्धावसिक्तं स्त्री राज्ञोऽम्बष्ठं विशोऽङ्गना ।**
**शूद्राङ्गना निषादाख्यं सूते पारशवं तथा ॥ ९० ॥**

विप्राच्छूद्रायामुत्पन्नस्यैकस्यैव संज्ञाद्वयं निषादः पारशव इति च द्रष्टव्यम् । किमर्थं तर्हि द्वितीया पारशवसंज्ञा । असवर्णाव्यभिचारनिन्दा-

---

१. 'रा च रा' घ. ङ. पाठः. २. 'यमाया' घ. पाठः. ३. 'व तत उ' स. ट. पाठः ४. 'ग्र, त' घ. पाठ.. ५. 'र्थं द्वि' घ. ङ. पाठ.

र्थम् । ब्राह्मणबीजोद्भवोऽपि तत्संस्कारहानात् पारयन्नेव जीवन्नेव शव इत्यर्थः । तथाचाह मनुः —

"स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः ।"

इति । उत्कृष्टव्यभिचारस्तुत्यर्थं तु विप्रान्मूर्धावसिक्तमभिषेकयोग्यं राज्ञः क्षत्रियस्यापि स्त्री जनितवती । एवं सर्वत्र योज्यम् ॥ ९० ॥

किञ्च—

**माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् ।**
**शूद्रायां करणो वैश्याद् विन्नास्वेष विधिः स्मृतः ॥९१॥**

वैश्यायां माहिष्यः शूद्रायामुग्रः क्षत्रियात् । ननु च शूद्रापरिणयनप्रतिषेधाद् विन्नास्वेष विधिः स्मृत इति विरुद्धम् । अनभिज्ञः श्लोकार्थस्यायुष्मान् । विन्नासु हीनवर्णासु । विन्नास्वेष विधिः, यदुत स्वजातिनाशः, तस्मान्न हीनवर्णामुद्वहेदित्यस्यार्थः । अत एव चाविन्नास्वपि संज्ञान्तरालाभः । इतरथा तत्र संज्ञान्तरक्रियाप्रसङ्गः । उत्कृष्टवेदने तद्व्यभिचारे वा वर्णोत्कर्ष इति स्तुतिपरतयैवं विधिशब्दयोजना ॥ ९१ ॥

उत्कृष्टवर्णसबन्धेनोत्कर्षदर्शनात् प्रातिलोम्येऽपि तथात्वाशङ्का मा भूदित्यत आह—

**ब्राह्मण्यां क्षत्रियात् सूतो वैश्याद् वैदेहकस्तथा ।**
**शूद्राज्जातश्च चण्डालः सर्वधर्मविगर्हितः ॥ ९२ ॥**
**क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव च ।**
**शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ ९३ ॥**

भूतार्थप्रत्यययोगः प्रयोगानादित्वज्ञापनार्थः । अत एव स्मृत्यन्तरेष्वेकस्यैवार्थस्यानेकसंज्ञादर्शनेऽपि देशभेदेन तथाविधप्रयोगसत्तानुमानम् । न पुनः पारिभाषिकत्वकल्पना, वेदेष्वप्यनेकविधसंज्ञोपलब्धेः ॥ ९२, ९३ ॥

१. 'चम' घ ङ पाठ २. न तु व्यभि' ख ङ. पाठः. ३. 'ख ग ।

एवं तावत् प्रातिलोम्येनोत्कृष्टसम्बन्धे सति चण्डालत्वादिप्राप्तिः । आनुलोम्ये पुनः—

**माहिष्येण करण्यां तु रथकारः प्रजायते ।**
**असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमतः ॥ ९४ ॥**

क्षत्रियेण वैश्यायां जातो माहिष्यः वैश्येन शूद्रायां करणी । तस्यां करण्यां माहिष्याद् रथकारो जायते । स चाधानाधिकृतो यस्मात् तस्मादानुलोम्येन युगान्तरेपूत्कर्षः, प्रदर्शनार्थत्वात् प्रातिलोम्येनापकर्ष इति द्रष्टव्यम् । तथाच स्पष्टीकरोति—असत्सन्तस्तु विज्ञेया इति । यथाक्रमेणासन्तः प्रतिलोमाः सन्तश्चानुलोमाः । तथाच गौतमः—"प्रतिलोमास्तु धर्महीनः" इति ॥ ९४ ॥

किञ्च—

**जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा ।**
**व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥ ९५ ॥**

जात्युत्कर्षो वर्णोत्कर्षः, क्षत्रियस्यापि ब्राह्मण्यप्राप्तिः । कोऽयं कूश्माण्डपातः । मैवम् । उक्तवर्णान्तरविहितधर्मव्यवच्छेदेन ब्राह्मणादिशब्दप्रवृत्तिरित्यर्थः । पञ्चमे सप्तमे वा परिवर्ते । क्षत्रियस्य पञ्चमे वैश्यस्य सप्तमे ब्राह्मण्यम् । क्षत्रियजत्वे तु तस्यापि पञ्चम एव । पूर्वजातिविहितकर्मव्यवच्छेदाद् जात्यन्तरोक्तकर्मप्राप्तिश्च तच्छब्दलाभादनवद्यम् । कुतः प्राप्तिव्यवच्छेदाविति चेद्, अस्मादेवोत्कर्षवचनाद्, अमीमांस्यत्वाच्च शास्त्रस्य । तदेव द्रढयन्नाह—व्यत्यये कर्मणां साम्यम् । उक्तोत्कर्षव्यत्यये युगपरिवर्ताभावे प्रकृतिविहितान्येव कर्माणि भवन्तीत्यर्थः । यदि मूर्धावसिक्तां ब्राह्मणः परिणयेत्, तत्सुतां तत्सुतां च, ततः पञ्चमे परिवर्ते ब्राह्मणकर्माधिकारः । यदि मूर्धावसिक्त एव तां तत्सुतां तत्सुतां च, ततः क्षत्रियकर्मैव भवति । किञ्च तेषामप्यन्तरप्रभवानां पूर्वेणैव न्यायेनानुलोम्यप्रातिलोम्येनौत्तराधर्यं, योज्यमिति शेषः । ग्रन्थगौरवभयात्तु तत्संज्ञानभिधानम् । सर्वथोत्कृष्टवर्णसङ्करे स्त्रीणामुत्कर्षः । अन्यथा तु विपर्ययः । पुरुषाणां तु द्विधाप्यपकर्ष इति प्रपञ्चनीयं व्याख्यातृभिः । अयं च मार्गः ।

१. 'प्रवृत्ति' ङ पाठः २. 'रजानां' ख पाठः,

आनुलोम्यप्रातिलोम्ये मूर्धावसिक्तादीनां वर्णचतुष्टये चतुर्विंशतिरेव वर्णाभासा जायन्ते । स्वयं च षट् । एवं त्रिंशत् । प्रातिलोम्येऽप्येवमेव सूतादीनामित्येवं षष्टिर्वर्णाभासाः । तथाच स्मरन्ति —

"प्रातिलोम्यानुलोम्येन वर्णैस्तज्जैश्च वर्णतः ।
षष्टयेवान्ये प्रजायन्ते तत्प्रसूतेस्त्वनन्तता ॥ ९५ ॥" इति ।

इति वर्णजातिविवेकप्रकरणम् ।

---

अथ गृहस्थधर्मप्रकरणम् ।

एवं तावद् गृहस्थधर्ममुक्त्वा, इदानीं[1] गृहस्थस्यान्वाह्निकं विवक्षुस्तन्मूलभूताग्निनियमामाह—

**कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।**
**दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ॥ ९६ ॥**

दृष्टान्तार्थं श्रौतवचनम् । यथैव श्रौतमग्न्यन्तरे क्रियमाणमकर्मैव स्याद्, एवं स्मार्तमक्षतहोमान्नपाकादि । वैवाहिकश्चाग्निश्चतुर्थ्युत्तरकालं, तेनैव पत्न्यर्धीवासे[2], पत्नीवतश्चाधिकारात् । दायविभागकालाहृते वा । अपिशब्दात् कालान्तराहृतेऽपि । यथा विद्यमानपत्नीकस्य पत्न्यन्तरमरणे । पत्न्यन्तरोत्पादे तु वैवाहिकवचनादेव सिद्धिः । तथाच गौतमः — "भार्यादिरग्निर्दायादिर्वे"ति । नन्वाधानाधिकृतस्यायं कालविधिः न विद्यमानाग्नेः पत्न्यन्तरोत्पादमात्रेणाधिकारः । तस्या एवाधिकार इति चेत् । न । सहत्वासंभवात् । तदनुरोधात् सहत्वापत्तिरिति चेत् । न । अग्निमत्त्वात्, तत्त्यागासंभवाच्च । नन्वेमपि मध्यक द्रव्यं कथमिवैकस्त्यक्तुं क्षमः स्यात् । मैवम् । यथैव रजस्वलायां पत्न्यामेकाक्येव यजमानस्त्यजेद्, वचनात्, तदनुज्ञामात्रेण, एवमन्यत्रापीत्यदोषः । तथैव चासौ कारयितव्या, यथात्मीयसवन्ध न विरोधाय कुर्यात् । यद्वा द्रव्याभाव एवास्याः, कुतः । अस्मादेवानधिकारात् । मैवम् । नहि क्रत्वर्थं द्रव्यार्जनं, पुरुषार्थमेव । तच्चानधिकारेऽप्यव्याहतमेव । "असदाहवा एताः परगृहा-

---

१ 'णीं आ' घ पाठ  २. 'सू', ३ अपेदा' घ पाठ  ४. 'संप्राप्ते' घ. पाठ.

णामैश्वर्यमवरुन्धते" इति श्रुतेः। अधिकारानपेक्षो हि द्रव्यसंबन्धः। सत्यम्। स तु पूर्वतरज्येष्ठाया एव। तदतिक्रमाच्च परिणीताप्यस्वामिन्येव, वेश्यावत्। नन्वधिवेदननिमित्ते सत्यूढा कथमिवास्वामिनी स्यात्। उच्यते। द्विविधं ह्यधिवेदनं, धर्मप्रजापायरूपत्वात्। तत्र धर्मापाये परैव स्याद्, न पूर्वा। प्रजापाये तु कुतो धर्माधिकारः। अत्रोच्यते। अहो सूक्ष्मदर्शित्वमाचार्यवतः। धर्मप्रजापायावधिवेदनं प्रयुञ्जाते। न त्वधिविन्नायास्तादर्थ्यमापादयतः, प्रमाणाभावाद्, अन्यद्धि तादर्थ्यमन्या च प्रयुक्तियतः। तत्र "अन्यतरापाये दारान् कुर्वीते"ति-स्मृतेरर्थः। दारत्वाच्च तदुद्देशविहितं द्रव्यादि कथमिव न स्यात्। अतो नास्वामित्वम्। यच्चोक्तं तदनुज्ञयैव करणमिति। तदप्यसत्। पूर्वाग्निविनाशात्। कुतो विनाश इति चेत्। कारकत्वापायात्। पत्नीयजमानयोर्हि कारकैक्यं वा स्याद्, भेदो वा[1]। द्विधापि च द्रव्यान्तरोपादानाद् विनाशः, अग्नीषोमवत्। नन्वयं दोषः कारकानुप्रवेशे-सति स्यात्। वयं त्वनुप्रवेशमेव वारयामः। अपायस्तु सिद्धे कारकत्व इति वैषम्यम्। मैवम्। न शक्यः स्वेच्छामात्रेणानुप्रवेशः फलोत्साहाविशेषात् प्रसज्यमानो वारयितुम्। यदि हि कर्तृत्वपूर्वोऽधिकारः स्यात्, ततस्तदनुपपत्त्या वार्येतापि। अधिकारपूर्वके[3] तु कर्तृत्वे दुर्निवारोऽनुप्रवेशः। ततश्च पूर्वकारकविनाशात् तदाहिताग्निविनाशः। ततश्च सिद्धो निमित्तान्तराभावाद् विवाह एव पुनरग्न्युत्पादः। तथाच न्यायमूलैव स्मृतिः। "आहृतोढायां पुनरादधीत" इत्यलमत्यभिधानेन। अतश्चापिशब्दः कालान्तरार्थः। यथोक्तमस्माभिः॥ ९६॥

अथ चान्यस्तद्धर्म.—

**शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः।**
**प्रातः सन्ध्यामुपासीत दन्तधावनपूर्विकाम्॥ ९७॥**

दन्तधावनविध्यर्थ एवायं श्लोकः, अन्यस्य ब्रह्मचार्युक्तस्यैवानुवादात्, तत्प्रकरणोक्तस्यानिषिद्धस्य सर्वाश्रमसाधारण्यात्। श्लोकाक्षराण्यृज्वर्थान्येव। यत्तु "रजस्वलो जटिलः पङ्कदन्त उष्णीषी शिखी वदति

---

१. 'ति च श्रु' घ. ङ. पाठ. २. 'वा स्याद्। द्वि', ३. 'के क' ग. पाठ.

सत्यमेवे"ति, तदमावास्यादिविषयम् । तत्रैव सत्यवचननियमात् । तथा-च श्रुतिः—"पङ्कदन्तो यजती"ति । एवं व्यासः —

> "दन्तकाष्ठममावास्यां मैथुनं च चतुर्दशीम् ।
> हन्ति सप्तकुलं तात तैलग्रहणमष्टमीम् ॥"

इति । द्वितीया चात्र सप्तम्यर्थे द्रष्टव्या ॥ ९७ ॥

किञ्चान्यत् —

**हुत्वाग्नीन् सूर्यदैवत्याञ्जपेन्मन्त्रान् समाहितः ।**
**वेदार्थानधिगच्छेत शास्त्राणि विविधानि च ॥ ९८ ॥**

जपकर्मणो दीर्घकालत्वाद्धोमस्य कालबाधो मा भूदित्यारम्भः । वेदार्थान् मन्त्रब्राह्मणव्याख्यानानि । शास्त्राणि व्याकरणादीनि । चशब्दो विद्यान्तरार्थः । अनेन चानिर्वृत्ताखिलधर्मज्ञानस्यापि गार्हस्थ्याधिकार इति ज्ञापितं भवति । यद्वा, ज्ञातवेदशास्त्रस्यैवायं धारणार्थो विधिः । तथाच व्यासः—"ज्ञातवेदार्थतत्त्वेने"ति ॥ ९८ ॥

इदं चान्यत् —

**उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ।**
**स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत् तथा ॥ ९९ ॥**

योगोऽलब्धलाभः । लब्धपरिपालनं तु क्षेमः । तदर्थमीश्वरमुपेया-दिति । अनेनैतद् दर्शयति — न पर्याप्तधनस्यैव कर्मप्रवृत्तिः । किं तर्हि प्रवृत्तकर्मणोऽप्यन्वहं द्रव्यार्जनमिति । अत एव च मर्यादानन्त्याहरणो-पदेशः । योगाद्यर्थवचनाद्द्रव्यस्यैवाय विधिर्नृपः । किञ्च । स्नात्वा देवान् पितॄंश्च तर्पयेदुदकेन । अर्चयेत् पुष्पाद्युपहारैः । चशब्दात्पौरांश्च । स्नात्वेति सुखार्थस्याप्ययमेव काल इत्येवमर्थः । तर्पणे दक्षिणामुखः पितृतीर्थेन भूमावसौ तृप्यत्वित्येवमादिप्रकारार्थः ॥ ९९ ॥

---

1. [illegible] ५ [illegible] २ [illegible] ९. ६. ३.

किञ्चान्यत्—

**वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।**
**जपयज्ञार्थसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ १०० ॥**

देवाद्यर्चनानन्तर्यप्रदर्शनार्थं पूर्वमेवायं जपयज्ञ उक्तः । भेदेनाथर्वग्रहणं छन्दःसमाधानार्थं वेदत्वेऽपि । किञ्च विद्यां चाध्यात्मिकीं ब्रह्मविद्यामुपनिषल्लक्षणां जपेत् । तथाच गौतमः—"उपनिषदो वेदान्ता इति पापक्षपणाये"त्याह । ऋज्वन्यत् ॥ १०० ॥

इदानीं गृहस्थस्यासाधारणान् महायज्ञानाह—

**बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ।**
**भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ १०१ ॥**

मखो यज्ञ । बलिकर्मादयो भूतादीनां क्रमेण पञ्च महायज्ञाः । कार्या इति शेषः । तथाचाम्नायः—"पञ्चमहायज्ञास्तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञः" इति । "अहरहर्भूतेभ्यो बलिं हरेदि"त्यादिप्रत्यक्षश्रुत्युक्तानामपि स्मार्तत्वप्रसिद्ध्यर्थोऽयं विधिः । अतश्चानौपासनस्यानधिकारः । "कर्म स्मार्तं विवाहाग्नावि"ति वचनात् ॥ १०१ ॥

अग्न्यनपेक्षत्वाद् तु ब्रह्मयज्ञ काम प्रवर्तेत । भूतपितृयज्ञयोरप्यग्न्यनपेक्षत्वाद् प्रवृत्तिप्राप्तावाह—

**देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत् ।**
**अन्नं भूमौ श्वचण्डालवयोभ्यश्चैव निक्षिपेत् ॥१०२॥**

यस्माद् देवेभ्यो हुतशेषाद् बलिकर्म तदन्तर्गतश्च पितृयज्ञः स्वधाकारोपदेशात् । तस्मादग्न्यभावे तयोरप्रवृत्तिः । सर्वं चैतद् गृह्याद् विशेषतोऽवगन्तव्यम् । अत्र चास्मिन्नेव काले श्वचण्डालादिभ्यो बहिर्भूमौ

१. 'तेत । भू' ख. पाठ.

निक्षिपेत्। क्रमविधानार्थश्चकार। एवकारोऽतिथिदानादपि पूर्वकरणाद् विचिकित्सानिवृत्त्यर्थः। वैश्वदेवार्थपाकसम्बन्धाच्चानग्निकस्याप्रवृत्तिः। केचित्तु तस्मादेव पात्रस्थादन्नाद् देवेभ्यो हुत्वा शेषाच्च बलिकर्म कृत्वा यच्छिष्टमन्नं तद् बहिर्निक्षिपन्ति। तत्तु बलिकर्मणि पात्रप्रक्षालनोपदेशादनादृत्यम्। अत्रापि च पुनरन्नवचनमन्योपादानार्थम्॥ १०२॥

एवं वायसादिदानान्तं कर्म कृत्वा ततः—

**अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम्।**
**स्वाध्यायं चान्वहं कुर्यान्न पचेदन्नमात्मनः॥१०३॥**

अन्नं पितृमनुष्येभ्यो देयमित्यनेन हन्तकारस्योभयार्थस्य विधानम्। स्वधाकारातिथिसत्कारयोर्महायज्ञत्वेन पूर्वमेव विहितत्वाद्धन्तकाराख्यमन्नदानान्तरमेव पितृमनुष्यार्थं विधीयते। तथाच पारस्करः—"उद्धृत्यान्नं ब्राह्मणायावनेज्य दद्यादि"त्युभयार्थत्वमेवावनेज्येति लिङ्गाद् दर्शयति। किञ्च। अप्यन्वहं दद्याज्जलं, पितृमनुष्ययज्ञनिर्वृत्त्यर्थम्। न तु हापयेदिति शेषः। तथाचाम्नायः—"अहरहर्दद्यादोदपात्रादि"त्यादि। यद्वा। अपिशब्दः समुच्चयार्थः। जलमप्यन्वहं दद्यात्। किञ्च स्वाध्यायं च ब्रह्मयज्ञमन्वहं कुर्यात्। चशब्दाद् भूतयज्ञादींश्चेति योज्यम्। ब्रह्मयज्ञादिपुनःश्रुतिश्चान्वहं कुर्यादित्येवमर्थम्। तेन चाभ्यर्हितत्वात् कर्मान्तराशक्तावप्येषामनुष्ठानम्। किञ्च। न चात्मार्थमन्नं पचेदित्यनेन वैश्वदेवार्थतैव पाकस्येति ज्ञाप्यते। ततश्च स्मार्तत्वादौपासन एव भवति। तथाच मनुः "पङ्क्तिं चान्वाहिकीं गृही"त्यनेन पङ्क्तिमाह। आम्नायश्च "स यत्र सुरान् यजते तेन मनुष्या भुञ्जते" इति पक्त्यर्थतां दर्शयति। प्रतिषेधमात्रं त्वप्रकृतमेव स्यात्। ततश्चानग्निकस्यात्मार्थमपि पचतो न दोष इति स्थितम्॥ १०३॥

एवं पितृमनुष्येभ्यो हन्तकारं निरूप्य, ततः—

**बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः।**
**संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्॥१०४॥**

1 मं० ३ प ९६.

किञ्चान्यत्—

**वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।**
**जपयज्ञार्थसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ १०० ॥**

देवाद्यर्चनानन्तर्यप्रदर्शनार्थं पूर्वमेवायं जपयज्ञ उक्तः । भेदेनाथर्वग्रहणं छन्दःसमाधानार्थं वेदत्वेऽपि । किञ्च विद्यां चाध्यात्मिकीं ब्रह्मविद्यामुपनिषल्लक्षणां जपेत् । तथाच गौतमः—"उपनिषदो वेदान्ता इति पापक्षपणाये"त्याह । ऋज्वन्यत् ॥ १०० ॥

इदानीं गृहस्थस्यासाधारणान् महायज्ञानाह—

**बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ।**
**भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ १०१ ॥**

मखो यज्ञ । बलिकर्मादयो भूतादीनां क्रमेण पञ्च महायज्ञाः । कार्या इति शेषः । तथाचाम्नायः—"पञ्चमहायज्ञास्तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञः" इति । "अहरहर्भूतेभ्यो बलिं हरेदि"त्यादिप्रत्यक्षश्रुत्युक्तानामपि स्मार्तत्वप्रसिद्ध्यर्थोऽयं विधिः । अतश्चानौपासनस्यानधिकारः । "कर्म स्मार्तं विवाहाग्नावि"ति वचनात् ॥ १०१ ॥

अग्न्यनपेक्षत्वात् तु ब्रह्मयज्ञ काम प्रवर्तेत । भूतपितृयज्ञयोरप्यग्न्यनपेक्षत्वात् प्रवृत्तिप्रसक्तावाह—

**देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत् ।**
**अन्नं भूमौ श्वचण्डालवयोभ्यश्चैव निक्षिपेत् ॥१०२॥**

यस्माद् देवेभ्यो हुतशेषाद् बलिकर्म तदन्तर्गतश्च पितृयज्ञः स्वधाकारोपदेशात् । तस्मादग्न्यभावे तयोरप्रवृत्तिः । सर्वं चैतद् गृह्याद् विशेषतोऽवगन्तव्यम् । अन्नं चास्मिन्नेव काले श्वचण्डालादिभ्यो बहिर्भूमौ[1]

---

1 'र्तेत । भू' ख. पाठ .

निक्षिपेत् । क्रमविधानार्थश्चकार । एवकारोऽतिथिदानादपि पूर्वकरणाद् विचिकित्सानिवृत्त्यर्थः । वैश्वदेवार्थपाकसवन्धाच्चानग्निकस्याप्रवृत्तिः । केचित्तु तस्मादेव पात्रस्थादन्नाद् देवेभ्यो हुत्वा शेषाच्च बलिकर्म कृत्वा यच्छिष्टमन्न तद् बहिर्निक्षिपन्ति । तत्तु बलिकर्मणि पात्रप्रक्षालनोपदेशाद-नादृत्यम् । अत्रापि च पुनरन्नवचनमन्योपादानार्थम् ॥ १०२ ॥

एव वायसादिदानान्त कर्म कृत्वा तत —

**अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ।**
**स्वाध्यायं चान्वहं कुर्यान्न पचेदन्नमात्मनः ॥१०३॥**

अन्न पितृमनुष्येभ्यो देयमित्यनेन हन्तकारस्योभयार्थस्य विधानम्। स्वधाकारातिथिसत्कारयोर्महायज्ञत्वेन पूर्वत्रैव विहितत्वाद्धन्तकाराख्यम-न्नदानान्तरमेव पितृमनुष्यार्थं विधीयते । तथाच पारस्कर —"उद्धृत्यान्न ब्राह्मणायावनेज्य दद्यादि"त्युभयार्थत्वमेवावनेज्येति लिङ्गाद् दर्शयति । किञ्च । अप्यन्वह दद्याज्जल, पितृमनुष्ययज्ञनिर्वृत्त्यर्थम् । न तु ह्रापयेदिति शेषः । तथाचाम्नायः—"अहरहर्दद्यादोदपात्रादि"त्यादि । यद्वा । अपिशब्द समुच्चयार्थः । जलमप्यन्वह दद्यात् । किञ्च स्वाध्याय च ब्रह्मयज्ञमन्वह कुर्यात् । चशब्दाद् भूतयज्ञादींश्चेति योज्यम् । ब्रह्मय-ज्ञादिपुनःश्रुतिश्चान्वह कुर्यादित्येवमर्थम् । तेन चाभ्यर्हितत्वात् कर्मान्त-राशक्तावप्येषामनुष्ठानम् । किञ्च । न चात्मार्थमन्न पचेदित्यनेन वैश्व-देवार्थतैव पाकस्येति ज्ञाप्यते । ततश्च स्मार्तत्वादोपासन एव भवति । तथाच मनु "पक्तिं चान्वाहिकीं गृही"त्यत्रैव पक्तिमाह । आम्ना-यश्च "स यत्र सुरान् यजते तेन मनुष्या भुञ्जते" इति पक्त्यर्थतां दर्शयति । प्रतिषेधमात्र त्वप्रकृतमेव स्यात् । ततश्चानग्निकस्यात्मार्थमपि पचतो न दोष इति स्थितम् ॥ १०३ ॥

एव पितृमनुष्येभ्या हन्तकार निर्वर्त्य, तत —

**बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।**
**संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥ १०४॥**

१ ग घ प पाठ.

सशब्दो यथार्हभोजनार्थः । यथाह पारस्करः—"बालज्येष्ठा गृह्या यथार्हमश्नीयुरि"ति । ऊढा दुहितरः स्ववासिन्यः । तद्वचनादेव दण्डापूपवद् बालवचनाद्वा कन्यकाप्राप्तौ पुनर्वचनं स्ववासिनीनां तत्रानियमज्ञापनार्थम् । गर्भिणीवचनं पत्न्यर्थम् । आतुरग्रहणं तु स्वयमप्यातुरः पूर्वमश्नीयादित्येवमर्थम् । अतिथिवचनं दृष्टान्तार्थम् । चशब्दोऽभ्यागतार्थः । एवं सर्वान् भोजयित्वा दम्पत्योः पश्चाच्छेषभोजनम् । यद्वा । सर्वोपयोगे पुनःपाकप्रयुक्तिनिवृत्त्यर्थम् । तथाच स्मरणं—"सर्वोपयोगे न पुनः पाकः" इति । अन्योन्यं तु दम्पत्योः क्रमानियमः । पत्नी वा पश्चात् । तथाच पारस्करः—"पश्चाद् गृहपतिः पत्नी च । पूर्वो वा गृहपतिः" इति ॥ १०४ ॥

इदानीं भोजनप्राप्तौ नियममाह—

**अपोशानेनोपरिष्टादधस्तादश्नता तथा ।**
**अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥ १०५ ॥**

प्राप्तस्यैवापोशानस्य तथाशब्दः प्रकारार्थः भोजनाङ्गमाचमनान्तरं विदधाति । अत एव चानग्नवचनेन श्रुतिमनुकरोति—"तस्यो मे किमन्नं किं वासः" इति प्रकृत्य "तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्ति । अशित्वा चाचामन्ति । *अमृतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते । तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदि"त्युभयत्राचमनमेव दर्शयति । आचमनमात्राङ्गतया च गुणविधानात् साङ्गमेव तत् स्यात् । लौकिकास्तु नित्यत्वात् प्रधानमात्रक्रियात एव कृतित्वं मन्यमानाः सकृदम्भक्षणमात्रं कुर्वन्तीत्यवसेयम् ॥ १०५ ॥

अतिथिसत्कार उक्तः । कः पुनरतिथित्वेऽविक्रियत इत्यत आह—

**अतिथित्वेऽपि वर्णेभ्यो देयं शक्त्यानुपूर्वशः ।**
**अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥ १०६ ॥**

---

१ 'अनग्नमेव तदनग्नममृतं कुर्वे' इति पाठः

---

* 'एतमेव' इति मुद्रितबृहदारण्यकोपनिषत्पाठः

आतिथ्यनिमित्ते यद् दानं, तद् वर्णेभ्य एव नापशदेभ्य इत्यर्थः । तत्रापि वर्णतो गुणतश्चानुपूर्व्येणेति व्याख्येयम् । प्रसङ्गात्तु सायंकालीनोपदेशः ॥ १०६ ॥

हन्तकारदानानन्तरमेव च—

**सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च ।**
**भोजयेच्चागतान् काले सखिसम्बन्धिबान्धवान् ॥१०७॥**

भिक्षुशब्दोऽयं भिक्षुकाश्रमिवचनः सुव्रतशब्दस्तु निश्चितव्रतत्वात् परमहंसाभिप्रायः । तस्य चैकभैक्षत्वाद् भेदेनोपन्यासः । चशब्दश्चादरातिशयद्योतनार्थः, अन्यभिक्षुकग्रहणार्थो वा स्यात् । आनृशंस्यार्थं सख्यादींश्च स्वभोजनकालागतान् भोजयेत्, सत्कृत्यैव । चशब्दादकालेऽपि तदर्थः पाकारम्भः । समानग्रामे च कालागतानामेवेति व्यवस्था ॥ १०७ ॥

एवं सख्यादिभ्यो नित्यमेव सत्कारवद् भोजनं देयम् । श्रोत्रियागमने पुनः—

**महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।**
**सत्क्रिया सेवनं स्वादु भोजनं सूनृतं वचः ॥ १०८ ॥**

कार्यमिति शेषः । उपकल्पनवचनात् तदनुज्ञापेक्षो महोक्षादिवधः । सत्क्रियामतिथिसपर्याम् । सेवनमुपासनम् । तच्च कुर्यात् । स्वादु च मृष्टं भोजनं दद्यात् । सूनृतं च प्रियं ब्रूयाद्, इति । एतच्चातिथिविशेषापेक्षया व्यस्तसमस्तत्वेन योज्यम् ॥ १०८ ॥

असम्बन्धिश्रोत्रियागमन उक्तम् । सम्बन्धे तु—

**प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः ।**
**प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥१०९॥**

स्नातकाचार्यशब्दौ सम्बन्धिवचनौ, अन्यथातिप्रसङ्गात् । यो हि यस्योपनेता स तस्याचार्यः । यश्च यत समावृत्तः स तस्य स्नातकः ।

१. 'स्मृ मुनि' इ पाठ २. 'भिक्षवता' ग इ. पाठ ३, ४. 'द्वे' इ. पाठः

पार्थिवोऽपि स्वदेशभोक्तेति न क्षत्रियः । प्रतिशब्दो वीप्सार्थः । तुशब्दोऽवधारणार्थः । अर्घ्या एव मधुपर्कादिभिः । प्रियो विवाह्यश्च । तथा तत्तुल्यगुण इत्यर्थः । ऋत्विजस्तु यज्ञमेव प्रत्यर्घ्याः प्रागपि च संवत्सरात् । तथाच गौतमः — "यज्ञविवाहयोरर्वागि"ति । यज्ञशब्दश्च सोमयागे । "यद्यसकृत् सवत्सरस्य सोमेन यजेते"ति वचनात् ॥ १०९ ॥

अतिथिश्रोत्रिययो सत्कार उक्त । अधुना तल्लक्षणमाह —

**अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।**
**मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ ११० ॥**

वर्णानुपूर्व्येणातिथित्व गुणानुसाराद्रुक्तम् । तत्रैवायं विशेषोऽध्वनीन इति । तथाच निगमः —

"अनित्यं हि स्थितो यस्मात् तस्मादतिथिरुच्यते ।"

इति । श्रोत्रियोपन्यासः सार्थत्वार्थः । ऋज्वन्यत् ॥ ११० ॥

एवच सत्यतिथित्वेन मृष्टान्नास्वादनलम्भोऽध्वनीन एव नित्य मा भूदिति विवक्षन्नाह —

**परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते[1] ।**
**वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ॥ १११ ॥**

अनिन्द्यैरामन्त्र्यमाणोऽपि चातिभोजनं वर्जयेत् । एकान्ततस्तदनुरोधादप्रहृष्यन् गच्छेदित्यर्थः । अतश्चाध्वन्यपि स्वपाकाशक्तावेवातिथित्वेनोपतिष्ठेत् । नैकग्रामे त्वापद्यप्येव स्यादिति ॥ १११ ॥

य. पुन स्वविध्यनुरोधेनातिथित्व प्रतिपन्न, तथाविधम् —

**अतिथिं श्रोत्रियं तृप्तमासीमान्तादनुव्रजेत् ।**
**अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः ॥ ११२ ॥**

सहेति शेषः । अतिथिं श्रोत्रियमिति सामानाधिकरण्यम् । न चशब्दकल्पना । अन्यस्याप्यतिथेर्यथार्हं पूजा कल्पनीया । तथाच पार-

---

1. 'ते । किञ्च, वा' घ पाठः

स्करः— "यथार्हं भिक्षुकानतिथींश्च संभजेरन्नि"ति । समासीतेति वचनादाग्न्युद्धरणकालादासनम् ॥ ११२ ॥

उद्धृतामिस्तु—

**उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च ।**
**भृत्यैः परिवृतो भुक्त्वा नातितृप्त्याथ संविशेत् ॥ ११३ ॥**

द्वितीयभोजनकालार्थः श्लोकः । पूर्वभोजनविधिकात्स्न्र्ये प्राप्ते भृत्यैः सहैवाश्नीयाद्, न पौर्वापर्येणेत्यर्थः । अतश्च नान्तरा भोजनम् । तथाचाम्नायः "तस्मादाहुः सायंप्रातराश्यैव स्याद्" इत्यन्तरानिषेधायैवाह ॥ ११३ ॥

नन्वेवमन्यपरत्वाद् वाक्यस्यातितृप्त्या भोजने न दोष स्यात् । सत्यमेवम् । किन्तु—

**धर्ममर्थं च कामं च यथाशक्ति न हापयेत् ।**
**ब्राह्मे मुहूर्त उत्थाय चिन्तयेदात्मनो हितम् ॥ ११४ ॥**

सत्यम् । शास्त्रतो नैष निषेधः । किन्तु अर्थकामावप्यहापनीयावि, न चेद् धर्मविरोधिनौ । तदतिक्रमेऽपि शास्त्रबाध एव । धर्मोऽप्येकाततस्तद्विरुद्धो न धर्मतामुपेयात् । तथाच मनुः— "परित्यजेदर्थकाावि"ति । यद्वा प्रकरणात् संवेशनाङ्गकामानुज्ञापनार्थमेवैतत् । किञ्च । ाह्मे मुहूर्ते पश्चिमे याम उत्थायात्मनो हितं परमात्मानं चिन्तयेत्, स्यैव परमार्थतो हितत्वात्, कालान्तरानुपदेशाच्च, अस्य च कालस्य ेयत्वात् । उत्थानवचनं चैार्थव्यापारनिवृत्त्या मनःसमाधानार्थम् । अत व च तत्समाख्यया मुहूर्तोपदेशः । मनुवचनात्त्वविरोधेनार्थादिचिन्तापि— धर्मार्थावनुचिन्तयेदि"ति । कस्मात् पुनः प्राधान्येन परमात्मचिन्ता न र्मार्थयोः । ननुच तावेव चिन्त्यौ प्राधान्येन, अपवर्गस्यापि कारणतत्वात् । मैवम् । उक्त हि परमार्थतो हितत्वात् समाख्यानोपदेशाति ॥ ११४ ॥

---

१. 'स्या वा भो' प. पाठ. २. शास्त्र', ३. 'त्व' रा. पाठ.

एतैः प्रभूतैरधिकतरं मान्यत्वमिति योज्यम् । किञ्च, शूद्रोऽपि वार्धक्ये मानमर्हतीत्येषा दिक् ॥ ११५॥

**वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ।**
**पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः॥११६॥**

वृद्धादिसमवायेऽल्पे च पथ्यनेवंलक्षणमार्गादपसर्तव्यम् । तेषां त्वन्योन्यं स्मृत्यन्तरात् क्रमावगतिः । यथाह वसिष्ठः—"स्थविरबालातुरभारिकस्त्रीचक्रीवतां समागमे परस्मै परस्मै पन्था देय" इति । नृपस्तेषां मान्य इति कर्तरि षष्ठी । तैस्तु वृद्धादिभिः सर्वैरेव राजा मान्यः । नृपेणापि स्नातको ब्राह्मणः । तथाच गौतमः—"राज्ञा तु श्रोत्रियाये"ति । "सर्वैश्च वध्वा उह्यमानाया" इति वसिष्ठवचनाद् वरस्ततोऽपि मान्यतरः । स्त्रियं तु गर्भिणीमेवेच्छन्ति । अनुग्राह्यगौतमवचनाद् , अत्र च रोगिसन्निधानात् तत्पुनर्विचारणीयम् । चक्रि चक्रवद् यानम् । ऋज्वन्यत् । यत्र तु श्रोत्रियोऽपि सर्वैर्मान्यः, तत्र किमिव ब्रह्मविदो वक्तव्यम् इति प्रकृतयोजना । प्रकरणप्रयोजनं चैतत् । श्लोकस्त्ववगतविषय एव, अन्यत्राप्येवमेव द्रष्टव्यम् ॥ ११६ ॥

कस्मात् पुनर्ब्राह्मण एव स्नातकः परिगृह्यते । क्षत्रियवैश्ययोर्योगादयोऽपि सन्त्येव । सत्यम्—

**इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।**
**प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा॥ ११७ ॥**

वृत्त्यर्थान्यप्येतानि मानकारणं भवन्त्येव । यद्वा, उक्तं शक्तितो धर्मायहापनम् । तत्रेज्यादयः सर्वेषां धर्मसाधनम् । प्रतिग्रहादयश्च यथाधिकारमर्थसाधनम् । कामस्य तूक्तमेवेत्येव योजना ॥ ११७ ॥

**प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ।**
**कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम्॥ ११८॥**

१. 'रक्षी' ग. घ. पाठ. २. 'च' ड. पाठ.

किंच —

**विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ।**
**एतैः प्रभूतैः शूद्रोऽपि वार्धक्ये मानमर्हति ॥ ११५ ॥**

विद्येति ब्रह्मविद्यैनोच्यते । अन्यथा हि तद्रहितस्य कर्मानधिकारात् कर्मणोऽधिकत्व निर्युक्तिकमिव स्यात् । तथाच गौतमो विद्यां च वयसो निकृष्टांमभिधाय "श्रुत तु सर्वेभ्यो गरीयस्तन्मूलत्वाद्धर्मस्ये"ति भेदमेवाह । कथ तर्हि वयसोऽधिकत्वम् । चतुर्थाश्रमवचनः स वयःशब्दः, न वार्धक्यवचनः । तथाहि — दशमीस्थस्य पयो दानेन मान्यत्वमुक्त्वा स्नातकमेव सर्वेभ्यो मान्यत्वेनाह । अत्र तु वयःशब्दो वार्धक्य एव । तस्यापि मान्यत्वं "यो वा शत वर्षाणि जीवति स इहैवामृतत्व प्राप्नोती"त्याम्नायात् । यत्पुनर्वसिष्ठेन "विद्यावित्तवय.सम्बन्धाः कर्म च मान्यं पूर्व पूर्वं बलीय" इति वयसोऽपि वित्त मान्यमुक्तम् । तद् ब्राह्मणश्रुतलक्षण-वित्ताभिप्रायं,

"पृथिवीमपि चैवेमा कृत्स्नामेकोऽपि सोऽर्हति"

इति वाद्यवित्तकारणत्वात्, "श्रुतं तु सर्वेभ्यो गरीय" इति गौतमानुसाराच्च । तदपि ननु कर्मणो नातिरिक्तम् । अतिरिक्त हि, ब्राह्मणगतस्यैव श्रुतस्य तद्धेतुत्वात्, "ब्रह्मवादितरेभ्यश्चे"ति च सर्वोपकारकत्वात् । कर्म त्वब्राह्मणाश्रितमेव, आम्नायानुसारात् "तस्माद् ब्राह्मण. क्षत्रियमधस्तादुपास्ते राजसूय" इति । सबन्धोऽपि च ब्राह्म एव वसिष्ठोक्तो न यौनः, स्वामित्वसबन्धस्यर्त्विजां क्षत्रियादेरपि मान्यत्वात् । आचार्याभिप्रायस्तु लौकिकमेव वित्त द्विविधोऽपि च बन्धुरिति । एवं मनु. — "वित्त बन्धुरि"त्यादि । किमेतानि ब्राह्मणस्यान्येव मानकारणानि । नेत्युच्यते—एतैः प्रभूतैः शूद्रोऽपि वार्धक्ये मानमर्हतीति, यदि भवन्ति । यत्र दैवान्न भवन्ति, तत्र किं कुर्मः । क्षत्रियवैश्ययोस्त्वव्याहतं मान्यत्वमित्यभिप्रायः । तथाच मनुः— "पञ्चाना त्रिपु वर्णेष्वि"ति । यद्वा

१. 'दा हि ब्र' ख ङ पाठ. २ 'टामनिकृष्टाम' ख घ. पाट ३ 'दमाह', ४. 'मि' ख पाठ.. ५. 'द्। त' घ. ङ. पाठ.

चतुर्णामपि वर्णानामित्यर्थः । तथाचोक्तम्—"अहिंसा सत्यमस्तेयमि"ति । यद्वा प्रतिलोमार्थः सर्वशब्दः । पूर्वेषां तु दण्डापूपिकयैव स्यात् । एवञ्च सति दानवचनमप्यपुनरुक्तं स्यात् । शूद्रमात्रपरत्वे तु सर्वशब्दानुपपत्तिः । उभयार्थत्वेऽविरोधः ॥ १२१ ॥

इदं चान्यद् यथायोगं सर्वसाधारणमुत्तरार्धगतार्थमाह —

**वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् ।**
**आचरेत् सदृशीं वृत्तिमजिह्मामशठां तथा ॥ १२२ ॥**

अजिह्मामकुटिलाम् । अशठां परानुपद्रवकारिणीम् ॥ १२२ ॥

तदेवाधुना सादृश्यं प्रपञ्चयितुमाह —

**त्रैवार्षिकाधिकान्नो यः स सोमं हि पिबेद् द्विजः ।**
**प्राक्सौमिकाः क्रियाः कुर्याद् यस्यान्नं वार्षिकं भवेत् ॥**

काम्यकर्मार्थः श्लोकः, अन्यत्र श्रुतिविरोधात् ॥ १२३ ॥

अकाम्यविषये पुन —

**प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ।**
**कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥ १२४ ॥**

काम्यनित्यविवेकार्थः श्लोकः । चादयो निपाताः श्रौतविधानद्योतनार्थाः । तथाशब्दोऽपि श्रुत्युक्तपरामर्शार्थः । नित्यत्वाच्चैषां यथासंभवं क्रिया ॥ १२४ ॥

यस्य त्वात्यन्तिक्येवाशक्तिः, तदा—

**एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः ।**
**हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् ॥ १२५ ॥**

काम्यं कर्म हीनोपकरणं न कुर्यात्, यस्मात् सत्येव द्रव्ये तत् फलप्रदं, सर्वाङ्गोपसंहारनियमात् । सोमाद्यभावे चेष्टिवचनं नियोगतः कर्तव्यताख्यापनार्थम् ॥ १२५ ॥

पूर्वत्र तथाशब्दस्यार्थान्तरापेक्षत्वात् क्षत्रियकर्मणि च प्राधान्यवचनात् कुसीदकृषिवाणिज्यमिति च समासकरणात् पाशुपाल्यं विशः स्मृतमिति च स्मृत्यन्तरार्थोपक्षेपात् कुसीदादीनामनुकल्पतया साधारणत्वम् । वैश्यस्य तु स्वयंकर्तृकाण्यप्येतानि स्वकल्प एव, स्मृत्यन्तरात् ॥ ११८ ॥

एव तावद् द्विजातीनामुक्तम् । एकजातेः पुनः—

**शूद्रस्य द्विजशुश्रूषा तयाजीवन् वणिग् भवेत् ।**
**शिल्पैर्वा विविधैर्जीवेद् द्विजातिहितमाचरन् ॥ ११९ ॥**

शूद्रस्य द्विजशुश्रूषैव धर्मसाधनं, न यागादयः, अध्ययनविध्यभावात् । अर्थसाधनमपि सैव । किन्तु तया यदा न जीवेत्, तदा वाणिज्यं क्रीतविक्रीतं[1] कुर्यात् । नानाप्रकारैर्वा शिल्पैर्जीवेत् । सर्वथा तु द्विजातिहितमाचरेत् । तदेव हि तस्य धर्मसाधनं यतः ॥ ११९ ॥

अथ चान्य शूद्रस्यैव धर्म —

**भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः ।**
**नमस्कारेण मन्त्रेण पञ्च यज्ञान् न हापयेत् ॥ १२० ॥**

पारदार्यप्रसक्तेः स्वदार एव यथाकामी स्यात् । शुचिः स्नानाद्यनुष्ठाता । भृत्यमात्रभर्ता । श्राद्धकर्म चामन्त्रकं यथाकालं कुर्याद्, अन्वहं पञ्च महायज्ञान् । इयांस्तु विशेषः—नमस्कारमात्रमेव प्रयुञ्जीत, न देवताभिधानानि । मन्त्रतया च प्रतिषेधाद्[2] देवतोद्देशेन त्यागः कर्तव्य एव । *श्राद्धे तु देवतापदान्यपि मन्त्रत्वाभावान्निषेधात् प्रवर्तन्ते ॥ १२० ॥*

एवं तावद् द्विजातीना शूद्रस्य च धर्मसाधनमुक्तम् । इदं[3] पुनः—

**अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयमः ।**
**दमः क्षमार्जवं दानं सर्वेषां धर्मसाधनम् ॥ १२१ ॥**

---

१ 'तं विक्रीत वा कु' द पाठ २. 'तया प्रतिषे' घ ङ. पाठः. ३. 'द तु पु' घ. पाठ.

तथाच शङ्खः "अत ऊर्ध्वं पुत्रानुत्पाद्ये"त्युपक्रम्य "ऋतुप्रस्थानलिङ्गो वृत्तिविशेषानुक्रमः श्रेयान् यायावराणां वार्तामुपास्य वनमाश्रयेदि"त्याह। अतोऽप्यविरोधः॥ १२७॥

इति गृहस्थधर्मप्रकरणम्।

---

अथ स्नातकधर्मप्रकरणम्।

एवं तावदुत्तरोत्तरज्यायस्त्वेन वृत्तिसंयमोऽभिहितो ज्ञानातिशयेनोच्छिन्नरागाणाम्। ये तु रागिणो बहुतरद्रव्यकामाः पूर्वोक्तप्रतिग्रहादिभिरनियतं द्रव्यमार्जयितुं प्रवृत्ताः, तान् प्रत्याह—

**न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः।**
**न विरुद्धप्रसङ्गेन सन्तोषी च भवेत् सदा॥ १२८॥**

नार्थकृतं स्वाध्यायमुत्सृज्यार्थार्थमीश्वरमुपेयात्। न च यतस्ततः शूद्रादप्रशस्ताद्वार्थमीहेत। न च धर्मार्थयोर्युगपत्प्रसङ्गे धर्मविरोधिनमर्थं परिगृह्णीयात्। तथाचापस्तम्बेन ब्रह्महत्याप्रायश्चित्तं विरुद्धप्रसङ्गेऽभ्यधायि—"धर्मार्थसन्निपातेऽर्थग्राहिण एतदेवे"ति। सर्वथा सन्तोष्येव सदा भवेद्, न लुब्धः स्यादित्युपसंहारः कामात्मतानिषेधार्थः॥ १२८॥

निसर्गजननानुसारिणी याजनाया सिलोञ्छान्ता प्रथमे कल्पे लिखिते। नैतेऽनुकल्पाः। अयं तु सर्वेषामापत्कल्पः—

**राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा।**

सीदन्निति वचनादापत्कल्पत्वम्। राजा क्षत्रियः, शास्त्रवर्ती च राज्यकर्ता। अन्तेवासी शिष्यः। ऋज्वन्यत्॥

किञ्च—

**डम्भिहैतुकपाषण्डिबकवृत्तींश्च नार्चयेत्॥ १२९॥**

चशब्दो विकर्मस्थाद्यर्थः। यथाह मनुः—"पाषण्डिनो विकर्मस्थानि"ति। एतांश्च सर्वथा नार्चयेत्। तथाच मनुः—"वाङ्मात्रेणापि

---

१ धर्मार्थयोर्युगपत्प्रसक्ति' ग. पाठः. २. 'च', ३. 'म्भ' इ. पाठः.

एवञ्च सति नैयमिकत्वात् कुतश्चिद् द्रव्याहरणप्रसक्तावाह —

**चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षिता ।**
**यज्ञार्थं लब्धमददद्भासः काकोऽपि जायते ॥ १२६॥**

ननु च पुरुषार्थं द्रव्यं, न क्रत्वर्थम् । सत्यम् । पुरुष एव यत् क्रतुनिमित्तमार्जयति, तत् क्रत्वर्थमित्यदोषः । वननीयवननार्थो वायमुपदेशः । पुरुषार्थत्वेऽपि शूद्रभिक्षणनिन्दा । शूद्रभिक्षुकस्य क्रतवोऽपि प्रत्यवायाय, किमुतान्यत् । तादर्थ्यवचनमुक्तविषयमेवेत्यदोषः । पर्यवसितेऽपि क्रतौ सद्भ्य एव दद्याद्, न स्वयमुपयुञ्जीतेत्यर्थः ॥ १२६ ॥

इदानीमधिकृतानामेव स्वार्थवृत्तिनियमायाह —

**कुसूलकुम्भीधान्यो वा *त्रैहिकोऽश्वस्तनोऽपि वा ।**
**जीवेद्वापि सिलोञ्छेन श्रेयानेषां परः परः ॥ १२७ ॥**

आद्योऽपिशब्दोऽयाचितार्थः । द्वितीयस्तु सिलोञ्छयोर्भेदकथनार्थः । कुसूलं कोष्ठको विंशतिद्रोणमानम् । तदर्धं कुम्भी,

"दश द्रोणाः स्मृता कुम्भी कुसूलो द्विगुणस्ततः"

इत्यभियुक्तोपदेशात् । त्रैहिको दिनत्रयोपयोगिधान्यः । अश्वस्तनः सद्यःप्रक्षालकः । सिलः सशूकोच्चयनम् । कणोच्चयनमुञ्छः । ननु च सोमाद्यनुष्ठानविरोधाच्छ्रुतिविरुद्धेयं स्मृतिः । न च वृत्त्यपेक्षोऽधिकारः । अद्रव्यत्वस्याधिकाराप्रतिबन्धकत्वात् । उच्यते । जीवेदिति वचनाज्जीवनार्थो वृत्तिसंकोचः । क्रत्वर्थं प्रतिग्रहादिभिरप्यनिषिद्धमेवार्जनमित्यविरोधः । यद्वा एतन्नैष्ठिकादिवदेव द्रष्टव्यम् । न हि रागितयैव प्रवृत्तद्रव्यार्जनानुरुत्स्य वृत्तिसंकोचस्मृतिबाधेनाग्निहोत्रादिविधयः प्रवर्तन्ते । यतः प्रवृत्तौ वा क्रत्वर्थतैव द्रव्यार्जनस्य स्यात् । तथाच सर्वतन्त्रपरिलोपः । तस्मात् प्रतिग्रहादिवृत्तिविषया एवाग्निहोत्रादिविधय इत्यविरोधः । निपुणतस्त्वेतद् वनस्थाश्रमनिरूपणे वक्ष्यामः । प्रवृत्ताश्रमान्तरस्य चैता वृत्तयः ।

१. 'नु पु', २ 'रनि' घ पाठ

* त्र्यहिक इति प्राप्तम् । त्र्याहिक इति तु मिताक्षरायाम् ।

"वैणवीं धारयेद् यष्टिं सोदकं च कमण्डलुम् ।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥"

इति । धारयेदिति च प्रयोजकत्वेनाप्युपपत्तेरन्यधारणेऽपि कमण्डलोरविरोधः । देवादीनां प्रदक्षिणं कुर्यात् । देवशब्दश्चार्चनाश्रितायां तत्प्रतिकृतौ द्रष्टव्यः । मृदादीनां चाभिमुखागमने प्रदक्षिणं गच्छेत् । वनस्पतिशब्दश्च प्रज्ञातयज्ञियाश्वत्थादिवनस्पत्यर्थः ॥ १३२ ॥

किञ्च—

**न मेहेत नदीच्छायावर्त्मगोष्ठाम्बुभस्मसु ।**
**न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनः ॥१३३॥**

अम्बूपादानेनैव सिद्धत्वान्नदीवचनं तच्छब्दवाच्यक्षेत्राद्यर्थम् । छाया चोपजीव्यच्छाया । "नोपजीव्यच्छायासि"ति वसिष्ठवचनात् । तथाच मनुः—

"छायायामन्धकारे वा रात्रावहनि वा सदा ।
यथासुखमुखः कुर्यात् प्राणाबाधभयेषु च ॥"

इति छायामात्रस्यानिषेधं दर्शयति । सन्ध्याशब्दश्चोदयास्तमयान्वितदिक्प्रतिषेधार्थः, काले हि मेहनानुज्ञानात् । मेहनशब्दश्चोभयत्रापि मूत्रपुरीषोत्सर्गे द्रष्टव्यः । ब्रह्मचारिप्रकरणे च प्रसक्तस्याप्यनभिधानं सर्वाश्रमविहितमविरुद्ध सर्वाश्रमेषु प्रवर्तत इति ज्ञापनार्थम् । तथाच गौतमः—"उत्तरेषां चैतदविरोधी"ति । चशब्दादाश्रमान्तरोक्तं च ब्रह्मचारिणि इत्येतदेवाह । नन्वेवं कस्मान्न भवति—ब्रह्मचारिप्रकरणोक्तमन्यस्य मा भूदिति तत्रानारम्भः । तथाच ब्रह्मचारिणो दिङ्नियम उक्ते स्नातकस्यार्काद्यभिमुखप्रतिषेधोपपत्तिः । अन्यथा नूदङ्मुखस्य कथमादित्याभिमुख्यं, येन प्रतिषिध्येत । सत्यम् । उक्तं तु स्मृत्यन्तरैकवाक्यत्वादिति । तथाच मनुना स्नातकस्यैव दिङ्नियम उक्तः । कथं तर्हि प्रत्यर्कप्रतिषेधः । दिङ्मोहादिविषयमेतद् द्रष्टव्यम् । दिगपरिज्ञानेऽप्यनियम एव सामर्थ्यात् प्रसक्तः । तत्रेदमुच्यते — न प्रत्यग्न्यर्केति ॥ १३३ ॥

१ 'स्वादेरं' ख ङ पाठः २ 'गाढम' घ पाठः ३ 'पुंय', ४ 'कम', ङ. पाठः ५ 'र्थप्रसक्ते । तं' घ ध पाठः

नार्चयेदि"ति । डम्भी धर्मव्याजजीवी । हैतुकाः कुतार्किकाः । पाषण्डिनः क्षपणकादयः । बकवृत्तिरतिसन्धायकः, स्वार्थनिष्ठश्च । यथाह मनुः— "अधोदृष्टिर्नैकृतिक" इत्यादि ॥ १२९ ॥

अधुनान्यानप्यर्थस्यैव विस्तरेण यमनियमानाह—

**शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ।**
**न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ १३० ॥**

यत्तु "अनियतकेशवेषा" इति, तदाश्रितशूद्रविषयं द्रष्टव्यम् । न च भार्यादर्शनेऽश्नीयात्, तथाच कुर्याद्, यथा भार्यास्य दर्शने न भुञ्जीत । यथाह मनुः—"नाश्नीयाद् भार्यया सार्धं नैनामीक्षेत चाश्नतीमि"ति । आम्नायेऽप्येवमेव—"तस्मादिमा मनुष्याः स्त्रियस्तिर इव पुंसो जिघत्सन्ती"ति । यत्तु तत्रैव "तस्माज्जायाया अन्ते नाश्नीयादि"ति । अभिगमनातिरेकेणैकशय्याशयनप्रतिषेधार्थं तत्, प्रक्रमानुसारात् । तथाच समाचारः । स्पष्टमन्यत् ॥ १३० ॥

**न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।**
**नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषी ॥ १३१ ॥**

स्तेनपुनर्वचनं नाकस्मादित्यनेन संबन्धार्थम् । यद्वा वर्जनार्थमिदम् । पूर्वत्र धर्मसाधनमिति ॥ १३१ ॥

**दाक्षायणी ब्रह्मसूत्री यष्टिमान् सकमण्डलुः ।**
**कुर्यात् प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३२ ॥**

दाक्षायणं हिरण्यं तद्वान् स्यात् । तथाच मन्त्रवर्णः—"न तद्रक्षांसि न पिशाचास्तरन्ति । देवानामोजः प्रथमजं ह्येतद्, यो बिभर्ति दाक्षायणं हिरण्यमि"ति । ब्रह्मसूत्रपुनःश्रुतिर्मेखलादिनिवृत्त्यर्था । यष्टिस्तु दण्डकार्ये । ततश्च तत्प्रमाणैव स्यात् । सकमण्डलुरिति सहत्वमात्रवचनान्न नियोगतः स्वयमेव धार्यः । मत्वर्थीययोगात्तु स्वयमेव यष्ट्यादयो धार्याः । न गृहस्थितयान्यगृहीतया वा यष्ट्या यष्टिमानित्युच्यते, सहयोगस्त्वन्यसंस्थेऽपि दृष्टः । सोदकं चैतद्, दृष्टार्थत्वात् । तथाच मनुः—

१. 'स्नाधि' ख. पाठ. २ 'र्यास्य द' घ. ङ. पाठ. ३. 'यो' ख. पाठ.

"वैणवीं धारयेद् यष्टिं सोदकं च कमण्डलुम् ।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥"

इति । धारयेदिति च प्रयोजकत्वेनाप्युपपत्तेरन्यधारणेऽपि कमण्डलोरविरोधः । देवादीनां प्रदक्षिणं कुर्यात् । देवशब्दश्चार्चनाश्रितायां तत्प्रतिकृतौ द्रष्टव्यः । मृदादीनां चाभिमुखागमने प्रदक्षिणं गच्छेत् । वनस्पतिशब्दश्च अज्ञातयज्ञियाश्वत्थादिवनस्पत्यर्थः ॥ १३२ ॥

किञ्च—

**न मेहेत नदीच्छायावर्त्मगोष्ठाम्बुभस्मसु ।**
**न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनः ॥१३३॥**

अम्बूपादानेनैव सिद्धत्वान्नदीवचनं तच्छब्दवाच्यक्षेत्राद्यर्थम् । छाया चोपजीव्यच्छाया । "नोपजीव्यच्छायासु" इति वसिष्ठवचनात् । तथाच मनुः—

"छायायामन्धकारे वा रात्रावहनि वा सदा ।
यथासुखमुखः कुर्यात् प्राणाबाधभयेषु च ॥"

इति छायामात्रस्यानिषेधं दर्शयति । सन्ध्याशब्दश्चोदयास्तमयान्वितदिक्प्रतिषेधार्थः, काले हि मेहनानुज्ञानात् । मेहनशब्दश्चोभयत्रापि मूत्रपुरीषोत्सर्गे द्रष्टव्यः । ब्रह्मचारिप्रकरणे च प्रसक्तस्याप्यनभिधानं सर्वाश्रमहितमविरुद्धं सर्वाश्रमेषु प्रवर्तत इति ज्ञापनार्थम् । तथाच गौतमः—"उत्तरेषां चैतदविरोधी"ति । चशब्दादाश्रमान्तरोक्तं च ब्रह्मचारिण इत्येतदेवाह । नन्वेवं कस्मान्न भवति—ब्रह्मचारिप्रकरणोक्तमन्यस्य मा भूदिति तत्रानारम्भः । तथाच ब्रह्मचारिणो दिङ्नियम उक्तः स्नातकस्यार्काद्यभिमुखप्रतिषेधोपपत्तिः । अन्यथा तूदङ्मुखस्य कथमादित्याभिमुख्यं, येन प्रतिषिध्येत । सत्यम् । उक्तं तु स्मृत्यन्तरैकवाक्यत्वादिति । तथाच मनुना स्नातकस्यैव दिङ्नियम उक्तः । कथं तर्हि प्रत्यर्कप्रतिषेधः । दिङ्मोहादिविषयमेतद् द्रष्टव्यम् । दिगपरिज्ञानेऽप्यनियम एव सामर्थ्यात् प्रसक्तः । तत्रेदमुच्यते—न प्रत्यग्न्यर्केति ॥ १३३ ॥

१ त्वादर ख ड पाठ २ गोष्ठम घ पाठ ३ पुंव, ४ च ब', ङ पाठ. ५ भ्यंप्रसक्तं । ख ग घ पाठ

इद चान्यत् —

**नेक्षेतार्क न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ।**
**न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ १३४ ॥**

नित्यमेवाकस्मादर्कदर्शनप्रतिषेधः । न च संसृष्टमैथुनामिति । चशब्दोऽवस्थान्तरार्थः । यथा "क्षुवन्तीं जृम्भमाणां वे"त्यादि । सामर्थ्याच्चाय परकीयाया निषेधः । न नग्नामिति तु स्वकीयाया अपि । अन्यत्राविरुद्धः । अस्मादेव च स्त्रीणां नग्नोद्वर्तनाद्यभ्यनुज्ञातम् । अशुचेश्च राहुनक्षत्रदर्शननिषेधान्नान्यदा दोषः । राहुवचनं चोपसृष्टसोमाद्यर्थम् ॥१३४॥

**अयं मे वज्र इत्येनं सर्वं मन्त्रमुदीरयेत् ।**
**वर्षत्यप्रावृतो गच्छेत् स्वपेत् प्रत्यक्छिरा न च ॥ १३५ ॥**

तथाचाम्नायः—"तस्माद् वर्षत्यप्रावृतो न व्रजेत्" । "अय मे वज्रः पाप्मानमहतादि"त्यतदेव मन्त्रस्य कार्त्स्न्यम् । यदा वर्षति गच्छेत्, तदैवमिति व्याख्येयम् ॥ १३५ ॥

इद चान्यत्—

**ष्ठीवनासृक्शकृन्मूत्रविषाण्यप्सु न संक्षिपेत् ।**
**पादौ प्रतापयेन्नाग्नौ न चैनमतिलङ्घयेत् ॥ १३६ ॥**

प्रशब्दोऽभिप्रायेण नैतत् कुर्यादित्येवमर्थः । चशब्दोऽग्नावपि ष्ठीवनाद्यसक्षेपार्थ, स्मृत्यन्तरोक्तान्यचोदनार्थश्च । असृग् लोहितम् । शकृत् पुरीषम् । स्पष्टमन्यत् ॥ १३६ ॥

किञ्च

**जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत् ।**
**नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संवसेत् ॥१३७॥**

---

१ मार्थ' घ. पाठ  २ गच्छेत्', ३ भि' घ पाठ

जलग्रहणात् क्षीराद्यप्रतिषेध । उपलक्षणार्थं जलग्रहणमित्यन्ये । शयानं चाभिघ्नन् कामकारेण वा न बोधयेत् । तथाचाम्नायः—"तस्माद्दुह स्वपन्त धूरिव नं बोधयेदि"ति । धूर्हिंसा, तया न बोधयेत् । अभिघ्नन्नित्यर्थः । सर्वत्र चास्मिन् यमप्रकरणे पूर्वोक्त नाकस्मात् कुर्यादिति योजनीयम् । तथाचाम्नायः कारणान्तरात् कर्तव्यतामपि दर्शयति—"तमेतैर्नामभिरामन्त्रयांचकारे"त्युपक्रम्य "स नोत्तस्थावि"त्युक्त्वोत्थापनेविधिमाह—"त पाणिना पेष प्रबोधयांचकारे"ति ॥ १३७ ॥

इद चान्यत्—

**विरुद्धं वर्जयेत् कर्म प्रेतधूमं नदीतरम् ।**
**केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ १३८ ॥**

विरुद्ध कर्माभिचारादिक वर्जयेत् । विधानाशङ्का मा भूदिति प्रतिषेधः । नदीतरण बाहुभ्यां, "न बाहुभ्यां नदीं तरेदि"ति मनुवचनात् । नदीग्रहण चोपलक्षणार्थम् । भस्माङ्गारयोर्गोमयकाष्ठजन्यत्वाद् भेदेनोपन्यासोऽन्यत्रापि भेदावबोधनार्थः । ऋज्वन्यत् ॥ १३८ ॥

किंच—

**नाचक्षीत धयन्तीं गां नाद्वारेणाविशेत् क्वचित् ।**
**न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥ १३९ ॥**

गा परकीयां नाचक्षीत । "गा धयन्तीं परस्मै नाचक्षीते"ति स्मृत्यन्तरात् । गोश्च कर्तृत्वात् तद्दनिच्छया स्तनेषु दुह्यमानेष्वाचक्षीतैव । 'ईहेत न यतस्तत' इति पूर्वनिषिद्धस्यापि राज्ञः पुनरुपन्यासस्तत्प्रपञ्चार्थः, अतिशयनिन्दाप्रदर्शनोपोद्धातार्थश्च ॥ १३९ ॥

इदानीं तमेव निन्दातिशयमाह

**प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।**
**दुष्टा दशगुणं पूर्वात् पूर्वादेते यथोत्तरम् ॥ १४० ॥**

१ धं च ज ङ. पाठ २ न प्रबा ग पाठ ३ न प्र' प. ङ पाठ. ४ 'नना' घ. पाठ ५. त च घ. पाठ

सूना प्राणिवधार्थं काष्ठं, तद्वान् सूनी । चक्रं वागुरा । ध्वजः शौण्डिकचिह्नं,

"ध्वजं च कुर्याच्चिह्नार्थं समया ग्रामं च संवसेत् ।
न चैवान्तावसायिभ्यः सुरां दद्यादनापदि ॥"

इति स्मृत्यन्तरात् । वेशो रूपं मैथुनं वा, तेन जीवन्ती वेश्या । तथाच मनु—"वेशेनैव च जीवता"मि"ति । तात्पर्यं तूक्तमेव ॥ १४० ॥

एव तावदर्थप्रवृत्त्याश्रितान्[2] यमनियमानभिधायाधुनाध्ययनाश्रितान् विवक्षुस्तदुपोद्घातार्थमाह—

**अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु ।**
**हस्ते वौषधिभावे वा पञ्चम्यां श्रावणस्य वा ॥ १४१ ॥**

एव छन्दांस्युपाकृत्यार्धपञ्चमान्मासानर्धषष्ठान् वाधीत्य ततः—

**पौषमासस्य रोहिण्यामष्टकायामथापि वा ।**
**जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद् द्विजः ॥ १४२ ॥**

अष्टका चात्र माघस्य गृह्यते । तथाच पारस्करः—"पौषमासस्य रोहिण्यां मध्यमायां वाष्टकायामध्यायानुत्सृजेरन्नि"ति । एते चोपाकर्मोत्सर्गकर्मणी आचार्यस्यैव, "यावन्तं शिष्यगणमिच्छेदि"त्युपाकर्मणि पारस्कराभिधानात् । द्विजग्रहणं तु शिष्याभिप्रायेणानुवादः । गृह्यशास्त्रापेक्ष एव चायमुपदेशः, विधिवदिति वचनात् । विधिवच्चोपाकृत्योत्सृज्य चाधीयानस्याभ्यासार्थं वा वेदाख्यं ब्रह्मार्थतो ग्रन्थतो वा द्विजातिमात्रस्यै ॥ १४२ ॥

**त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।**
**उपाकर्मणि चोत्सर्गे स्वशाखे श्रोत्रिये तथा ॥ १४३ ॥**

गुरुरत्रोपाध्यायो नाचार्यः । यथाह पारस्करः—"गुरौ प्रेतेऽपोऽभ्यवेयात् । दशरात्रं चोपरमेत् । सतानूनप्तृणि(?) सब्रह्मचारिणि त्रिरात्रम् । एकरात्रमसब्रह्मचारिणी"ति । एतदपितर्याचार्ये द्रष्टव्यम् । अनयैव दिशान्यत्रापि विषयकल्पना, न तु यदृच्छातः । ऋत्विक्समये तु सतानू-

१. 'न्तीति वे' ङ. पाठ. २. 'श्रयान्' घ पाठ. ३ 'स्त्राविशेषापेक्षया चा' ख पाठः. ४. 'स्यैव ॥', ५. 'दप्यपि' घ. पाठ. ६. 'वेकक' ख. पाठः

नप्तृवचनाद् यजमानवदृत्विगन्तराणामपि स्यात् । अत एव चासोमर्त्विज्येकरात्रमेव । सब्रह्मचारी चैकाचार्योपनीतः । स्वशाखे श्रोत्रिये तथेति । श्रोत्रियो मन्त्रब्राह्मणाध्यायी । यद्वा स्वशाखाध्यायिनि श्रोत्रिये चेति भेदः । श्रोत्रियशब्दश्च वेदपारगार्थः । अन्यत्र तु एकरात्रमेव । तथाशब्दश्च स्मृत्यन्तरोक्तानध्यायप्रकारसंग्रहार्थः । यथाह गौतमः—"अन्तरा गमने श्वादीनां त्र्यहमुपवासो विप्रवासश्च" इत्यादि । स्पष्टमन्यत् ॥ १४३ ॥

तथा—

**सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।**
**समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ १४४ ॥**

द्युनिशमहोरात्रम् । तच्च व्यवस्थया । सायं सन्ध्यागर्जिते निशायामेव,

"प्रातर्दिवैव वर्षासु अन्यदा तु समुच्चयः ।
सन्ध्यागर्जिते चापर्तावहोरात्रम्"

इति स्मृत्यन्तरात् । अत्र चोपरिष्टाद् द्युनिशमिति प्रकृतेऽप्यहोरात्रमिति वचनात् ॥ १४४ ॥

तथाच—

**पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।**
**ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य वा ॥ १४५ ॥**

द्युनिशमिति वर्तते । पञ्चदशी च पक्षापेक्षयामावास्यापि गृह्यते । तथाच "वातेऽमावास्यायां सर्वानध्यायः" इति पारस्करः । श्राद्धार्थमामन्त्रण श्राद्धिकं, तदालभ्याप्यनध्यायः । आमश्राद्धार्थो वायमारम्भः, "पाण्यास्यो हि द्विजः स्मृत" इति वचनात् । तथाच वाशब्दश्चशब्दार्थे, भुक्त्वाभुक्त्वा चेति । यत्तु राहुसूतके त्रिरात्रं, तद् ग्रहणार्थेऽध्ययने न धारणार्थे । अन्येऽपि चात्र गुरवः कल्पेस्वपरशाखाग्रन्थार्थभेदेन ग्रहणार्थतयैव कल्प्याः । तथाच धारणाभिप्रायेणैवाह मनुः—

१. 'स्त्र स्मृ'ङ पाठ २ 'यत्नलप्रसक्तार्थ' ग. पाठः. ३. 'नृ ॥ स' घ. ङ पाठ. ४ 'था—प' ख ङ पाठ ५ 'त्वनुव' ख. पाठ. ६. 'चानु व' ङ पाठ. ७ 'नामा घ. पाठ ८. 'अ' ङ. पाठः. ९ 'त्याः स्व', १० 'धा धा' घ ङ पाठ.

"द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥"

इति । आम्नायश्च "तस्मादेव विद्वान् विद्योतमाने स्तनयत्यवस्फूर्जत्यधीयीतैवे"ति धारणार्थ एव, ब्रह्मयज्ञेऽनध्यायासभवात् ॥ १४५ ॥

**पशुमण्डूकनकुलश्वाहिमार्जारसूकरैः ।**
**कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ १४६ ॥**

तुशब्दोऽवधारणार्थः । अहोरात्रमेव, न पूर्ववद् व्यवस्था । पशुः छागः । "मेषकस्ते पशुरि"ति मन्त्रवर्णात्, स्मृत्यन्तरे च मेषकोपदेशात् । स्पष्टमन्यत् । अन्य. पाठ.—महोत्सव इति । एवञ्च महानवम्यादावहोरात्रम् । यत्तूक्त—"भोजनादूर्ध्वमुत्सव" इति । उत्सवमात्रविषय तत् । शक्रोच्छ्रये तु स्मृत्यन्तरात् ॥ १४६ ॥

**श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिःस्वने ।**
**अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ १४७ ॥**

क्रोष्टा सृगाल. । बाणो वीणा । अन्त्योऽपशदः । शूद्रवचनादेव दण्डापूपवदन्त्यप्राप्तौ तद्वचनमाश्रितशूद्रनिवृत्त्यर्थम् । मेध्यदेशस्थस्याप्यमेध्यसमीपे श्मशानसमीपे वानध्यायः । अमेध्यवचनात् सिद्धे श्मशानवचन दूरतरवर्जनार्थम् । तथाचापस्तम्ब —"श्मशाने सर्वतः शम्याप्रासान्नाधीयीत" इति ॥ १४७ ॥

तथा—

**देशे शुचावात्मनि च विद्युत्स्तनितसंप्लवे ।**
**भुक्त्वार्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ॥ १४८ ॥**

**पांसुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु ।**
**धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ १४९ ॥**

नीहारो धूमिका ॥ १४८, १४९ ॥

**खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे।**
**सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः॥१५०॥**

सन्ध्यावचन विद्युत्सप्लवे स्तनितसप्लवे भुक्त्वैवार्द्रपाणिः खरारोहणे उष्ट्रारोहणे यानारोहणे नावारोहण इत्येवमादिविवेकार्थम्। श्वनादादारभ्य इरिणरोहणान्तास्तात्कालिका., यावदारूढस्तावदेव भवतीति। इरिणमूषरम्। एतान् विदुरिति परमतोपन्यासार्थम्। ततश्च स्मृत्यन्तरोक्तानप्यनध्यायानन्विष्य विधिवत् कुर्यादित्यभिप्रायः॥ १५०॥

शिष्टागमनेऽनध्याय उक्त। तत्र शूद्रादिमध्यपाठादन्य कश्चिच्छिष्टोऽप्यलौकिको॰ऽभ्यन्य इत्याशङ्कानिवृत्त्यर्थमाह—

**देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्य च।**
**नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि च॥ १५१॥**

छायाशब्दो हि ख्यातिवचन। यथा—महती छाया देवदत्तस्येति। अतो देवादीनां छायां नाक्रामेत्। तत्र यथैवर्त्विगाद्यागमने स्नेहान्मधुपर्काद्याकुलत्वान्नानध्यायः, एव परास्मन्नपि, प्रकृष्टगुणेऽनध्याय इत्यर्थः। तथाचाम्नाय.—"य उ हैवविर्त् स्वेषु प्रतिबुभूषति, स हैवालभार्येभ्यो भवती"त्यादि। "य उ हैवविदा स्पर्धते, सोऽनुशुष्यहैवान्ततो म्रियत" इति। देववचनमतिस्तुत्यर्थम्। रक्तादीनां त्वभिभवाभावादधिष्ठानप्रतिषेधः। रक्तं रुधिरम्। विद् पुरीषम्। स्पष्टमन्यत्। अनध्यायसन्निधेश्चैतद्व्यतिरेकेणैव देशस्यामेध्यत्व पदोपघातादिना। ततश्चोपलिप्तादावध्ययनसिद्धिः। अन्ये तु देवादीनामपि शरीरच्छायानधिष्ठानमेवेच्छन्ति। तत्पुनर्विचार्यम्॥ १५१॥

नन्वेव सत्यप्रकृष्टेऽप्यागतेऽनध्याय पूर्ना वा प्रसज्यत। "सर्वस्याभ्यागतो गुरुरि"ति[11] वचनात्। नैव—

---

१ 'थ' ख पाठ २ श्राह—म घ पाठ ३ 'ड' घ. ङ पाठ. ४ 'द' ख पाठ ५ 'इ घ ङ पाठ ६ थ ख पाठ ७ -तरासभवाद' ङ पाठ ८ 'नमान्प्र ङ पाठ ९. धी चेत', १० वनध्य' घ पाठ ११. 'प्रसिद्ध। नै घ ङ पाठ

**विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन।**
**आ मृत्योः श्रियमाकाङ्क्षेन्न कश्चिन्मर्मणि स्पृशेत्॥**

विप्रक्षत्रियशब्दौ पूर्वश्लोकानुवादाच्छिष्टपार्थिववचनौ । अहिशब्दो दृष्टान्तार्थः । यथैवाहिर्नावज्ञेय उत्कृष्टब्राह्मणराजानौ च, तथैवात्मापि । अतो न यकश्चिदपेक्ष्यात्माभ्युत्थानानध्यायादिना न्यक्कर्तव्य । श्रोत्रियस्यैव तत् कर्तव्यमित्यर्थ । तथाचाह मनु.—

"विद्वद्भोज्यान्यविद्वासो येषु राष्ट्रेषु भुञ्जते ।
तान्यनावृष्टिमिच्छन्ति महद् वा जायते भयम् ॥"

इति । आत्मलाघवाकरण एव हेतुमाह—आ मृत्यो. श्रियमाकाङ्क्षेदिति । इद त्वविशेषेणैव कुर्याद्— न कश्चिन्मर्मणि स्पृशेदिति। अन्या व्याख्या— विप्रादिमात्रस्यैवावज्ञा न कार्येति । तथाच भगवान् वासुदेव —

"विद्वानविद्वानशुचिं शुचिं वा यो ब्राह्मण न प्रणमेद्यथार्हम् ।
स पापकृद् ब्रह्मदवाग्निदग्धो दण्ड्यश्च वध्यश्च न चास्मदीय. ॥"

इति । तत् पुनर्वक्ष्यमाणत्वादकिञ्चित् ॥ १५२ ॥

इदानीं मानप्रसङ्गाद् गृहदेवतानां मानार्थमाह—

**दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।**

गृहदेवताना मानार्थम् । गृहादिति शेष ॥

**श्रुतिस्मृत्युदितं सम्यङ्नित्यमाचारमाचरेत्॥१५३॥**

प्रदर्शनार्थमिद मयोक्तम्, अन्यदपि श्रुतिस्मृत्यन्तरेभ्यश्चान्वेष्यमित्यभिप्राय ॥ १५३ ॥

---

१ 'मविच्छन घ पाठ २ वचनौ पू' ट पाठ ३, 'नाद' ख घ पाठ
४ 'व क घ ' पाठ

इद चान्यन्मानप्रसङ्गादेव —

**गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशत् ।**

अनलोऽग्निः । अन्नं भुज्यमानं पक्वमामं वा ॥

किञ्च—

**न निन्दाताडने कुर्यात्**

प्रकृतेभ्यो गवादिभ्यः ॥

अस्यापवादः —

**सुतं शिष्यं च ताडयेत् ॥ १५४ ॥**

चशब्दान्निन्देच्च । पल्याद्यर्थो वा चशब्दः । सन्निधानान्निन्द्यत्वावगतेः ॥ १५४ ॥

अयं त्वत्रोपदेशसङ्क्षेपः —

**कर्मणा मनसा वाचा यत्नाद् धर्मं समाचरेत् ।**

नार्थकामाविति शेषः ॥

अस्यापवादः —

**अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ॥ १५५ ॥**

अनेकार्थत्वाद् धातूनामदेर्गत्यर्थत्वम् । अस्वत्तम् असुगतम् । असुपरिनिश्चितमित्यर्थः । अन्यः पाठः— अस्वन्तमिति । तस्याप्ययमेवार्थः । अस्वन्तम् अशोभनान्तम् । अन्ते न शोभनम्, अनिश्चितत्वादिति । तस्यैव निगमन — लोकविद्विष्टमित्यादि । तुशब्दोऽवधारणार्थः । अन्ये त्वस्वन्तं रूढ्यैव धर्मान्तरविरोधिनमाचक्षते । यथा स्वाध्यायातिशय इति । तत्त्वन्वेष्यम् । लोकविद्विष्टं सर्वजनानभ्युपगत गोवधादीति केचित् । तत्त्वयुक्तं, विधानानर्थक्यात् । अतो लोकं कर्मसाध्यं ये जानन्ति, ते लोकविदो मन्वादयः, तैर्द्विष्ट नाचरेत् । उ(त्वीप्प)न्नेऽप्ययं धर्म इति स्वयमभिमानेन मन्वादिभिर्निन्दिते न प्रवर्ततेत्यर्थः । अद्विष्टे त्वविरुद्धा प्रवृत्तिः ॥ १५५ ॥

मान्यप्रसङ्गादन्यदप्याह —

**मातृपित्रतिथिभ्रातृजामिसंबन्धिमातुलैः ।**
**वृद्धबालातुराचार्यवैद्यसंश्रितबान्धवैः ॥ १५६ ॥**
**ऋत्विक्पुरोहितामात्यभार्यादाससनाभिभिः ।**
**विवादं वर्जयित्वा तु सर्वाँल्लोकाञ्जयेद् गृही ॥ १५७ ॥**

तस्मादेतैर्विवादं न कुर्यादिति शेषः । एषां च प्रत्येक विवादकरणनिमित्तभेदाद् दण्डापूपवद् गतार्थत्वप्रसङ्गपरिहारः ॥ १५६, १५७ ॥

इद चान्यत् परिभवाकरणप्रसङ्गादुच्यते —

**पञ्च पिण्डाननुद्धृत्य न स्नायात् परवारिषु ।**
**स्नायान्नदीदेवखातह्रदेषु च सरस्सु च ॥ १५८ ॥**

यदि परखातेष्वनुद्धृत्यैव कर्दमं स्नायात्, ततस्तत्कर्ता परिभूतः स्यात् । अतस्तदनुरोधादपि तावत् कर्दमोद्धरण युक्तमित्यभिप्रायः । अय च नद्याद्यभावे स्नानकल्पः । चशब्दः प्रस्रवणाद्यर्थः ॥ १५८ ॥

मान्यप्रसङ्गादन्यदप्याह —

**परशय्यासनोद्यानगृहयानानि वर्जयेत् ।**
**अदत्तानि**

अदत्तानीति च्छेदः* । परशब्दः प्रकृष्टार्थः । तदीयान्यसाधारणानि शय्यासनक्रीडोद्यानवासगृहादीनि नाधितिष्ठेत् । अदत्तानीति वचनादनुज्ञातोऽधितिष्ठेदिति गम्यते ॥

किञ्च—

**अग्निहीनस्य न चाश्नीयादनापदि ॥ १५९ ॥**

प्रकृष्टस्याप्यनौपासनस्य चान्न न चाश्नीयात् । चशब्दाद् वक्ष्यमाणदोषयुक्तस्य च । अन्ये त्वन्यमात्रवचन परशब्द वर्णयन्ति, अदत्तानि न चाश्नीयादित्यनेन च योजयन्ति । तत् पुनर्विचार्यम् ॥ १५९ ॥

---

१ 'नाश्नी' घ [illegible] पाठ.

* छेद उपमान्तस्य व वचस्य समाप्तार्थं ।

इदानीमन्यानपि प्रसङ्गादभोज्यान्नानाह—

**कदर्यबद्धचोराणां क्लीबरङ्गावतारिणाम्।**
**वेनाभिशस्तवार्धुषिगणिकागणदीक्षिणाम्॥ १६०॥**

एषामन्नं नाश्नीयादिति शेषः। कदर्यस्तृष्णालुः। बद्धो निगलादियन्त्रितः। चोरः प्रसिद्धः। रङ्गावतारी मल्लः। वेनो नटः। अभिशस्तो महापातकादिव्याजदूषितः। वार्धुषी समर्घधनमादाय महार्घधनविक्रेता। गणिका दासी। गणः परिषत्। दीक्षितः प्रागग्नीषोमीयात्। द्विजातयोऽप्येवमादिकर्मदूषिता न भोज्यान्नाः॥ १६०॥

तथा—

**चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम्।**
**क्रूरोग्रपतितव्रात्यडाम्भिकोच्छिष्टभोजिनाम्॥ १६१॥**

चिकित्सको वैद्यः। आतुरोऽसमाधेयरोगी। क्रुद्धो नित्यक्रोधनः। पुंश्चली प्रजननेन्द्रियप्रधाना। मत्तो धनमदाद्यभिभूतः। विद्विट् शत्रुः। क्रूरोऽन्तराशयकठिनः। उग्रः प्रसह्यकारी। पतितो महापातकी, अभिशस्तवचनात् सिद्धस्याप्यभिधानं प्रायश्चित्तगौरवार्थम्। अन्यत्राप्येवं द्रष्टव्यम्। व्रात्यः पतितसावित्रीकः। डाम्भिक उक्तः। उच्छिष्टभोजी शूद्रः॥ १६१॥

**अवीरस्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम्।**
**शस्त्रविक्रयिकर्मारतुन्नवायश्ववृत्तिनाम्॥ १६२॥**

अपुत्रपतिकावीरस्त्री। स्वर्णकारस्त्रीजितौ प्रसिद्धौ। ग्रामयाजको वैश्वदेविक इति मालवानां प्रसिद्धः। कर्मारो भस्त्रेरिमकः (?)। तुन्नवायः सीवनवृत्तिः। श्ववृत्तिः पादप्रक्षालनादिहीन(कया? क्रिया)सेवकः श्वकण्टको वा॥ १६२॥

**नृशंसराजरजककृतघ्नवधजीविनाम्।**
**चेलधावसुधाजीवसहोपपतिवेश्मनाम्॥ १६३॥**

१ 'विनाना' ख पाठः.

नृशंसोऽनुदारपाठकः(?) राजविशेषणं वा। राजा पार्थिवः। रजकश्चिम्पकः। कृतघ्नः प्रसिद्धः। वधजीवी मारकश्चाटः। चेलधावो वस्त्रनिर्णेजकः। सुधा देवकुलादीनां संस्कारद्रव्यं, तया जीवति यः स सुधाजीवः। सह उपपतिना वेश्म यस्य स सहोपपतिवेश्मा। उपपतिर्भार्याजारः। वेश्मसंबन्धितया स्नुषाजारोऽपि गृह्यते॥ १६३॥

य एत उक्ताः कदर्यादयः—

**एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा।**
**पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम्॥ १६४॥**

एषां कदर्यादीनाम्। न केवलं गृहे नाश्नीयात्, तदीयमन्नमप्याहृतं न भुञ्जीत, न च प्रतिगृह्णीयादिति, आरम्भसामर्थ्यात्। एषामिति वचनादनग्निकस्यान्नं गृहानीतं प्रोक्षणादिभिः संस्कृत्य भोक्तव्यम्। यथा च कदर्यादीनां, सोमविक्रय्यादीनामपि तथा। सोमविक्रयी लतासोमस्य विक्रेता यज्ञफलविक्रेता वा। सोमशब्दश्च कर्ममात्रोपलक्षणार्थः। पिशुनः खलो मर्मसूचकः। अनृती परोपद्रवप्रसङ्गेऽनृतवक्ता। चाक्रिकः पाटहिकः। वन्दी नग्नाचार्यः। तथाशब्दः स्मृत्यन्तरोक्ताभोज्यान्नपरिग्रहार्थः। यद्वा, एषामन्नं न भोक्तव्यं, न त्वप्रतिग्राह्या अप्येत इति मन्तव्यम्। अन्नप्रतिषेधात् फलमूलादेराहृतस्याभ्यनुज्ञा। यथाह वसिष्ठः—"एधोदकयवसमूलफलमध्वभयाभ्युद्यतयानावसथशफरीप्रियङ्गुस्रग्गन्धमांसान्येषामपि प्रतिगृह्णीयादि"ति। निन्दार्थो वायमारम्भः। नैषामन्नं न भोक्तव्यमेव। किं तर्हि भुक्तमपि भोक्तारमेव भक्षयतीत्यर्थः। सर्वव्याख्याविकल्पाश्चान्यत्रापि शास्त्रान्तरापेक्षया विविच्य व्यस्तसमस्तत्वेनालोच्योपादेया हातव्या वा इति। एवं चशब्दादयोऽपि क्रमभेदानर्थकत्व(त्वादि)शब्दान्तरार्थत्वपादपूरणार्थत्वेन वा यथास्थानं योजनीयाः॥ १६४॥

इति स्नातकधर्मप्रकरणम्।

---

१. 'पादिजा', २. 'हेऽर्था', ३. 'ति च व' ङ. पाठ. ४. 'म्। अथवा अ' प. पाठः. ५. 'रं भ' ङ. पाठः.

अथ भक्ष्याभक्ष्यप्रकरणम् ।

एवं तावदनौपासनाद्यप्रयतोऽनस्याभोज्यत्वमभिधायाधुना भोज्यपरिगृहीतस्यापि निमित्तान्तरादभोज्यत्वमाह —

**अनर्चितं वृथामांसं केशकीटसमन्वितम् ।**
**शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ॥ १६५ ॥**

वृथामांस पक्वमनग्निकगृहागतम् । केशकीटसमन्वित तद्बहुलम् । सशब्दादल्पास्तूद्धृत्य संस्कृत्य च भक्षणमेव । शुक्तमवस्विन्न तदहरपि । स्पष्टमन्यत् ॥ १६५ ॥

**उदक्यास्पृष्टसंघुष्टं पर्याचान्तं च वर्जयेत् ।**
**गोघ्रातं शकुनोच्छिष्टं पादस्पृष्टं च कामतः ॥ १६६ ॥**

तुशब्दार्थश्चशब्द. । पूर्वोक्तेषु प्रतीकारोऽपि क्वचिदस्ति, एतानि तु वर्जयेदेवेत्यभिप्राय । उदक्या रजस्वला । संघुष्ट, यथाह वसिष्ठ.— "को भोक्ष्यत इति चाभिक्रुष्टमि"ति । उदक्यास्पृष्टमित्येव वा संघुष्टम् । पर्याचान्तम् एकपङ्क्त्यामभितस्त्वाचान्तम्, आचान्तस्य वा स्वमुच्छिष्टम् । स्पष्टमन्यत् । कामत इति वचनादकामाद् ब्राह्मणपादस्पृष्ट भोज्यमेव ॥ १६६ ॥

किंचान्यत् —

**शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ।**
**भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥१६७॥**

भोज्या इति वक्तव्ये भोज्यान्ना इति वचनात् प्रकरणाच्चान्नमेवैषां भोज्यम् । शूद्रान्तराणां तु तत्प्रतिषेधोऽपि । दासादयश्च स्वकीया एव, *अन्यथातिप्रसङ्गात्* ॥ १६७ ॥

**अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।**
**अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥ १६८ ॥**

१ उपघुष्ट घ ङ पाठ २ ख भ' ङ पाठ

अन्नवचनं मांसादिव्यावृत्त्यर्थम् । मांसं हि पर्युषितमभोज्यमेव । अन्नं तु शुक्तमेव पर्युषितमभोज्यम् । अन्यत् तु द्वित्रिरात्रादिपर्युषितम् । चिरसंस्थितं, तदपि स्नेहाक्तं भोज्यमेव, न चेद् रसादिविकृतम् । पूर्वत्रापि पर्युषितमेतदपेक्ष्यैव व्याख्येयम् । परिशब्दाच्चाहोरात्रोषितं गृह्यते । ततश्चापररात्रे सिद्धं भोज्यमेव । स्पष्टमन्यत् ॥ १६८ ॥

एवं तावन्निमित्तत्वेन दोषमुक्त्वाधुना स्वभावतो वक्तुमाह—

**सन्धिन्यनिर्दशावत्सगोपयः परिवर्जयेत् ।**
**औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥ १६९ ॥**

सन्धिनी परवत्ससंयुक्ता, गर्भसहिता वा । एककालिकेत्यन्ये । अनिर्दशा प्रसवादारभ्यो दशरात्रात् । अन्ये तु "गव्यं पीयूषमि"ति प्रतिषेधात् तत्कालादूर्ध्वं दशरात्रमित्याहुः । तदसद्, विशेषाभावात् । अनिर्दशेति चोपाध्यपेक्षणात्, क्षीरस्यैवोपाधिर्यतः । तथाच गौतमः "गोश्च क्षीरमनिर्दशायाः सूतक" इति प्रसवमेवावधित्वेनाह । पीयूषनिषेधस्तु प्रायश्चित्तातिरेकार्थः । तथाचाह— "प्रयत्नेन विवर्जयेदि" ति । अवत्सा मृतवत्सा प्रनष्टवत्सा वा । वत्सशब्दो हि बालगोवचनः । ततश्च सिद्धे गोवचन पयोमात्रप्रतिषेधार्थम् । अतो दध्यादेरदोषः । परिशब्दात्त्वौष्ट्रादीनां सविकाराणां प्रतिषेधः । यदि त्वनिर्दशाया विकारप्रतिषेधोऽपि क्वचिदस्ति, ततो वर्जनेऽभ्युदयः । अन्यत्राप्येवमेवैतद् द्रष्टव्यम् । स्पष्टमन्यत् ॥ १६९ ॥

किञ्च—

**देवतार्थं हविः शिग्रुं लोहितान्व्रश्चनानि च ।**
**अनुपाकृतमांसानि विड्जानि कवकानि च ॥ १७० ॥**

देवतार्थं हविः पुरोडाशादि । बलिरित्यन्ये । शिग्रुः सौभाञ्जनकः । लोहिताः लोहितवर्णा वृक्षनिर्यासाः । आव्रश्चनं स्थाणुः । स चादनीयो यदि स्यात् ततो वर्ज्यः । चशब्दात् तत्प्ररोहैश्च । तथाच मनुः —

१. 'सव्या' घ पाठ   २ 'भ्य' ट पाठ.   ३ 'चावध्म' स. ष पाठ.
४. 'द्धेऽपि पुनर्गोव',   ५ 'दोश्च' ह पाठः.

"लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा।"

इति। अनुपाकृतम् अपशुबन्धप्रभवम्। विड्जानि माषादीनि। कवका-न्यविकसितसर्पच्छत्राणि। चशब्दादितराणि स्मृत्यन्तरोक्ताभक्ष्याणि च। देवतार्थहविर्वचनं च स्वभावदुष्टप्रकरणोपलक्षणादहविषोऽपि प्रसिद्धदेवतार्थस्वभावस्य प्रतिषेधार्थम्। अनुपाकृतमांसवचनमपि मांसस्य स्वभावदौष्ट्यज्ञापनार्थम् ॥ १७० ॥

एवं सति मांसस्य स्वभावादभक्ष्यत्वे प्राप्ते विशेषोपसंहारार्थमाह—

**क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान्।**
**सारसैकशफान् हंसान् सर्वांश्च ग्रामवासिनः॥ १७१॥**

क्रव्यादा मांसादाः पक्षिणो गृध्रादयः। पक्षिशब्दोऽन्यत्राप्यमेध्यपक्षिप्रसङ्ग एषामेव प्रतिपत्त्यर्थः, एकशफोपादानवद्वा केवलपक्ष्यर्थः। दात्यूहः संपातकः। प्रतुद्य भक्षकाः प्रतुदाः सूचीमुखादयः। एकशफा एकखुरा अश्वादयः। पक्षिमध्य एषामभिधानं पशवोऽपि ग्रामवासिनः श्वादयो यथा स्युरिति। स्पष्टमन्यत् ॥ १७१ ॥

**कोयष्टिप्लवचक्राह्वबलाकबकविष्किरान्।**
**वृथाकृसरसंयावपायसापूपशष्कुलीः ॥ १७२ ॥**

कोयष्टिको मेद्रकः। प्लवः शकटिबलः[2]। चक्रवाकादयः प्रसिद्धाः। विष्किराः पादेन विकीर्य भक्षकाः कुक्कुटादयः। ग्रामवासिवचनाद् ग्रामकुक्कुटप्रतिषेधे सिद्ध आरण्यार्थोऽयमारम्भः। तत्रापि "कुक्कुटा नखविष्किराणाम्" इत्यापस्तम्बवचनात्सर्वैकाद्यप्रतिषेधः। कृसरादयः प्रसिद्धाः। अत्राभिधानं मांसवत् प्रायश्चित्तज्ञापनार्थम्। स्वभावदुष्टत्वं च। तत्रैश्चानग्नेरप्यात्मार्थत्वे दोषः। तथाच शङ्खः—"वृथाकृसरसंयावपायसापूपमांसाशनमाहिताग्निः कृत्वा प्राजापत्यं चरेत्। त्रिरात्रमितरेषामि"ति ॥ १७२ ॥

१ 'मपि प्र' ड पाठ. २ 'टबिल' घ. ङ पाठः. ३ 'रि' क. ख. पाठ.. ४ 'चु' ख पाठ ५. दौष्टय च' ख ङ पाठः ६ 'न चान' घ. पाठः. ७. 'ति ॥ क' ङ पाठ

तथा—

**कलविङ्कं सकाकोलं कुररं रज्जुदालकम् ।**
**जालपादान् खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥१७३॥**

कलविङ्को ग्रामचटकः । तस्य वर्षास्वरण्यवासाशङ्कया पुनर्वचनमिति केचित् । तत्पुनर्ग्रामचटकव्यपदेशादेवायुक्तम् , अतः स्वभावदोष्यातिरेकार्थम् । ततश्च स्त्रीशूद्रयोरप्यभक्ष्यत्वसिद्धिः । ग्रामवासिमात्रोपलक्षणं चैतत् । तथाच समाचारः । अस्मिन् प्रकरणेऽन्यान्यपि पुनर्वचनान्येवमेव व्याख्येयानि । काकोलः श्येनः । कुररः शब्दानुकारी करक्षेकः । रज्जुदालोऽरण्यकपोतः । खञ्जरीटाख्यो दीर्घपुच्छः पूर्वदेशप्रसिद्धः । श्लेष्मातक इत्यन्ये । मांसतुल्यदोषार्थं चैतद्वचनम् । जालपादा हंसादयः । पुनर्वचनं तूक्तार्थम् । नन्वेवं चक्रवाकादिवचनमयुक्तम् । सर्वजालोपलक्षणत्वं कलविङ्कवन्मा भूदित्येवमर्थम् । अत एव चाट्या(?)दयः स्त्रीशूद्रयोरप्रतिषिद्धाः । खञ्जरीटानिति बहुवचनं स्त्रीशूद्रयोरप्यभक्ष्यत्वार्थम् । हंसानिति तु सिद्धेऽपि दौष्टयेऽन्यत्रापि बहुवचनस्यायमेवार्थो यथा स्यादित्युक्तम् । अज्ञातवचनं दृष्टान्तार्थम् । यथैव मांसाशनाभियुक्तैर्भक्ष्यत्वेनाज्ञाताः पशवः पक्षिणश्च मरणादिभयान्न भक्ष्यन्ते, तथा शास्त्रोक्तस्वभावदुष्टा अपीत्यभिप्रायः ॥ १७३ ॥

तथा—

**चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।**
**मत्स्यांश्चाकामतो जग्ध्वा सोपवासस्त्र्यहं भवेत् ॥**

बहुवचन तूक्तार्थम् । सौनं सूनारूढदुष्टम् । वल्लूरं प्रसिद्धं, शुक्तमांसमिति केचित् । एतान् मत्स्यांश्च वक्ष्यमाणातिरेकेणाकामतो भक्षयित्वा सहोपवासेन त्र्यहं स्यात् । चतुरहमेवेत्यर्थः । सह वा तेन त्रिरात्रम् ॥ १७४ ॥

---

१. 'ञ । र' ख ङ पाठ. २ 'ल्कोऽर' ङ. पाठ. ३. 'नच्छक. पू ख. पाठ.. ४. 'त्यार्थं' घ. पाठ.. ५. 'रर' ग. ङ पाठ.

तथा कामत एव—

## पलण्डुं विड्वराहं तु छत्राकं ग्रामकुक्कुटम् ।
## लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ॥१७५॥

गृञ्जनं पलण्डुसदृशमुदीच्यदेशप्रसिद्धम् । लशुनगृञ्जनपलण्डूनां प्रायश्चित्तविधानात् प्रतिषेधकल्पना । विड्वराहादीनां तु प्रायश्चित्तार्थं वचनम्* । विड्वराहो ग्रामसूकरः । छत्राकं सर्पच्छत्रकम् । चशब्दो विड्वराहतुल्यग्रामवासिपशुप्रतिषेधार्थः । तथाचाम्नायः — "त्रयो हता पशवोऽमेध्या विड्वराह एलकश्वे"ति । पाठसिद्धे त्रय इत्यमेध्यत्वप्रकारार्थम्— एवञ्जातीयका एवामेध्या न त्वजादय इति । तुशब्दः सर्वथा सर्ववर्णानां चेति द्योतनार्थः । अप्रकरणे प्रायश्चित्ताभिधानं सर्वत्रानन्तरानुष्ठानार्थम् । यतिचान्द्रायणं चैतत् ।

"अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् ।
यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥"

इति । अत्र त्वत्र संप्रदायः—अनग्निकायाश्रयदुष्टभोजने त्रिरात्रमकामात्, कामतस्तु प्राजापत्यम् । यथाह मनुः—

"भुक्त्वातोऽन्यतमस्यान्नममत्या (तु) त्र्यहं क्षपेत् ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च ॥"

इति । नैमित्तिकाभोज्येऽप्येतदेव, प्रकरणाभेदात् । स्वभावदुष्टे त्वमत्येहोक्तं चतूरात्रम् । मत्या कृच्छ्र एव जपाद्युपबृंहितः । पलण्ड्वादीनां चामत्या यतिचान्द्रायणम् । मत्या तु पतितवचनाद् भक्षणसामान्याच्च सुरापानप्रायश्चित्तम् । तत्र "सुरायाश्चाज्ञान" इत्येतद् वसिष्ठोक्तं कृच्छ्रातिकृच्छ्रं पुनः संस्कारश्चेति, न तु कामकृतसुरापानप्रायश्चित्त, पतितत्वोपचारात् । एवमाहिताग्नेर्द्विजन्मनः । इतरस्य तु शेषेषूपवसेदहरित्यकामादुप-

१ 'त्र्यह' इ पाठ

* प्रतिषधस्तु 'सर्वांश्च ग्रामवासिन' इति वचनात् पूर्वस्मात्प्रत्यात्सिद्ध इत्यभिप्रायः.

वासः । कामतस्त्रिरात्रं, "त्रिरात्रमितरेषामि"ति शङ्खवचनात् । पलण्ड्वादावमत्या सान्तपनं, मत्या त्वतिकृच्छ्र एव, "पलण्ड्वादिभोजनेष्वतिकृच्छ्र" इति वसिष्ठवचनात् । यद्यपि काकाद्यवलीढभोजनेऽतिकृच्छ्र उक्तः, तथाप्येवमेव, स्मृत्यन्तरैकवाक्यत्वात् । प्रायश्चित्तप्रकरणे तु विषयकल्पनान्यायं वक्ष्यामः ॥ १७५ ॥

किं सर्वाण्यभक्ष्याण्येव मांसानि । नेत्युच्यते —

**भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्यकाः ।**
**शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥ १७६ ॥**

भक्षणार्हा भक्ष्याः । पञ्चनखाः सेधादयः शशान्ताः । चशब्दः खड्गाद्यर्थः । यत्तु वासिष्ठं—"खड्गे तु विवदन्त्यग्राम्यसूकरे चे"ति, विविधं श्राद्धादौ प्रशंसार्थं वदन्तीत्यस्यार्थः । तथाच "आनन्त्यं खड्गमांसेने"त्यात्रेयः । पञ्चनखग्रहणं हस्त्यादिपरिसङ्ख्यार्थम् । मत्स्येष्वपि सिंहतुण्डादयो भक्ष्याः, न सर्पशीर्षादयः । सिंहो दीर्घमुखो दीर्घः । तुण्डः स्थूलः स्थूलमुखः । रोहितो लोहितवर्णः । हिशब्दो हेत्वर्थः । यस्मान्मत्स्यादिमांसैर्मासवृद्ध्या पितृतृप्तिरभिधास्यते, तस्मान्मत्स्या भक्ष्या इति । हेत्वभिधानप्रयोजनं तु श्राद्ध एव भक्ष्यत्वज्ञापनार्थम् । तथाच मनुः—"पाठीनरोहितावाद्यावि"ति । अपिशब्दस्तु मत्स्यसंबद्ध पञ्चनखेष्वपि प्रायश्चित्तं यथा स्यात्— सोपवासं त्र्यहं भवेदिति, श्राद्धे सेधादिप्राप्त्यर्थं च ॥ १७६ ॥

**तथा पाठीनराजीवौ सशल्काश्च द्विजातिभिः ।**
**अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जने ॥ १७७ ॥**

पाठीनादयः प्रसिद्धाः । तथाशब्दात् पाठीनराजीवावपि श्राद्ध एव । सशल्कास्त्वविशेषेणैव । तुशब्दार्थश्चशब्दः । द्विजातिवचनाच्चोक्तं वक्ष्यमाणं च द्विजात्यर्थमेव — द्विजातिभिरप्येतत् कर्तव्यं किमुतान्यैरिति । यस्माच्च सेधादिमांसं न स्वभावदुष्टं श्राद्धोपयिकं वा, तस्माच्छृ-

१. 'द्धं पञ्चप' घ. पाठ.. २. 'ति । से' ङ. पाठ.

गुध्वं मांसस्य विधिं भक्षणवर्जने । भक्षणे वर्जनं भक्षणवर्जनम् । निर्दोषं भक्षणमित्यर्थः । भक्षणस्य वा ग्रासस्य वर्जनम् । विधिशब्दः प्रकारार्थः । मांसवर्जने संबोधन त्वादरार्थम् ॥ १७७ ॥

कः पुनरसौ विधिरित्यत आह —

**प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।**
**देवान् पितॄंस्तथाभ्यर्च्य खादन्मांसं न दोषभाक् ॥१७८॥**

यस्त्वतोऽन्यथा —

**वसेत् स नरके घोरे दिनानि पशुरोमभिः ।**
**सम्मितानि दुराचारो यो हन्त्यविधिना पशून् ॥१७९॥**

पूर्वश्लोके तथाशब्दद्वयात् प्रकारद्वयम् । प्राणात्यये तथा श्राद्धे प्रोक्षितमित्येकः प्रकारः । द्विजकाम्यया देवान् पितॄंस्तथाभ्यर्च्येत्यपरः । तत्र यथैव प्राणात्यये क्रतौ च मरणप्रत्यवायभीत्या नियोगतो भक्ष्यं, तथा श्राद्धे नियुक्तेनापीत्यर्थः । तथाचाह मनुः — "नियुक्तस्तु यथान्यायमि"ति । यथान्यायवचनात्तु प्रीतिव्यावृत्तिः । प्राणात्ययोपादानं च दृष्टान्तार्थत्वेऽप्यसिद्धस्यादृष्टान्तत्वाच्छास्त्रतश्चासिद्धत्वाद् विधीयत एव । प्रोक्षितमपि व्यामोहापनुत्तये प्राणात्यये चाभक्षयता पशूनात्माविधिनैव हतः स्यात्, प्रोक्षिताभक्षणे क्रतुवैगुण्यात् । तस्मात् प्राणात्ययादेरन्यत्र च लोभादिना यो हन्त्यविधिना पशून्, वसेत् स नरके घोर इति योज्यम् । वधश्चाष्टविधः । यथाह मनुः — "अनुमन्ता विशसिते"त्यादि । नन्वयं प्रोक्षितशब्दः प्रकृष्टसेचनमाह । तत् कुतो विशिष्टार्थावगतिः । सत्यम् । अयमेव त्वसौ प्रकर्षः । यद्विधानलक्षणत्वं क्रतावेव च तत् । द्वयं चान्यत्र कार्यं — प्रोक्षणं च कुर्यात्, प्रोक्षितं च भक्षयेदिति । क्रतौ तु तस्य सिद्धत्वात् परार्थोपादानमविरुद्धम् । तथाचाम्नायः — "जीर्यन्ति ह वै जुह्वतो यजमानस्याग्नय" इत्युपक्रम्य "अथैतेषां नातोऽन्या मांसाशा

---

१ 'द्व', २ 'णेऽपि क' ङ. पाठ. ३. 'भ । ध' घ. ङ. पाठः, ४. 'भ्यु' ङ. पाठ.

विद्यते यस्य चैते भवन्ती"ति क्रतावेव मांसप्राप्तिमन्यत्र चाप्राप्तिं दर्शयन् प्रोक्षितशब्दस्य क्रत्वर्थतामेव द्योतयति । यस्त्वपरः प्रकारो द्विजकाम्यये-त्यादिः, तेनाश्नन्न दोषभाक् ॥ १७९ ॥

यदि तु वर्जयेत् तदा —

**सर्वान् कामानवाप्नोति हयमेधफलं तथा ।**
**गृहेऽपि निवसन् विप्रो मुनिर्मांसस्य वर्जनात् ॥१८०॥**

द्विजैः काम्यमानत्वाद् द्विजकाम्या अतिथिपूजा । तयोपनीतं महो-क्षादि भक्षयतो न दोषः । तथा देवपित्रर्चनं श्राद्धकर्म । तत् कृत्वा शिष्टं मांसमश्नतः । यदि त्वेतदपि वर्जयेत्, ततः सर्वान् कामानवाप्नोति हय-मेधफलं तथा इत्यादि योज्यम् । विचित्रां चैव मांसाशनक्रियामालोच्याह मनुः — "न मांसभक्षणे दोष" इति ॥ १८० ॥

इति भक्ष्याभक्ष्यप्रकरणम् ।

---

## अथ द्रव्यशुद्धिप्रकरणम् ।

नन्वेत्र मांसभक्षणविधानमयुक्तं, निमित्तदौष्ट्यस्यासमाधेयत्वात् । श्वचण्डालादिभिर्हि मांसमुत्पाद्यते यतः । सत्यं श्वचण्डालाद्युत्पाद्यं, तथाप्यदुष्टमेवैतत्[२]प्रतिपिपादयिषुरेव प्रसङ्गाद् द्रव्यान्तराणामपि[३] निमित्तान्तरतोऽमेध्यानां मेध्यत्वविधानायाह । यद्वा सर्वद्रव्याणां शौचमस्ति, न तु स्वभावदुष्टानां विड्वराहादीनामिति द्रव्यशुद्ध्यारम्भः । विड्वराहाद्यशुचिसंपृक्तं वा द्रव्यं कथं शुध्येदित्याकाङ्क्षित आह—

**सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ।**
**शाकरज्जुमूलफलवासोविदलचर्मणाम् ॥ १८१ ॥**
**पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ।**

शुद्धिरिष्यत इत्येतदेवास्मिन् प्रकरणे क्रियापदं यथायथं योज्यम् । सौवर्णानां च निर्लेपानामशुचिस्पर्शनमात्रेऽशुद्धिः । यथाह मनुः —

"निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति ।
अब्जमश्ममयं चैव राजतं चानुपस्कृतम् ॥"

---

१· 'दा', २. 'मिश्य' ख. पाठ., ३. 'त्व' ख घ. पाठ.

इति। राजत रौप्यम्। अब्ज शङ्खशुक्त्यादि। ऊर्ध्वपात्राणि षोडशिपात्रादीनि। ग्रहा ऐन्द्रवायवादिपात्राणि। ग्रहत्वादेवोर्ध्वपात्रे सिद्धे भेदाभिधानं कृत्स्नपात्रार्थम्। ततश्च द्रोणकलशाद्यप्युक्त भवति। अश्म दृषदादि। शाकादीनि स्पष्टानि। विदलो वेण्वादि। सर्वत्र चास्मिन् प्रकरणे प्रकृतिविकृत्योरन्यतरग्रहणेऽप्युभयलाभः। तथाच वसिष्ठो दारवाणां तक्षणमुक्त्वा प्रकृत्यातिदिशति — "दारुवदस्थामि"ति। आचार्योऽपि राजतानामश्मनामिति पात्रविशेषणत्वेनोपदिशन्नेतदेव स्पष्टयति ॥ १८१ ॥

एवमेषा सोमेष्टिलौकिकाना पात्राणां स्वःसम्पाते निर्लेपाना वारिणा शुद्धिरिष्यते। सलेपाना तु —

**चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ॥ १८२ ॥**

पुनर्वारिग्रहणं तस्यैवौष्ण्यगुणेत्वज्ञापनार्थम्। ततश्च यस्य यच्छुद्धिसाधनं, तदेव गुणविकृत दोषविकृतस्येत्येतत् सिद्धम्। तथाच यच्छन्दोगोक्तं— "चैलानामुत्स्वेदन प्रक्षालन तन्मात्रच्छेदो वे"त्येतदपि सिद्ध भवति। पदार्थानिरुक्त च स्पष्टमन्यत् ॥ १८२ ॥

स्पर्शनमात्रोपघाते निर्लेपानामेव —

**स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम्।**
**प्रोक्षणं संहतानां च बहूनां चैव वाससाम् ॥ १८३ ॥**

स्फ्यादीनि यज्ञसाधनानि यथा कर्मणि प्रोक्षणमात्रान्नैमित्तिकमुपघातं निघ्नन्ति, एवम् एवंरूपाणि पुरुषार्थान्यपि संहतानि शय्यादीनि, असंहतानि च पुरुषवाह्यानि वासांसि। चशब्दो धानाद्यर्थः। तथाचाम्नायः— "यद्यदेवैषा मन्त्राशुद्धस्तक्षा वामेध्यः कश्चित् पराहन्ति, तत्तदेवैषामेव तदद्भिर्मेध्य करोती"ति निमित्तान्तरादमेध्यत्वप्रसक्तौ मेध्यता प्रोक्षणेन दर्शयति ॥ १८३ ॥

अल्पोपघात उक्तम्। महति पुन —

**तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसंभुवाम्।**
**मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ॥ १८४ ॥**

१ 'देनानि', २ 'ष्ण्य', ३ 'त्यमिति ह्य', ४ 'पयति। न', ५ 'नि यथा' ख पाठ ६ रूपेषु ग पाठ ७ 'णि ॥ दारवाद' ग पाठ.

चर्मादीनां दारवादीनां चैवं शौचम् । केचिद् दीर्णवृक्षाणां दारुत्वसामान्यात् सर्जरसादीन्यपि दारवाणीच्छन्ति । तत् पुनर्विचार्यम् । सपूर्वाद् भवतेः क्विबन्तात् षष्ठीबहुवचन आम्युवङादेशे च कृते संभुवामिति रूपम् । तानि पुनरलाबुपात्रादीनि । तेषां गोवालैरवघर्षणम् । सलेपानां मार्जनम् । यज्ञपात्राणां कृतशौचानामेव । पाणिना यज्ञकर्मणीत्यन्यार्थमेतद् — उदकवद् ब्राह्मणपाणेरपि शुद्धिकारणत्वं यथा स्यादिति । ततश्च कमण्डल्वादेस्तन्मार्जनाच्छुद्धिः । भोजनकाले च मेध्यानामपि पात्राणां परिमार्जनम् । तथाचाम्नायः— "तस्माद् यदा मनुष्याणां परिवेषणमुपक्लृप्तं भवति । अथ पात्राणि निर्णेनिजती"ति । अथशब्देन शुद्धानामेवेति द्योतयति ॥ १८४ ॥

उपघातातिरेक एवं —

**सोषैरुदकगोमूत्रैः शुध्यत्याविकसौत्रिकम् ।**
**सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥ १८५ ॥**

आविकं सौत्रिकम् ऊर्णामयं, कार्पासं च । सूत्रशब्दस्य साधारण्यात् कौशेयादिसंग्रहः । यत्तु "आदित्येनोर्णमयानामि"ति, तत् प्रायोगिकोपघातविषयम् । यत्तु भारद्वाजे — "न शौचं शयनासनकटप्रस्तरयानप्रस्तरगण्डोपधानकशिपुकम्बलकुशृद्धधान्यमणिफलकशिलासहस्ररोम्णामनिखातानां च काष्ठानां तृणपलालदाम्नां कुमाराणामन्यत्र प्रोक्षणादन्त्यस्पर्शने स्नानं कुमाराणामेके" इति, तत् स्पर्शविषयम्, अन्त्यस्पर्शनवचनात् । मूत्रादिसंसर्गे तु दोषापेक्षया सोषैरुदकगोमूत्रैर्यथार्हं शौचकल्पना । तैरेवोदकगोमूत्रैः सबिल्वकल्कैरंशुपट्टानाम् । अंशुपट्टो नेत्रपट्टः । कुतपः कम्बलविशेषः । स्पष्टमन्यत् ॥ १८५ ॥

उदकगोमूत्रैरेव —

**सगौरसर्षपैः क्षौमं पुनःपाकान्महीमयम् ।**

---

१. 'अ', २. 'शानस्त्र' ग. पाठः. ३. 'मयमि', ४. 'वो' ग. पाठः. ५. 'मिति' ग. ६ पाठ. ६ 'नेन र', ७ 'ह्युद्धे' घ पाठ..

उदकगोमूत्राधिकारे मार्त्तिकस्योपदेशात् तदपि तस्याल्पोपघाते शुद्धिसाधनं द्रष्टव्यम् । पुनःशब्दार्थं पक्कस्यैतत् । आम तु पाक्यं पाकात् । अपाक्यं तु भूशुद्ध्यैव । दोषातिशये च त्यागः । यथाह वसिष्ठः —

"मद्यमूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः ।
संस्पृष्टं नैव शुध्येत पुनःपाकेन मृन्मयम् ॥"

इति । संशब्दाच्च मद्यादिक्लिन्नं त्याज्यं, न विप्रुण्मात्रस्पर्शनात् । पुनःपाकेन चाशुद्धिवचनाद् आद्यपाकाच्छुध्यत्येव ।

सर्वदैवोपहतप्रायत्वेऽपि —

## कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा ॥१८६॥

कारुः कुम्भकारादिः । भैक्षं ब्रह्मचार्यादिगतम् । योषिन्मुखमसवर्णाया अपि । गुणार्थश्च योषिच्छब्दः । ततश्च नियुक्ताया अशुच्येव । तथाशब्दादाकराश्च । यथाह शङ्खः — "कारुहस्तः शुचिस्तथाकराः । तद्द्रव्याणि प्रोक्षिताभ्युक्षितानि शुचीनि । आकरजानामभ्यवहरणीयानां घृतेनाभिघारितानां पुनःपचनम् । एवं स्नेहानां स्नेहवद्द्रवाणामि"ति । प्रोक्षणं प्रक्षालनम् । अभ्युक्षणमुपरिसेचनमात्रम् । पुनः शुचिग्रहणमाकरजत्वान्नात्र दुष्टत्वमिति ज्ञापनार्थम् । पुनराकरजवचनं यानि प्रायेणाकरजान्येव किलाटादीनि, तान्येव, न त्वपूपव्यञ्जनादीनीत्येवमर्थम् । अभिघारितानां पक्कानां पुनःपाकः । अभिघारणमेवेतरेषाम् । स्नेहानां तु पाकमात्रम् । स्नेहवद्द्रवाणां पाकयोग्यानां मध्वादीनामित्यादि योज्यम् ॥ १८६ ॥

यथास्थानं तु दोषविशेषात् —

## भूशुद्धिर्मार्जनाद् दाहात् कालाद्गोक्रमणात्तथा ।
## सेकादुल्लेखनाल्लेपाद् गृहं मार्जनलेपनात् ॥ १८७ ॥

*तथाशब्दान्मृदन्तरावपनाच्च । "आवपनं च भूमेरि"ति गौतमः ।* मार्जनं शोधनं, बर्हूद्धरणमिति यावत् । कालाद् वर्षादिभिः, रजस्वलादिपरिगृहीतावा तच्छुद्धिकालात् । अपरिग्रहे त्वाह भृगुः —

---

१. 'तु' ख पाठ. २. 'नाद्य' ङ पाठः ३. 'त', ४. 'जानामदुष्टत्वार्थम्।', ५. 'नि न', ६ 'त्येवमादि' ख. पाठः. ७. 'पापक्षं—भू' ढ. पाठः. ८. 'हूकर' च. पाठः,

"उपलिप्तं तु यत् सार्द्रं परिक्रान्तमुदक्यया।
शुद्धं तच्छुध्यते यद्वा सुवर्णसलिलोक्षितम्॥"

इति। सेकः प्रोक्षणम्। तथाचाह यमः—

"गोकर्णमात्रमब्बिन्दुः पुनाति पतितः क्षितौ।
समूढमसमूढं वा यत्र लेपो न दृश्यते॥"

इति। गृह मार्जनलेपनाद् अन्वहम्। कुड्यवचनो वा गृहशब्दः, अन्यत्र भूशुद्धेवोक्तत्वात्॥ १८७॥

अनभ्यवहार्ये उक्तम्। अभ्यवहार्ये तु—

**गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते।**
**सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये॥ १८८॥**

अमाधिकारात् तदुच्छिष्टलेपोपहतानां[2] —

**त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः।**
**भस्मना कांस्यलोहानां शुद्धिः प्लावो द्रवस्य तु॥ १८९॥**

तुशब्दादन्यत्राप्यल्पोपघाते द्रव्यस्याय शौचविधिः॥ १८९॥

मूत्रपुरीषादिभिस्तु—

**अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणम्।**
**वाक्छस्तमम्बुनिर्णिक्तमज्ञातं च सदा शुचि॥१९०॥**

सर्वद्रव्याणामयं शौचकल्पः। गन्धवचनान्निर्गन्धश्लेष्माद्युपघातेऽद्भिरेव लेपापकर्षणम् इति केचित्। तत् पुनर्विचार्यम्। यथाह मनुः—

"यावन्नापैत्यमेध्याक्ताद् गन्धो लेपश्च तत्कृतः।
तावन्मृद् वारि चादेयं सर्वासु द्रव्यशुद्धिषु॥"

इति। यत् पुनः शङ्खेनोक्तं—"तैजसानां कुणपरेतोमूत्रपुरीषोपहतानामावर्तनमुल्लेखनं भस्मना वा त्रिः सप्तकृत्वः परिमार्जनमि"ति, तद् गन्धाद्य-

१ 'चमसा' प, 'चमसम' ग पाठ. २ 'ष्ट', ३ 'तथाच म' च. पाठ.

पर्कर्पणाशक्तौ द्रष्टव्यम् । भस्मनाप्यपकृष्टगन्धानामेवाविरोधात् परिमार्जनं शुष्कामेध्योपघात एव । इयं तु सर्वसाधारणद्रव्यशुद्धिविषयकल्पना — यद् विशिष्टप्रमाणेन दुष्टमित्यज्ञातं, यच्च हृद्विलेखे सति शोभनमेवैतदिति वाक्छस्तमुदकेन वा प्रक्षालितं प्रोक्षितं वा तत् सदा निर्विचिकित्सं शुद्धमेवेत्यवसेयम् ॥ १९० ॥

एवमाप. शुद्धिकारणत्वेनोक्ता. । तासां पुनरियं शुद्धि —

**शुचि गोतृप्तिकृत् तोयं प्रकृतिस्थं महीगतम् ।**
**तथा मांसं श्वचण्डालक्रव्यादादिनिपातितम् ॥ १९१ ॥**

अवगाहनादिक्षमं गोतृप्तिकृत् केचिदिच्छन्ति । तत्त्वयुक्तम् । "प्रदरादपि या गोस्तर्पणाः स्युरि"ति वसिष्ठवचनात् । प्रकृतिस्थं गन्धवर्णरसागमाद्यदुष्टम् । सर्वथा भूमिगतत्वेऽपि मेध्यम् । तथा चाम्नायः— "वाग्वै देवेभ्योऽपाक्रामत् । सा आप. प्राविशत् । ते देवा अद्भ्यो वाचमैच्छन् । तानापोऽब्रुवन् — यदस्माकं प्रजाभ्यो यदन्यजेभ्योऽशुभं तत् पावयध्व, ततो वाचं दास्याम इति । तथेति देवाः प्राहुः" इत्युपक्रम्य "यो ह्यादित्य स ब्रह्मयज्ञ. सर्वा देवता. सहिता अन्वहं ब्रह्मयज्ञपूताभी रश्मिभिः पावयेत् । तस्मादेवाहनि शुद्धा. शुद्धौ कल्प्यन्ते । तस्माद् यद्यन्मीमांस्यं स्यात्, तत्तदद्भिः स्पृशेत्, शुच्येव भवति । रात्रौ वरुण प्राविशत् । तस्मान्न रात्रौ गृह्णीयात् । धाम्नो धाम्न इति वार्थि वोपरिष्टाद् गृह्णीयादि"ति । न च कर्पूरादिविकारेऽपि दोषैः, 'गन्धादिदुष्टाभिरि'ति दुष्टत्ववचनात् । तथाशब्दान्मांसमपि प्रकृतिस्थमेव मेध्यम् । अतश्च चण्डालाद्युपघाते निपातितस्य दोष एवेत्यवसेयम् ॥ १९१ ॥

यथाचोपघाताशङ्कायामप्युदकं मेध्य, तथैतान्यपि —

**रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलः ।**
**विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्नावने शुचिः ॥ १९२ ॥**

---

१. 'भ्योऽन्य' ख, 'भ्योन्त्यजे' ड पाठ २ 'स' ख पाठ. ३. 'एवता' घ., 'एता' ड पाठ ४. घ, न ग' घ ड. पाठ

आदित्यरश्मयोऽग्निर्वातोद्धूतं रजश्चण्डालादिशरीरच्छाया गावोऽश्वा भूमिर्वायुस्तदीरिताश्चास्पृष्टाः सर्वतो विप्रुषो मक्षिकाश्चाशुचिसेविन्यः स्पर्शे मेध्याः । प्रस्रावने च मातुर्वत्समुखं मेध्यम् । वत्सग्रहणं च सर्वप्रस्रावकोपलक्षणार्थं, न्यायसाम्यात् । सर्वथा शास्त्रममीमांस्यं यतः ॥ १९२ ॥

ननु गवाश्वयो[1]र्मेध्यत्ववचनान्महिष्यादावशुद्धत्वप्रसङ्गः । नैवम् । गुणार्थमेतद् न परिसङ्ख्यार्थम् । को गुण इति । उच्यते—

**अजाश्वमुखतो मेध्यं न गोर्न नखजा मलाः ।**
**पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः ॥ १९३ ॥**

चशब्दादन्यदप्येवंरूपं सोमादिस्पर्शनाच्छुध्यत्येव । तथाच मन्त्रवर्णः—"अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्र" इति । अतश्च यस्यैवान्यच्छौचं नोक्तं, तस्यैवैतदिति शास्त्रसंक्षेपः ॥ १९३ ॥

अमेध्यत्वाशङ्कायामपि हि—

**मुखजा विप्रुषो मेध्याः पराचमनविन्दवः ।**
**श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥ १९४ ॥**

विप्रुषां पुनर्वचनं साक्षात्कारेण दौष्ट्यावगतावन्यत्रामेध्या एवेति ज्ञापनार्थम् । गौतमीयं च "न चेदङ्गे निपतन्ती"ति परकीयविषयम् । इदं चात्मीयार्थमिति भेदः । स्पष्टोपलब्धौ त्वात्मीयेष्वपि दोष एव । पराचमनविन्दवश्च मेध्याः । तथाह वसिष्ठः —

"परानथाचामयतः पादौ या विप्रुषो गताः ।
भूमिस्थैस्तु समा ज्ञेया"

इति । एतस्मादेव चान्यावर्जितेनाप्याचमनसिद्धिः । तथाचापस्तम्बः— "यं वा प्रयतस्त्वाचामयती"ति । श्मश्रु चास्यगतं मेध्यम् । चशब्दात् श्मश्रुगतश्च लेपः, "न श्मश्रुगतो लेप" इति वसिष्ठवचनात् । श्मश्रुगतस्त्वश्रुतेश्चापकर्षणाशक्तावेव । दन्तश्लिष्टं त्यक्त्वा ततः शुचिः निगिरंश्च ।

1. 'यो शुद्धत्व' ग. पाठ.

यस्याचमनकाले प्रयत्नतोऽनुपलम्भः, ततः पश्चान्निगीर्य त्यक्त्वा वा तेनै-वाचमनेन शुद्ध इत्यवसेयम् । अत्रैव प्रदेशे केचिदिमं श्लोकं पठन्ति—

"रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च ॥"

इति । तत् पुनः पूर्वेणैव गतत्वादकिञ्चित् ॥ १९४ ॥

पूर्वस्मादेवाचमनाच्छुद्धिरुक्ता । न च तदन्यत्राचमनमुर्गादयमित्यपुनर्वारहेतुमाह—

**स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे ।**
**आचान्तः पुनराचामेद् वासो विपरिधाय च ॥ १९५ ॥**

आचान्त इत्युपदेशात् स्नानादिनिमित्तेष्वन्येषु चोच्छिष्टस्पर्शनादिषु स्मृत्यन्तरानुसारादन्यदाचमनविधायकं कल्पनीयम् । तद्वशाचाचान्तः स्नानादिषु पुनराचामेदित्येष श्लोकविषयः । अतश्चान्यत्र सकृदाचमनमेव । रथ्याप्रसर्पण इति प्रशब्दादनुपानत्कस्यैवाचमनं, न सर्वत्र । वाससश्च विपरिवर्त एवाचमनं, न श्लथितसमाधाने । केचित् त्वाद्यन्तयोराचमनमिच्छन्ति । तत् पुनर्विचार्यम् । स्पष्टमन्यत् । अथ त्वत्र संप्रदायः— कात्यस्याचमनविधेर्विचित्रप्रकारत्वम्, आचमनस्य शौचाशुभक्षपणाद्यर्थत्वात् । तथाहि—

मूत्राद्युत्सर्जने शौचं यज्ञादौ कर्मसाधनम् ।
क्षुते नैमित्तिकं शुक्रभाषणे पापनाशनम् ॥
जाड्यव्याद्यौ च धर्माय प्रस्थानादौ च सिद्धये ।
क्रूरदृश्येक्षणे क्षुण्णलक्षणाद्यपनुत्तये ॥
स्मृत्यन्तरात् समाचारादाम्नायाच्चैवमादिभिः ।
प्रकारैस्तद् विवेक्तव्यं सदा तत्त्वबुभुत्सुभिः ॥

तत्र शौचार्थाचमनार्हस्पृष्टितस्पृष्टिनोरप्याचमनमेव शौचम् । परस्य त्वदोषः । तथाच स्मरन्ति—

१ 'तेऽन्य' घ पाठ • मनार क प मनावधान क' ख पाठ
१ यथा स्म' च पाठ .

"उच्छिष्टेन तु संस्पृष्ट एक एव स दुष्यति ।
तं स्पृष्ट्वान्यो न दुष्येत सर्वद्रव्येष्वयं विधिः ॥"

इति । अचेतनस्य तु द्रव्यस्य प्रोक्षणम् । यथाह शङ्खः — "द्रव्यहस्त उच्छिष्टो निधायाचामेत् । अद्भिरभ्युक्ष्यं द्रव्यं शुध्यती"ति । श्रुतिश्चोक्तैव— "यद्यन्मीमांस्यं स्यात् तत् तदद्भिः स्पृशेदि"ति । उच्छिष्टाचेतनद्रव्यस्पृष्टिस्पर्शे त्वदोषः, "सर्वद्रव्येष्वयं विधिरि"ति वचनात् । अपुरुषप्राणिनां तु निर्दोषतैव । एतेनैव स्नानवैचित्र्यं प्रपञ्चनीयम् । इयांस्तु विशेषः — शौचार्थत्वेऽपि द्वैविध्यं, मैथुन्युदक्यादिभेदात् । उदक्यादिस्पृष्टितस्पृष्टिनोरपि स्नानं द्रव्यस्य च प्रक्षालनम् । मैथुन्यादौ त्वाचमनप्रोक्षणे । यच्च द्रव्यं मानुष वा स्नानक्षालनक्षमं, तस्यैवैतत् । तद्विनाशिनस्त्वाचमनप्रोक्षणे एवातुरपुस्तकादेः । यथाह बौधायनः —

"देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥"

इति । अयं चात्र परमार्थः । अस्यैव स्मृत्यन्तरेषु प्रपञ्चनमात्रम् । यथाह मनुः — "शौचं यथार्हं कार्यमि"ति । तैजसविशेषशौचार्थत्वेऽपि सर्वार्थमेवैतत् । एव चण्डालादिसङ्करे सर्वद्रव्यप्रक्षालनप्राप्तौ विशेषः— तैजसानां भस्मना त्रिःसप्तकृत्वः परिमार्जनम् । सकृद्भुक्तानामुल्लेखनं, चिरभुक्तानामावर्तनम् । एवं मूत्रलशुनशूद्रभोगादिष्वपि योज्यम् । मार्त्तिकानां तु चण्डाललशुनादिस्पर्शने पुनःपाकः । मूत्राद्युपघाते चण्डालादिभोगे च त्यागः । काकादिभिर्लेयने पर्यग्निकरणम् । तत्पुरीषाद्युपघाते पुनःपाकः । एवं दारवाणां प्रक्षालनप्रोक्षणपरिघर्षणोल्लेखनतक्षणत्यागादि योज्यम् । तान्तवानां तु चण्डालादिसङ्करेऽल्पानां प्रक्षालनं, सकृद्भुक्तानां तुषादिभिर्यथार्हं मृद्भिरद्भिश्च । लशुनाद्युपहतानां मूत्रादिव्याप्तानां त्वपनयनाशक्तौ तन्मात्रच्छेदः । पैष्ट्यादिव्याप्तौ चण्डालादिचिरभुक्तानां च त्याग

१ 'मस्पृष्टमान्या ख. पाठ २. 'न्त् वद' प. पाठ.. ३. 'त्वादि । उ', ४. 'र्थेन त्व' ग. पा०. ५. 'द्वी' प. पाठ.. ६. 'तथाचाह', ७. 'ज्ञनादि', ८. 'र्थे पु' ट. पाठ. ९. 'म् । पुर्', १० 'आ प' अ. प. पाठः.

एव । वैवर्ण्ये तूत्स्वेदनम् । सर्वद्रव्याणां तु स्वं स्वं वर्णमुत्पाद्य शुद्धिर-द्भिश्च क्षालनम् । अब्जोपलास्थिदन्तमणिमयानां सकृच्छूद्रादिभुक्तानां *लशुनादिस्पर्शे वा परिमार्जितानामुदकगोमूत्राभ्यां क्षालनं, चिरभुक्तानां* तु त्यागः । महार्हं त्वत्याज्यमेव, "अमेध्यादपि काञ्चनमि"त्युपन्यासात् । उक्तं च "देशं कालमि"ति, "मृत्तोयैः शोध्यते शोध्यमि"ति च मानवम् । सर्वत्रानादिष्टशौचे लेपसदसद्भावापेक्षया यथार्हं कल्पनीयम् । बहूनां तु धान्यवाससां शयनादीनां च चण्डालादिसङ्करे प्रोक्षणम् । यस्य च स्ना-नार्हस्पर्शने प्रोक्षणं, तस्य चोच्छिष्टस्पर्शने न किञ्चित् । चण्डालाद्याहृता-नां तृणकाष्ठशुष्कगोमयमूलफलादीनां प्रोक्षणम् । अप्रोक्षितस्पर्शने तु स्नानमेव । आर्द्रगोमयादेस्तु शुष्कस्य सुवर्णोदकप्रोक्षितस्य वा शुद्धिः । मूत्राद्युपघाते तु धान्यानां तत्संस्पृष्टं त्यक्त्वा पर्यग्निकरणादिभिः शेषशु-द्धिः । शुष्कपुरीषाद्यनियतससर्गे चापस्तम्बोक्तं व्रीहीणां प्रक्षाल्यावशोषणं तण्डुलानां तु त्यागः इति । रसानां तु पात्रदोषे पात्रान्तरोपनयनोत्प-वने । लशुनादिसंसर्गे तूद्धृत्य प्लावनम् अभक्ष्यात्युपपतनीयरससंसर्गा-शङ्कायां पाक्यैस्स क्वाथनम्, आप्लाव्यान्यस्मिन् सुवर्णादिप्रक्षेपः । तैलस-र्पिषी उच्छिष्टसमन्वारब्धे उदकेऽवधायोपयोजयेदिति । एतच्छ्वकाकाद्युप-*घातेऽपि द्रोणाढकावसेचनसमर्थानां विज्ञेयम् । कूपादीनामुद्धृतदोषाणां* हिरण्यादिप्रक्षेपः । पुल्कसाद्युत्पादितलवणानां मधुनश्च भूनिक्षेपणात् । तत्त्यागेनैव शुद्धिः सर्वद्रव्याणां च,

> "अमेध्यतां गतं द्रव्यं यदमेध्यपरिग्रहात् ।
> आत्यन्तिकप्रहाणेन तत् तस्माच्छुद्धिमाप्नुयात् ॥"

इति स्मृत्यन्तरात् । सर्वस्य च द्रव्यस्यात्यल्पस्य *त्याग एव* । पक्वान्नानां तूच्छिष्टस्पर्शेऽल्पानामपि प्रोक्षणं, "प्रचरन्नम्यवहार्येष्वि"ति वसिष्ठवच-नात् । शूद्रोच्छिष्टस्पर्शेऽपि, उदक्यास्पृष्टस्याभक्ष्यत्वोपदेशात् । लशुना-

---

१ शुध्य' ख घ पाठ  २ 'रात', ३ 'क, ४ 'मु, ग' घ. पाठ  ५ 'मौ नि', ६ 'द' घ ङ. पाठ  ७ 'रानुसाराच्च । स' ग पा०.  ८ 'चाल' ग. च पाठ.  ९ 'क्षानां' ङ पाठ

दिस्पर्शे तु स्वल्पमुद्धृत्यान्यस्य धान्यवत् संस्कारः, अल्पस्य तु त्याग एव । श्वकाकाद्यवलीढे तु प्राग्द्रोणाढकात् त्यागः । तदाक्रमेण तु साक्षात् स्पृष्टमुद्धृत्य शिष्टस्य धान्यवत् संस्कारः । गृहीतान्नस्य मूत्रादिकरणे पूर्ववत् संस्कारः । शूद्रश्चेद् गृहीतान्ने उच्छिष्टः स्यात्, संस्कृत्य कूश्माण्डीभिः प्रोक्षणम् । सर्वान्नदोषेषु च सावित्र्याष्टशतेनाभिमन्त्र्य संस्कृत्योपयोगः । सर्वत्र देशं कालमित्यालोच्यम् । यत्र च हृद्विलेखः स्यात् तत् त्याज्यमेव, आत्मतुष्टेरपि शौचकारणत्वात् । शुष्कवटकादीनां तु तन्मात्रत्यागः । अत्यन्ताशुचिसंपृक्तानां त्यागः । पात्रोपघाते त्वन्नस्यापि, रसवत् । चण्डालादिसङ्करे तु पक्वान्नस्य त्याग एव । चेलवद्रज्जुविदलचर्मणां तन्मात्रच्छेदादि । कुरुण्ठादिचर्मणां तु रञ्जनं मूत्रादिससर्गे । सर्वत्रास्मादेव चारञ्जितैर्न व्यवहारः । उपानच्छौच तु मृत्तोयेनैव यथार्हम् । एतदपि शङ्खोक्त द्रष्टव्यं "मृद्भस्मगोमूत्रक्षारोदकैश्चैलानां चेलवद्धन्यानां पक्ष्मचामरचर्मतृणवालवेत्रवल्कलादीनामि"त्यादि । आदिग्रहणं कृतपाद्यर्थम् । तृणशब्देन च तालपत्रस्यापि ग्रहण, तृणराजत्वात् तत्रापि तृणशब्दो यत. । चण्डालाद्यन्वारब्धनिखातकाष्ठस्पर्शे च न किञ्चित् । यथाहापस्तम्बः — "मूढप्रस्तरे च संस्पृशन्नन्यानप्रयतान् प्रयतो मन्येत । तथा तृणकाष्ठेषु निखातेष्वि"ति । "अनेकोद्धार्ये काष्ठशिले भूमिसमे" इति च वृद्धगार्ग्यः । गृहमलग्नकवाटकटनिःश्रेण्यादीनि च, तथाशब्दात् । केचित्तु निःश्रेण्याः प्रोक्षणमिच्छन्ति । तच्च वृद्धगार्ग्यवचनादयुक्तम् । मृदिष्टकाकर्दमाणा सर्वयन्त्राणां चादित्यदर्शनादित्येषा दिक् । सर्वत्र "यदेवानूचाना विद्वासो ब्राह्मणा ब्रूयुः, तच्छौचमाद्रियेते"ति स्मृत्यन्तराच्छौचं ब्राह्मणवचनमेवेत्यलमभिधानेन । सर्वत्र चात्र मूलभूतवाक्यानुपन्यासो ग्रन्थातिरेकभीत्या । प्रदर्शनार्थं तु कतिपयान्युपन्यस्यन्ते । यथाह हारीतः — "यथार्थं शौचमद्भिः काञ्चनरजतशङ्खशुक्त्यादीनां तद्गुणवर्णयोगात् स्नेहतो नर्णापहताना यवगोधूममापकलायमसूरचूर्णमार्जनमद्भिः प्रक्षालन च । अम्ललवणाभ्या ताम्राणा, भस्मना कांस्याना, शैलतैलाव-

१ [illegible] २ [illegible], ३ 'सस्य उ', ४ 'दृयविल', ५. 'द्व', ६ [illegible] ७. 'र्तु' प, 'स्द्धा' च पाठ.. ८. 'स्प', ९. 'क्षांना', १०. [illegible] पाठ.

घर्षणैः कार्ष्णायसानां, शैलावघर्षणमार्जनैर्मणिमयानां, सिकतावघर्षणैः शैलानां सलेपानां, निर्लेखनं दारुमयानां, निष्टपनमेव मार्त्तिकानां, गोवालरज्ज्वा सोदकया फलमयानां, क्षारोष्णोदकाभ्यां कार्पासशणमयानां, पुत्रञ्जीवारिष्टकैः क्षौमदुकूलानां, पुत्रञ्जीवोदश्विद्भ्यां चाजिनानां, श्रीफलश्वेतसर्षपकल्कैः कौशेयानाम्, उदश्विद्वल्मीकमृदा सर्षपैश्चोर्णामयानां, स्नेहसक्तुकुल्माषोन्मर्दनैर्गुरूणामूर्णामयानाम्. अत्यन्तोपहतानां सर्वतैजसानामग्निना शौचम् । मृदारुचर्मणां त्यागः । तन्मात्रच्छेदनमेके वाससाम् । न वा साधारणत्वात् । "साधारण हि वास" इत्याचार्याः । तस्मात् सर्ववाससामुपघातापनोदनादेव शुद्धिः । चेलवच्चर्मणां शुद्धिः । दतीनां रञ्जनं, पयसा दान्तानां, क्रीतानां पर्यग्निकरणप्रोक्षणैः पयआदीनां, दध्यादीनां प्रोक्षणं, पर्यग्निकरणावहननैर्व्रीहिः, यवगोधूमानां प्रोक्षणं, फलीकृतानां विमर्शनम्, अवघर्षणदलनपेषणैः शमीधान्यानां, विमर्शनप्रक्षालनैः शाकमूलफलानां भूस्थानां, ग्रहणादभूस्थानां, तक्षणप्रक्षालनैरिक्षुकाण्डानां, स्वविधानाद्यज्ञद्रव्यहविषाम्, उष्णेन वारिणा स्रुवाणां, चरूणां च श्रपणमेव । स्नेहानां कृतलवणानां पुल्कसादिस्पृष्टानां भूस्थानां तृणकाष्ठानामादित्यदर्शनात् । एवमिष्टकानां च शकलीकृतानां स्पर्शनान्निष्टगन्धोपघ्राणश्रवणदर्शनोदाहरणेषु च । केशपिपीलिकादिभिरन्नोपघाते काञ्चनरजतभस्मताम्रवज्रवैडूर्यगोवालाजिनदर्भाणामन्यतमेनाद्भिः संस्पृष्टेन शुद्धं भवति । मन्त्रप्रोक्षणपर्यग्निकरणादित्यदर्शनैः शौचं वह्न्युपघाते, ब्राह्मणानुमताद् वा, तन्मात्रमपनीयाजेनोपघ्राप्य शुद्धं भवति । अत्यन्तोपहतानां त्यागः, रसमयानां च । भूस्था आपः पुण्या अशुभागमवर्जम् । अथापि च ब्राह्मणं भवति— "देवानां वागपाक्रामदि"त्यादि । अथाप्यत्रोदाहरन्ति—

> "शोधितानां तु पात्राणां यद्येकमुपहन्यते ।
> तस्य पात्रस्य तच्छौचं नेतरेषां कथञ्चन ॥"

इति ।

> "वत्सः प्रस्नावने मेध्यः श्वा मृगग्रहणे शुचिः ।
> आकराः शुचयः सर्वे शकुनिः फलशातने ॥"

---

१ 'नाद्' ख. पाठ २ 'तादे' ख घ. पाठ ३ 'शौच । द', ४. 'दन्तानां । प' क. पाठ. ५ 'दिभि स्पृ' ख. ङ पाठ. ६ 'स्पर्शना' ख. घ पाठ ७. 'च' ख. पाठ ८ 'द्भिः स्पृ', ९. 'स्य', १०. 'प्युदा' ख, 'प्यन्मन्त्रो' ङ. पाठ.

तथा —

"गोभिराक्रमणाद् दाहात् खननादभिवर्षणात् ।
मार्जनाल्लेपनात् कालाद् भूमिरेतैर्विशुद्ध्यति ॥"

इति । न चण्डालोपहता भूः स्नानार्हप्रायत्यं जनयति । यस्मादाह —

"मक्षिका विप्रुषो नार्यो भूमिस्तोयं हुताशनः ।
मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः ॥"

यथाशुभौघो नदिसंश्रितो वहन्नदीगुणैस्तद्गुणभावयुक्तः ।
तथान्नपानं विधिपूर्वमागतं द्विजातिपात्रान्तरितं न दुष्यति ॥"

इति । स्मृत्यन्तराण्येवमुदाहार्याणि विवेक्तव्यानि चेत्यलं प्रसङ्गेन ।

मया निरुक्तात्र पदार्थशुद्धिः प्रायेण लोकस्य हितैषिणेयम् ।
श्रद्धेयमार्गैव यतस्ततश्च प्रपञ्चनीया बहुभिः सुधीभिः ॥ १९५ ॥

इति द्रव्यशुद्धिप्रकरणम् ।

---

## अथ दानप्रकरणम् ।

नन्विह कतिपयद्रव्याश्रितैव शुद्धिरुक्ता । अनन्तास्तु तद्विषयाः । स कथमिवानुक्तो विज्ञेय । उक्तमेवैतत् परिपक्वश्लोके — यस्त्वाध्यात्मविदेकोऽपि ब्राह्मणो ब्रूयात्, स निर्विचिकित्सः सर्वथा धर्म इति । अपि च —

**तपस्तप्त्वासृजद् ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥ १९६ ॥**

एवं च वेदगुप्तिर्धर्मसंरक्षणं च भवति, यदि सर्वथा स वेदार्थमधिगच्छेत् । सृष्ट्यादिवचनं च कारणानुसारात् कार्यस्य सामर्थ्यातिरेकप्राप्त्यर्थम् ॥ १९६ ॥

नन्वेवमपि क्वचित् ब्राह्मणः स कदाचिन्न ब्रूयादित्यत आह —

**सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः ।
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽध्यात्मचिन्तकाः ॥१९७॥**

सर्वस्यैव जगतः स्वामिनो विप्राः । ते च धर्मोपदेशद्वारेणैव स्वामिनो नान्यथा । तथाचाह मनुः —

"सर्वेषां ब्राह्मणो विद्याद् वृत्त्युपायान् यथाविधि ।
प्रब्रूयादितरेभ्यश्च स्वयं चैव तथा भवेत् ॥"

इति । किं जातेरेवैतन्माहात्म्य, नेत्युच्यते, श्रुताध्ययनशीलिन एवेति अन्येषामनुपदेष्टृत्वात् । तेभ्यः क्रियापरा इत्यादि मान्यश्लोके व्याख्यातमेव ॥ १९७ ॥

यस्माचैवमुत्तरोत्तरश्रैष्ठ्यम् । यस्मात् —

**न विद्यया केवलया तपसा वापि पात्रता ।**
**यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥१९८॥**

तपःशब्देन चात्र सृष्ट्यनुसाराज्जातिरेवोच्यते, अन्यथा क्षत्रियादेरपि मान्यत्वप्रसङ्गात् । अतो यत्र विद्यातपसी वृत्तं चानुष्ठान, तत् पात्रं दानादिसाधनम् । यस्माच तत्सर्वं ब्रह्मविदि, वैराग्यादिगुणातिरेकश्च, तस्मात् तस्यैव सर्वश्रैष्ठ्यम् । यद्वा स्वार्थ एव तप.शब्दः । चशब्दादुपक्रमाच जात्युपादानम् ॥ १९८ ॥

यस्माच्चैवरूपो ब्राह्मण पातृत्वाज्जगत पात्र, तस्मात् —

**गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ।**
**नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता ॥१९९॥**

पात्रे पातरि । अर्चित सर्वमेव दद्यात् । आह च — "योऽर्चितं प्रतिगृह्णीयादि"ति । अपातरि त्वात्मन. श्रेय इच्छन्न किञ्चिद् दद्यात् । आदिग्रहणाद् भोजनाद्यपि । भोजनादि चाध्यात्मविदोऽपि गृह्णन्त्येव । अतश्च तेषां च सम्प्रदानत्वसिद्धिः । ननु च ब्राह्मणो न परीक्षितव्यः, परीक्षायां वेदविक्रयश्रवणात् । अन्यथा च ज्ञानानुपपत्तेः कथ पात्रावगतिः । उच्यते । लौकिक एवात्राभ्युपाय. ॥ १९९ ॥

किञ्च, यद्यसौ प्रतिगृह्णीयात्, तदोत्रायापेक्षापि प्रसज्येत । तस्य त्वनधिकार एव । यत —

**विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।**

---

१ "म' २ ' ' । प्र घ

यस्मात्—

**गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥ २०० ॥**

तुशब्दोऽवधारणार्थः । स्पष्टमन्यत् ॥ २०० ॥

यस्माच्चैव, तस्मात्—

**दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।**
**याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥ २०१ ॥**

प्रत्यहमेवायाचितमुपनीय पात्रे दद्यात् । तथाचाम्नायः—"अहरहर्दद्यादोदपात्रादी"त्यादि । तथा "हिरण्यमादायाग्निमभ्येती"त्युपनीय[1] दानं दर्शयति । तथा "यो वै ज्ञातो ज्ञातकुलीनः स पितृमान् पैतृमत्य" इत्युपक्रम्य "यो वै ज्ञातायापि कतिपयीर्दक्षिणा ददाति, ताभिर्महर्जय[2]ती"ति पात्र एव दानं दर्शयति । निमित्तेषु ग्रहोपरागादिषु । विशेषतो बहुतरम् । देयम् अयाचितेनैव । किञ्च, याचितेनापि दातव्यं सान्तानिकादिभ्यो दशभ्यः स्नातकेभ्यः । नै[3] च याचितत्वादेवावज्ञा कार्या । किं तर्हि श्रद्धापूतमेवादरेण देयं, शक्तितश्च, आत्मवित्तानुसारात् तद्गुणानुसाराच्च । तथाचाह मनुः—"दशैतान् स्नातकान् विद्यादि"ति ॥ २०१ ॥

गवादीनां देयत्वमुक्तम् । तत्प्रकारप्रख्यायाह—

**स्वर्णशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता ।**
**सकांस्यदोहा दातव्या क्षीरिणी गौः सदक्षिणा ॥ २०२ ॥**

सत्कृता दक्षिणा सदाक्षिणा । दक्षिणाशब्दाच्च हिरण्यबाहुल्यं कार्यम् ॥ २०२ ॥

न चायं नित्यदानप्रकार एव । किं तर्हि—

**दातास्याः स्वर्गमाप्नोति वत्सरान् रोमसम्मितान् ।**
**कपिला चेत् तारयति भूयश्चासप्तमं कुलम् ॥ २०३ ॥**

१. 'त्यादिनोप' घ. ङ पाठः. २. 'ज' घ. पाठः. ३. 'न या' घ. ङ. पाठः. ४. 'थाह' घ. पाठः.

अनेनैव विधिना दीयमाना विशेषतः । नित्येऽपि चायमेव प्रकारः, अन्यानुपदेशादपेक्षितत्वाच्च । एवमन्यत्रापि योज्यम् । यद्वा निमित्तेषु विशेषत इति यदुक्तम्, अयं स विशेषोऽभिहितः । नित्य तु यथार्हं सत्कृत्य दद्यादित्यवसेयम् ॥ २०३ ॥

*अकपिला वा* —

**सवत्सारोमतुल्यानि युगान्युभयतोमुखीम् ।**
**दाता स्वर्गमवाप्नोति पूर्वेण विधिना ददत् ॥२०४॥**

सह वत्सेन यावन्ति रोमाणि, तावन्ति युगानि वर्षाणि । उभयतोमुखीं सोष्यन्तीं निर्गतवत्समुखीम् । पूर्वेण हेमशृङ्गादिविधिना ददद् दाता स्वर्गमवाप्नोतीति योज्यम् । तथाच "अदितिरस्युभयतः शीर्ष्णी"ति मन्त्रवर्णः ॥ २०४ ॥

एव तावदुक्त प्रकार । तदसम्भवऽपि —

**यथाकथञ्चिद् दत्त्वा गां धेनुं वाधेनुमेव वा ।**
**अरोगामपरिक्लिष्टां दाता स्वर्गमवाप्नुयात् ॥ २०५ ॥**

स्पष्टार्थः श्लोकः ॥ २०५ ॥

यस्य तु गोमात्रमपि नास्ति, तस्यापि —

**श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ।**
**पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ २०६ ॥**

निगदोक्तः श्लोक ॥ २०६ ॥

यथासम्भवमेव च --

**भूमिपश्वन्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयम् ।**
**नैवेशिकं स्वर्णधुर्यं दत्त्वा स्वर्गे महीयते ॥ २०७ ॥**

नैवेशिक विवाहार्थं धन, कन्या वा । धुर्योऽनड्वान् । ऋज्वर्थं ॥ २०७ ॥

---

• 'र्थे', २ ला कपिला वा', ३ ऋथा' ड पाठ ४ 'व भू' घ ड. पाठ

वित्तानुसारादेव च —

**गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।**
**यानं वृक्षजलं शय्यां दत्त्वात्यन्तं सुखी भवेत् ॥२०८॥**

यानं गन्त्यादि । वृक्षसेकार्थं जलं वृक्षजलम् । स्पष्टमन्यत् । सर्वत्र चास्मिन् प्रकरणे दातुर्वित्तानुसारात् फलविशेषकल्पना । यथाचोक्तं— "नायं यज्ञः सक्तुप्रस्थतुल्य" इति । आम्नायश्चोक्त एव "यो वै ज्ञातायापि कतिपयीरि"त्यादिः । बाह्यवित्तानुसारी चातिरेको ब्राह्मणाद्यर्थे स्वप्राणपणेनाभयप्रदानादेः । आम्नायश्च "तस्माद् यद्यपि सर्वज्यानिम् जीयेत आत्मना चेज्जीवति प्रविनाशादित्याहुः"(?) इत्यप्राधान्यं वित्तस्य दर्शयति । एवं सर्वत्र विवेककल्पना ॥ २०८ ॥

एव तावद् विभवरत सर्वसाधारणो दानधर्म उक्त. । यस्तु खलु विद्वान् ब्राह्मण, तस्य —

**सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं ततः ।**
**प्रददत् तत् समाप्नोति ब्रह्मलोकमविच्युतः ॥ २०९ ॥**

स्पष्टार्थः श्लोकः ॥ २०९ ॥

एवञ्च सति —

**प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ।**
**ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥२१०॥**

ब्रह्मप्रदानेनैवेत्यर्थः । तस्मान्न दास्यामीति प्रतिगृह्णीयात् । तथाच लौकिकाः —

"प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्"

इति । अतश्च प्रतिग्रहनिवृत्तिरेव ज्यायसीत्यवसेयम् ॥ २१० ॥

---

१ 'रण च' ड. पाठ. २ 'धारंधिणा दद'तात्ला'. ३. 'नाम्नी' ख. पाठः. ४ 'चते आ' क पाठ. ५. 'पिनागादि' ख पाठ. ६. 'ण, ख क. पाठ.

निवृत्तेनापि च—

**कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।**
**मांसं शय्यासनं धान्यं प्रत्याख्येयं न वारि च ॥ २११॥**

निगदोक्तः श्लोकः ॥ २११ ॥

एवं तावच्छाकाद्यग्रहणमित्युक्तम्। हिरण्यादि —

**अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः।**
**अन्यत्र कुलटापण्डपतितेभ्यस्तथा द्विषः॥ २१२॥**

*कुलान्यटतीति कुलटा दुश्चारिणी। तथाशब्दाद् द्वेष्यश्च, अप्रति-*
ग्राह्यप्रकारार्थो वा। तथान्येऽपि पण्डसदृशा अनधिकृता. शूद्रादयः।
यत्तु गौतमीये— "तेन चोत्तरस्तदर्थोऽस्य निचयः" इति, तदाश्रितशू-
द्रविषयं द्रष्टव्यम्। दानार्थमेषा स्थित्यतिरिक्तवित्तसंग्रहाधिकारोऽपि।
तदर्थोऽस्य निचयः इत्यनेनाप्येतदेवोक्तमित्यवसेयम् ॥ २१२ ॥

एवं तावदयाचिताहृतग्रहणमुक्तम्। याचितादपि तु—

**सुरातिथ्यर्चनकृते गुरुभृत्यार्थमेव च।**
**सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २१३॥**

सर्वशब्दः पूर्वश्लोकानुसारादेवायमकुलटादिषु द्रष्टव्यः। यत्पुनर्वा-
सिष्ठे—

"गुर्वर्थे दारमुज्जिहीर्षन्नर्चिष्यन् देवतातिथीन्।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः ॥"

इति, तत् कुलटादिषु प्रतिप्रसवार्थम्। तथाच तत्रैव "उदकार्थेषामपि
प्रतिगृह्णीयादि"ति। अनेन सर्वनाम्नैते एव परामृश्यन्ते। प्राणसंरक्षणार्थं
चैतद्, न पुनर्भोगार्थमित्यादिविवेकः प्रपञ्चनीयः ॥ २१३ ॥

इति दानप्रकरणम्।

---

१ 'यमवति २ य स्यादिति' ३ 'य स्यादस्य', ४ 'तम',
५ 'दङ् ख पट

अथ श्राद्धप्रकरणम्।

निमित्तेषु विशेषतो दानमुक्तम्। कानि पुनस्तानि निमित्तानीत्यत आह —

**अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्।**
**द्रव्यब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः॥ २१४॥**

**व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः।**
**श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः॥२१५॥**

अमावास्याष्टकयोः कृष्णपक्षान्तर्गतत्वेऽपि भेदेनोपादानमादरातिरेकार्थम्। एवं सूर्यसंक्रमविषुवायनादीनां वचनानि योज्यानि। द्रव्यं वार्ध्रीणसादि श्राद्धार्थम्, उभयतोमुख्यादि दानार्थम्। ब्राह्मणसम्पदुक्ता वक्ष्यमाणा च। गजच्छाया त्वन्यैव, व्यतीपातसंनिधानात्,

"यदि स्याच्चन्द्रमाः पित्र्ये करे चैव दिवाकरः।
वर्षासु च त्रयोदश्यां सा छाया कुञ्जरस्य तु॥"

इति च स्मरणात्। एते श्राद्धकालाः प्रकीर्तिताः। श्राद्धवचनं दानादेरपि प्रदर्शनार्थं, प्रक्रमाविशेषात्। तथाचाहुः — "शतमिन्दुक्षये दानमि"ति। एतानि व्यस्तान्यपि निमित्तानि। यद्वा, श्राद्धशब्दः स्वार्थ एव। तस्य चायं कालविधिः। सन्निधानाच्च दानस्याप्ययमेवापेक्षितत्वात् स्मृत्यन्तरानुसाराच्चाविरुद्धः काल इत्यवसेयम्। कृष्णपक्षेऽविशेषत एव श्राद्धमुक्तम्। यथाह जातूकर्णिः — "अथ श्राद्धमपरपक्षे सर्वत्राविशेषात्। नभस्ये एव वा सामर्थ्योपपत्तिभ्यामि"ति। आम्नायश्च "अथ यत्र दक्षिणा वर्तते सूर्यः, पितृषु तर्हि भवती"त्यादिनैतमेवार्थं स्फुटयति। अथवा प्रशस्ततरत्वं तस्य। अविशेषेणैवात्र निमित्तत्वं, "मासि मासि चाशनमि"त्याम्नायात्। जातूकर्णमप्येवमेव नेयम्॥ २१४, २१५॥

---

१ 'वः सू' क पाठ. २ 'नि योज्यानि वचनानि। द्र', ३ 'सयोगात्', ४. 'त्यनि', ५. 'त्येव' ख. पाठ. ६. 'र्थ्यं' क. पाठ

अत्र तावत् कालसम्पदमुक्त्वा पात्रसम्पदमाह —

अग्र्यः सर्वेषु वेदेषु श्रोत्रियो वेदविद् युवा ।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ २१६ ॥
स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः ।
त्रिनाचिकेतदौहित्रशिष्यसंबन्धिबान्धवाः ॥ २१७ ॥
कर्मनिष्ठतपोनिष्ठपञ्चाग्निब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः ॥ २१८ ॥

अग्र्योऽग्रगामी, सर्वेषु वेदेष्वृग्वेदादिषु । श्रोत्रियो ज्ञाता वेदपारग इत्यर्थ । वेदविदेकशाखापारग । युवा तरुण । वेदार्थविन्मीमांसादिशास्त्रज्ञ । ज्येष्ठसामाख्य छान्दोग्य व्रत, तत् चीर्णं येन स ज्येष्ठसामा । एवमुत्तरत्रापि योज्यम् । त्रिमधुराथर्वणम् । त्रिसुपर्णक बाह्वृच्यम् । स्वस्रीयो भागिनेय । ऋत्विगादय प्रसिद्धाः । त्रिनाचिकेतमाध्वर्यवं व्रत, त्रिरग्निचयनं वा । शिष्योऽनुशिष्ट स्नातक । सम्बन्धी स्यालादि । बान्धवा मातृष्वस्रीयादय । कर्मनिष्ठा यावज्जीवाग्निहोत्रिण । तपोनिष्ठा नैष्ठिकपरिव्राजकादय. । पञ्चाग्निरग्निहोत्री, वनस्थो वा । ब्रह्मचार्युपकुर्वाणक । पितृमातृपरास्तद्भक्ता । चशब्द स्मृत्यन्तरोक्तस्मृतिद्रोण*पाठकाद्यर्थ । स्वस्रीयादीना सबन्धनिमित्तत्वात् क्षत्रियादेश्च श्राद्धाधिकारात् तज्जातीयप्रसक्तावाह — ब्राह्मणा श्राद्धसपद इति । श्राद्ध सपादयन्तीति श्राद्धसपद । बहुवचनाद् व्यस्ता अपि । अभ्रष्टसस्काराश्च स्वस्रीयादयोऽल्पगुणा अपीत्यवसेयम् । पुन श्राद्धवचन दाने गुणातिरेकात् पात्रतेति ज्ञापनार्थम् ॥ २१६—२१८ ॥

किमात्र्यपणवत ब्राह्मणा श्राद्धभाजिन[3] । नेति ब्रूम यत —

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तक. ॥ २१९ ॥

१ क। ।प' ग पाठ २ धि ड पाठ. ३ 'त्रन।' घ ड पाठ.

* द्राणति पाठशके। स्मृतद्राणपारक स्मृतकदम्बपारक ।

१

भृतकाध्यापकः क्रूरः कन्यादूष्यभिशस्तकः ।
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः ॥ २२० ॥

मातापितृसुतत्यागी कुण्डाशी वृपलात्मजः ।
परपूर्वापतिः स्तेनः कर्मदुष्टश्च निन्दिताः ॥ २२१ ॥

रोगी असमाधेयव्याध्यभिभूतः । अवकीर्णी आदिष्टप्रायश्चित्तः, अन्यस्य कर्मदौष्टयेनैव निन्दितत्वात् । कुण्डगोलकौ, यथाह मनुः—

"परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः ॥"

इति । परिविन्दको ज्येष्ठभ्रातरि स्थिते दाराग्निहोत्राहर्ता । मातृत्यागी सर्वथा, पितृसुतत्यागी अकारणात् । कुण्डाशी कुण्डगोलकाद्यन्नभोक्ता । वृषल आत्मजो यस्य स वृपलात्मजः शूद्रापत्यः । परपूर्वा पुनर्भूः, तद्भर्ता परपूर्वापतिः । स्तेनश्चोरः । कर्मदौष्टयवचनात् सिद्धे प्रकारार्थं वचनम् । स्पष्टमन्यत् ॥ २१९—२२१ ॥

एवमनिन्दितान् श्राद्धभोजने—

निमन्त्रयीत पूर्वेद्युर्ब्राह्मणानात्मवाञ्छुचिः ।
निमन्त्रितैश्च तैर्भाव्यं मनोवाक्कायसंयतैः ॥ २२२ ॥

ब्राह्मणग्रहणं गुणार्थम् । ततश्च दृष्टार्थतयैव गुणवतः पूर्वेद्युरामन्त्रणम् । अन्येषां तु तदहरप्यविरोधः ॥ २२२ ॥

अथ श्राद्धाहनि—

अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ।
पवित्रपाणिराचान्तानासनेपूपवेशयेत् ॥ २२३ ॥

सशब्दात् स्वयमभ्युत्थानादिनाभ्यर्च्यैतान् । आगतवचनाच्च निमन्त्रणस्यान्यकर्तृकत्वेऽप्यदोषः । पवित्रं दर्भास्तरणादि । आचान्तवचनाच्च

१ दृष्टार्थ सिद्ध । प्र' ख. पाठ २. 'तैर' घ पाठ. ३. 'न स्व' ख, 'प स्व' ध. पाठ

न स्वयं पादप्रक्षालनक्रिया । स्वयमेव त्वासनेषु पङ्क्तिपावनाद्यपेक्षया यथार्हमुपवेशयेत् । आसनवचनं पूर्वमासनोपक्लृप्त्यर्थम् । तथाचाह—

"आसनेषूपक्लृप्तेषु बर्हिष्मत्सु विधानतः ।"

इति ॥ २३३ ॥

स पुनरुपवेशनप्रकार उच्यते—

**देवे युग्मान् यथाशक्ति पित्र्येऽयुग्मांस्तथैव च ।**
**परिश्रिते शुचौ देशे दक्षिणाप्रवणे तथा ॥ २२४ ॥**

तथाशब्दः प्राङ्मुखत्वादिप्रकारार्थः । शक्तिश्चावैगुण्यलक्षणा द्रष्टव्या ॥ २२४ ॥

मनोवाक्कायसयतैः अवैगुण्यशक्त्यपेक्षयैव च—

**द्वौ देवे प्रागुदक्पित्र्ये त्रय एकैकमेव वा ।**
**मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ २२५ ॥**

तथाचाह मनुः—

"द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम् ।
पञ्चैतान् विस्तरो हन्ति तस्मात् तं परिवर्जयेत् ॥"

इति । एवमुपवेशनान्तं पित्र्ये विधायातिदिशति—मातामहानामप्येवं, सर्वं कालादि सम्पाद्यम् । ततश्च सर्वथाकरणे प्रसक्ते शक्त्यपेक्षयैवापवादः—तन्त्रं वा वैश्वदेविकं कर्म कुर्यादिति । वाशब्दः कल्पान्तरार्थोऽपि, स्मृत्यन्तरात्—

"एक एव यदा विप्रो द्वितीयो नोपलभ्यते ।
तं नियुज्य हि पित्रर्थे दैवे त्वग्निं नियोजयेत् ॥"

द्वितीयम् ।

"यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥

---

१ 'न्यानूरा' इ पाठ

देवतायतने स्थाप्य ततः श्राद्धं प्रकल्पयेत् ।-
प्रास्येदग्नौ तदन्नाद्यं दद्याद् वा ब्रह्मचारिणे ॥" इति ।

इद चाधुना विचार्यते — किमिदं श्राद्धं नाम, कस्य वात्राधिकार इति । अत्रायं श्राद्धशब्दो यौगिकत्वेऽपि न गुणविधिः । "श्रद्धापूतं तु शक्तित" इति श्रद्धाया अन्यतः प्राप्तत्वात् । प्रयुक्तस्य च योगानुमानान्नातिप्रसङ्गः । तेनाग्निहोत्रादिवन्नामैवैतदिति स्थितम् । तच्च पिण्डदानस्यैव, न ब्राह्मणभोजनादेः । "यत् पितृभ्यो निपृणाती"त्याम्नायात् । निपरणं च पिण्डदानमेव, न ब्राह्मणभोजनादि । "सर्वेभ्य एव निपृणीयादि"-त्यादिप्रयोगदर्शनानुसारात् । ननु च श्राद्धभुग्देवदत्त इत्याद्यपि प्रयोगो दृष्ट एव । सत्यम् । औपचारिकस्तु सः । कुतोऽयं विवेक इति चेत्, "शास्त्रस्था वा तन्निमित्तत्वादि"ति न्यायात्, पिण्डपितृयज्ञे च प्रयोगदर्शनात् । यथाह जैमिनिः — "श्राद्धवदिति चेत्" । अपिण्डके चान्वाहिकपितृब्राह्मणभोजनेऽनुपलम्भात् । "दद्यात् पिण्डं हरेदन्नमि"ति च "पिण्डदानस्यैव पितृसम्बन्धदर्शनात् । "यद्येकं भोजयेच्छ्राद्ध" -इत्यादयस्तु प्रयोगास्तादर्थ्यनिमित्तत्वेनैवावसेयाः ।.व्यासश्च पिण्डदान एव पितृहस्तोऽथानाभिधानात् तत्प्रधानतामेव द्योतयति । एवमाम्नायात् स्मृत्यन्तरानुसाराच्च पिण्डदानस्यैव श्राद्धत्वसिद्धिः । चिन्ताप्रयोजनं तु यथोक्तब्राह्मणालाभे पिण्डमात्रप्रवृत्तिर्यथा स्यादिति । क्व पुनरेतत् पिण्डदानं यागादिमध्येऽन्तर्भाव्यम् । नैकत्रापीति केचित् । अन्य एवाय निपरणाख्यो व्यापार उत्सर्गलक्षण इति । शक्यं चैतद् दानमिति वक्तुं, परस्वत्वापत्तिपर्यन्तत्वात् । पितॄणां हि सम्प्रदानतैवोत्पत्तिवाक्ये । यतः पितृभ्यो दद्यात् पिण्डं दद्यादिति च । नन्वत्र दानार्थानुपपत्तिः पितृगतस्वत्वसम्बन्धानुपपत्ते । प्रेतपितृकस्य चाविकारात् । यथाह कात्यायन — "प्रेतेभ्यो ददाती"ति । मनुरपि

"पिता यस्य तु वृत्तः स्याज्जीवेद्वापि पितामहः ।"

इत्यादिना प्रेतेभ्य एव दानं दर्शयति । सत्यमेवम् । प्रेतानामपि यथा सम्प्रदानत्व, तथोपरिष्टाद् वक्ष्यामः । एतान्येव तु कथं वचनानि —

---

१ 'गानु', २ 'व' घ. ङ. पाठ. ३. 'त्वमेवो' ख. पाठ. ४ 'ण्डान् द' ङ पाठ ५. 'पीता' घ. ङ पाठ, ६. 'ते-ग्रोऽपि तु य' ख पाठ

"म्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् ।
विप्रवद्वापि त श्राद्धे स्वक पितरमाशयेत् ॥
पिता यस्य तु वृत्त स्याज्जीवेद् वापि पितामह ।
पितु से नाम सकीर्त्य कीर्तयेत् प्रपितामहम् ॥"

इति । तथेदमन्यत्— "पितापुत्रो चेदाहिताग्नी स्याता, येभ्य एव पिता दद्यात्, तेभ्य पुत्रोऽपी"ति । विरोधादनाद्दत्यान्येवेति केचित् । एव ह्याम्नाय —"असावेतत्त" इति । एव यजमानस्य पित्र" इत्यादि । कात्यायनश्चैतदेवालोच्य "पितृप्रभृति तु नित्या" इत्याह । वचनाच्च परानधिकार । जीवपित्राद्यपेक्षया च 'न जीवन्तमति ददाती"त्याम्नायोपन्यासः । जीवपितृकस्य वा समावर्तनार्थश्राद्धविषयाण्येतानि । तस्यापि

"अनिष्ट्वा तु पितृन्श्राद्धे न कुर्यात् कर्म वैदिकम् "

इत्यनग्निकस्यैव सामर्थ्याच्छ्राद्धाधिकारोऽस्त्येव । कुतोऽय विशेष इति चेत् । साग्निकस्य जीवपितृकस्य पिण्डपितृयज्ञानधिकारात् श्राद्धानधिकार ,

"पिण्डान्वाहार्यक श्राद्ध कुर्यान्मासानुमासिकम् "

इत्यङ्गत्ववचनात् । एव तर्ह्यपरपक्षादिश्राद्धविषयताप्यस्तु । न । पार्वणविकारत्वात्, तस्य च प्रेताविषयत्वात्, प्रकृतिवच्च विकृत्यनुष्ठानात् । समावर्तनेऽपि तर्ह्ययमेव न्याय । सत्यम्, आनर्थक्यपरिजिहीर्षया तद्विषयत्वाभिधानम् । तावतैवानर्थक्यपरिहारान्नातिप्रसङ्ग । किञ्च, अग्न्यभावेऽपि हि सामर्थ्यात् तस्यैवाग्नौकरणकल्पः,

"अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेद्"

इति । तत्सामान्यादन्योऽप्येवजातीयकस्तस्यैव युक्त । एव तावद् विषयोपकल्प्तिरुक्ता । पूर्वपक्षतयैव त्वय भगवतोऽपि लक्ष्यते । कथ हि भगवता प्रत्यक्षा श्रुतयो न निरूपिता स्यु । तथाचाह—

'पितामहो वा तच्छ्राद्ध भुञ्जीतेत्यब्रवीन्मनु ।
काम वा तदनुज्ञात स्वयमेव समाचरेत् ॥'

१ [illegible] २ [illegible] ३ [illegible]

इति । अयमस्यार्थ —"म्रियमाणे तु पितरी"त्यादीतिकरणान्तमुक्तवान् मनु , न त्वनुष्ठितवान् । काममेन तु तेनैव पितामहेन विदुषा शास्त्रार्थमालोच्यानुज्ञातो यद्दे युक्त तत् स्वयमेव समाचरेदिति । तथाचाम्नायोऽप्युक्तमप्यननुष्ठितमकर्तव्यतयैव दर्शयति—"तद्दै सन्तो मीमासामेव चक्रे न तु चकार तत्कृतमेवे"त्यनुष्ठानकृतमेव प्रामाण्य नाभिधानमात्रकृतमित्यभिप्राय । यत्तु "पितापुत्रो चेदाहिताग्नी स्यातामि"ति, तदाहिताग्निवचनात् न्तुंगतपिण्डदानार्थं द्रष्टव्यम् । तथाच तादर्थ्येनैव "येभ्य एव पिता दद्यात्, तेभ्य पुत्रोऽपि" इति याज्ञिकस्मरणम् । अतश्च जीवपितृकस्यावसथ्याद्यपि श्राद्धरहितमेवेत्यल प्रसक्त्या । स्नानविवाहयोस्तु जीवपितृकस्यापि पितृवच्छ्राद्धक्रियेति सम्प्रदाय ।

स्थितमेतत् पिण्डदान श्राद्धमिति । अधिकारस्तु वक्तव्य । ननूक्त प्रेतपितृकोऽग्निमाञ्छ्राद्धाधिकृत इति । यद्येवमात्मत्यागिपितृकस्यापि प्रसज्येत । तच्चायुक्तम् । यथाह मनु —

"वृथासङ्करजाताना प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिना चैव निवर्तेतोदकक्रिया ॥"

इति । एव सर्वस्मृतिष्वेवजातीयकानामुदकक्रियानिषेधादेकोद्दिष्टनिवृत्ति । तदनुसारात् सपिण्डीकरणाभावाच्छ्राद्धानधिकार । अत्रोच्यते —न सपिण्डीकरण श्राद्धनिमित्त, किं तर्हि, [६]अमावास्यादीनि । नन्वमावास्याधिकृतस्य काल । सपिण्डीकृतपितृकस्यैव तु श्राद्धाधिकार । अन्यथा हि प्रागपि सपिण्डीकरणात् प्रसज्येत । प्रसज्यतामिति चेद्, न, प्रतिषेधात् । यथाह मनु —

"असपिण्डक्रियाकर्म द्विजाते संस्थितस्य तु ।
अदैव भोजयेच्छ्राद्ध पिण्डमेक च निर्वपेत् ॥"

इति । नन्वेकोद्दिष्टमपि श्राद्धमेव । सत्यम् । पार्वणानधिकारस्त्वस्माभिरुक्त । तथाचेतरदनाहिताग्नेरपि भवति । आभ्युदयिक वा किं तस्य न भवति, भवति, न त्वसपिण्डीकृतपितृकस्य । एकोद्दिष्ट तु तस्यापि भव

१ णाव। छनमु ख घ पाठ २ दुक्त घ पाठ ३ य घ ङ पाठ
४ नह्व घ पाठ ५ 'त्वह्रा।' ख पाठ ६ स्य च श्रा' ख, स्यव श्रा' ङ पाठ

तीति विशेषः । तस्मान्न सपिण्डीकरणाभावे श्राद्धाधिकारः। अन्ये तु कुतश्चिदागमग्येमं श्लोकं पठन्ति—

"निषिद्धोदककल्पानां पतितादिद्विजन्मनाम् ।
ऊर्ध्वं संवत्सरात् कुर्यात् सर्वमेवौर्ध्वदेहिकम् ॥"

इति । अयं त्वसष्टमूलत्वाद् विचार्यः । अत्र ब्रूमः — प्रेतक्रियैव मन्वादिभिर्निषिद्धा । न तु श्राद्धाधिकारः । सपिण्डीकरणाभावान्नेति चेद्, न; अतिप्रसङ्गात् । यदा हि दैवान्न सपिण्डीकृतः, तदाप्यनधिकारः स्यात् । संवत्सराच्चोर्ध्वं सपिण्डीकरणानुपपत्तिः, अनुपदेशात् । तत्रैतत् स्यात् — अकाले वा तत् कर्तव्यम्, तदभावे वाधिकारो वक्तव्यः । तत्र यद्यतिक्रान्तकालस्यापि क्रिया श्राद्धप्रयुक्तत्वात् सर्वैरविशेषात् कर्तव्य, ब्राह्मणामन्त्रणादिवत् । अनधिकारहेतुत्वं तूपपन्नमेव, तदभावेऽपि दर्शनात् । न तावन्मातामहान् दौहित्रः सपिण्डीकरोति, करोति तु श्राद्धम् । ननु च मातुर्मातामहैनैव सह सपिण्डीकरणमिष्यते, तत्कथमुच्यते दौहित्रः सपिण्डीकरणं न करोतीति । "सपिण्डीकरणविधाने चत्वारि पात्राणि"-त्युपक्रम्य "त्रीणि पितृणामेकं प्रेतस्ये"त्युक्तम् । प्रेतस्य च पितृणां त्रीणीति तत्राभिसंबन्धः, नाधिकृतस्य पितृणामिति समञ्जसं स्यात् । मातुश्च मातामहा एव पितरः । तस्मात् तैरेव सह सपिण्डीकरणं युक्तमिति ।

अत्रोच्यते — स्यादेतद् यदि प्रेतस्येति पितृविशेषणं स्यात् । पात्रसंबन्धितया तु प्रेतस्येति श्रुतं न पितृविशेषणत्वं प्रतिपत्तुं क्षमम् । अतोऽधिकृतापेक्षमेव पितृणामिति योज्यम् । किञ्च, मातामहैः सह सपिण्डक्रियायामानर्थक्यमेव स्यात् । न तावन्मातामहसन्तानिनस्तस्याः पिण्डं दद्युः, अनुपदेशात् । न चाधिकृतसन्तानिनः, तेषामत्यन्तमधिकृतमातामहैः सहासंबन्धात् । अतः सिद्धं दौहित्रो मातामहान् न सपिण्डीकरोतीति । न चान्येन सपिण्डीकृताः सपिण्डीकृता भवन्ति । ननु सपिण्डीकरणं प्रेतसंस्कारत्वाद् येनकेनचित् कृतं सर्वेषामुपकरोतीति । नैवम् । प्रेतोपकारकं ह्येतन्न संस्कारकम् । तत्कल्पने ह्यदृष्टकल्पनाप्रसङ्गात् । उपकारकत्वं तु श्राद्धान्तरवत् सिद्धं, संस्कारमध्ये चापरिगणनाद् विस्पष्टश्रुत्यभावाच्च । एवं सति यावन्तः पुत्राः, सर्वेषामधि-

1. 'न्नाधि' ख पाठः ।

कारः स्यात्, तस्य तस्याविशेषात्। पुत्रमात्राश्रित उपदेशो न सङ्कोचितः स्यात्। तस्मान्नान्यकृतेनान्यस्याधिकारसिद्धिः। अतस्तदभावेऽप्यधिकार इति ज्यायसी कल्पना। किञ्च पुत्राभावे सपिण्डादीनां पिण्डदानं श्रूयते। तच्च सपिण्डक्रियापूर्वकत्वेऽनुपपन्नमेव। तस्मात् तदपि ते न कुर्वन्ति, अपुत्रस्यासम्भवात्। यथाह पारस्करः— "पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात् पुत्रवांश्चेदि"ति। श्राद्धमात्रचोदनैव तेषां न सापिण्डक्रियाचोदनापि। अपिच मात्रे मातामहैः सह पिण्डदानम्। न च तत्र सपिण्डीकरणोपपत्तिः। तस्मान्न तदपायेऽप्यधिकारव्यावृत्तिरिति सिद्धम्। मन्वादिवचनान्यप्येकोद्दिष्टप्रतिषेधार्थतयैव चरितार्थत्वान्न श्राद्धप्रतिपक्षतामुपयान्तीत्यवसेयम्। प्रत्यक्षापि च पिण्डपितृयज्ञश्रुतिरेवमनुपरुद्धा स्यात्। अन्यथा तु स्मृत्युपरोधात् सा बाध्येत। तदपेशलं स्यात्। तस्मादुपयुक्तसिद्धिः। यदा तु "निषिद्धोदककल्पानामि"त्ययं श्लोकः प्रमाणम्। ततस्तदनुसारादपि करणमस्तु। सर्वथा श्राद्धास्तित्वनियमः। यत्तूक्तम् "असपिण्डक्रियाकर्मे"ति, तदर्वाक्संवत्सराद् द्रष्टव्यम्। परतस्त्वसपिण्डीकृतस्यापि श्राद्धप्रवृत्तिः। कुत एतत्। "यदा वा वृद्धिरापद्येते"ति प्रागेव संवत्सरादयमुपदेशो यतः, न श्राद्धाङ्गं सपिण्डीकरणं, प्रमाणाभावात्। कथं पुनः प्रागेवायं विधिः न परतोऽपीत्यवगमः, स्मृत्यन्तरानुसारात्। यथाह पारस्करः—"संवत्सरं पृथगेक" इति। यत्र च संवत्सरप्राप्तिरपि सन्दिग्धा, कुतस्तत्रातिप्रसङ्गः। कात्यायनोऽपि च "संवत्सरे पूर्ण" इति पूर्णवचनात् परतो नेत्येतदेव ज्ञापयति। अन्यथा संवत्सर इत्येव सिद्धि तदनर्थकं स्यात्। तस्मात् सवत्सरादूर्ध्वं सपिण्डीकरणानुपपत्तेः प्रागेव सवत्सराच्छ्राद्धनिषेधार्थम् "असपिण्डक्रियाकर्मे"त्येतद् इत्यनवद्यम्।

इदं तु चिन्त्यम्। किमनग्निकोऽपि सपिण्डक्रियां कुर्याद्, उत साग्निक एवेति। साग्निक इति युक्तम्, इतरस्य सर्वाङ्गोपसंहारानुपपत्तेः। नह्यग्नौकरणं तस्यास्ति,

"न पैतृयाज्ञिको होमो लौकिकेऽग्नौ विधीयते"

इति वचनात्। अत एव च ज्ञायते अग्नौकरणरहितत्वादेकोद्दिष्टमनग्निकोऽपि कुर्यादिति। एवं प्राप्ते ब्रूमः। अविशेषेणैवाधिकारः। अन्यथा हि

१. 'ग्रोऽम', २. 'ना दा', ३. 'द्रवो', ४. 'ति प्रा' ख पाठ.

संवत्सरोपदेशोऽनर्थक एव स्यात् । यस्तावदग्निमान्, प्रागेवासौ करोति । अनग्निकस्तु यद्यग्निमाधाय कुर्यात्, तदा पूर्वतरं श्राद्धानधिकारात् सपिण्डीकरणमेव कर्तव्यम् । अथ वैगुण्याशङ्कया तदकृतिः, तत प्रागवर्षादसपिण्डीकृतपितृकस्य श्राद्धानधिकारात् तत्पूर्वकत्वाच्चावसथ्यस्याविकृतरो विधिः । तस्मादनग्निकस्यापि सपिण्डक्रियाधिकारः । नन्वेवं ब्रह्मचार्यपि कस्मान्न सपिण्डीकरोति । अनुपदेशात् । एकोद्दिष्टमेव हि तस्योपदिष्टं न तु सपिण्डक्रियाद्यपि, शवकर्मण एवानुज्ञानात् । अतोऽविरोधः । कस्मात् पुनः पितरि प्रेते एकादशेऽह्न्यावसथ्यं कुर्वतः सपिण्डक्रियापूर्वकतैव न भवति । वचनान्तरेणापवादात् । यथाह यमः—

"मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥"

इति । एतदेवाद्यवचनस्य प्रयोजनम् । अतश्च जीवपितृकवच्छ्राद्धरहितमेव तस्याप्यावसथ्याधानमिति स्थितम् । इदमधुना चिन्त्यं— किमिदं मातामहश्राद्धं यदा कुर्यात् तदैवम्, अथैतदप्येव नित्यमेव कुर्यादिति । उभयथातिदेशोपपत्तेः संशये, यदा कुर्यात् तदैवमिति प्राप्त उच्यते । चोदनान्तराभावादस्याश्चाविशेषान्नित्यमिति । नन्वेवं पुत्रप्रशंसानुपपन्नैव स्याद्, यदि हि पुत्रवद् दौहित्रोऽपि श्राद्ध कुर्यात् । नैवम् । दुहितरमपेक्ष्य प्रशंसा, न दौहित्रमपि, तस्याः स्वय पितृश्राद्धानधिकृतत्वात् । भर्त्रा च सह श्वशुरश्राद्धकरणात् । दौहित्रपौत्रयोस्त्वविशेषः । नन्वेव रिक्थग्राह्यसौ कस्मान्न भवति । रिक्थविभागे विशेष वक्ष्यामः । दत्तकादिभिस्तु पुत्रैर्मुख्यत्वाज्जनयितुरेव सपिण्डीकरणादि कर्तव्यम्, एकोद्दिष्टमात्रमितरस्यापि । अथ किमेकमेवैतच्छ्राद्ध द्विदेवत्यम् उत द्वे इत्यनियमे प्राप्ते द्वे इति ब्रूमः । पृथक् पितृणां मातामहश्राद्धं, मातामहानां चैवमितीयमेव हि चोदना यतः । तत्र मातामहानामपि श्राद्धं कुर्यादित्ययमेवार्थो भवति, न पुनः श्राद्धाभेद इति । अपिच 'तन्त्रं वा वैश्वदेविकमि'ति भेदप्रसक्तावुपपद्येत । अन्यथा तु स्वाभाविक्येव तन्त्रता स्यात् । तत्रोपदेशानर्थक्यम् । ननु चैकश्राद्धतापि दृश्यते—

१. 'त्रम् । त' घ. पाठ. २. 'स्य । अ' ङ. पाठ. ३. 'तच्छ्रा' घ. पाठः. ४. 'पवे । अ' ङ. पाठः.

"मातामहानामप्येवं दद्यादाचमनं ततः"

इति । सत्यं दृश्यते । अर्थप्राप्ता तु सा, देशकालाद्यभेदात् । न चार्थतः प्राप्तौ शब्दव्यापारकल्पनं युक्तम् । तस्माच्छ्राद्धाभेदः प्रयोगतन्त्रता चेति सिद्धम् । प्रयोजनं तु जीवपितृकस्याजीवमातृकस्य चाधिकाराव्याघातः।

अथ किमेतन्मातामहश्राद्धं मातृमातामहप्रमातामहेभ्य एव । बाढं, मातामहशब्दस्य बहुवचनान्तस्यैवमेवोपपत्तेः, माता च मातामहौ च मातामहा इति । ननु च मातामहश्च प्रमातामहौ चेत्येवमप्युपपद्यत एव । किञ्च

"एकत्वं सा गता भर्तुः पिण्डे गोत्रेऽथ सूतके"

इत्यन्यगोत्रत्वान्मातुर्मातामहेन सहायुक्तमेव दानम् । स्त्रीभिश्च सह तस्याः सपिण्डीकरणमाम्नातं —

"भर्तृगोत्रेण नाम्ना च मातुः कुर्यात् सपिण्डताम् ।
तूर्णीं दम्पतिपिण्डाभ्यां कुशेनान्तरयेत् पितॄन् ॥"

इति । अतोऽपि मातामहेन सह दानायोगः । अन्यच्च

"मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः ।
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुःपितुः ॥"

इत्येवं पिण्डदानोपदेशोऽर्थवान् स्यात् । अन्यथा त्वेवमेव प्राप्तेरानर्थक्यम्। स्त्रीपुंसयोश्चैकत्र दानमयुक्तम् । वैरूप्यं च पितरं दुहितरं च लक्षयतो मातामहशब्दस्य स्यात् । तस्मान्मातामहाद्येव युक्तम् इति ।

अत्रोच्यते — मातृद्वारेणैव हि मातामहे प्रत्ययः, न तदनपेक्षः, मातृप्रातिपदिकादेव प्रत्ययविधानात् । तत्र मातामहशब्द उच्चार्यमाणः पूर्वं मातरमेव प्रत्याययति । प्रतीतस्य च बाधहेतुर्वक्तव्यः । न च दुहित्राद्यनुसारात् प्रतीतबाधो युक्तः, शब्दप्रमाणकत्वात् । यथा च

"मासवृद्धा हि तुष्यन्ति दत्तैरिह पितामहाः"

इति पितामहशब्दः पितृप्रपितामहयोरपि ग्राहकः, तथा मातामहशब्दोऽपि तदनुसारादवसेयः । यत्तु स्त्रीभिः सह सपिण्डीकरणमाम्नातमिति, आन्व-

१. 'मृ । अ' घ. ङ पाठ.. २. 'चैतर मा' घ. पाठ..

एक्यदानप्रयोजनार्थं तद् न श्राद्धार्थं, त्वयानभ्युपगतत्वात् । यश्चोभयोः समो दोषो नासावेकं प्रति चोद्यः । किञ्च मातापित्रो समान एव पुत्रत्वे मातुः श्राद्धं न कुर्यादित्यनुचितमेव स्यात् । तत्सबन्धप्रतीतस्य च मातामहादेस्तदतिलङ्घनेनायुक्तमेवोपादान, प्रथमातिलङ्घने हेत्वभावात् । यत्तु

"मातुः प्रथमतः पिण्ड निवपेत् पुत्रिकासुतः"

इति, तत् पुत्रिकापुत्रस्य पौत्रत्वज्ञापनार्थं द्रष्टव्यम् । तथाचोक्त—

"पौत्री मातामहस्तेन दद्यात् पिण्ड हरेद्धनम्"

इति । *रिक्थविभागे निपुणतर वक्ष्यामः । तस्मान्मातृप्रभृत्येव मातामह-* श्राद्धमिति सिद्धम् ॥ २२९ ॥

एव श्राद्धद्वयेऽपि तन्त्रेणावृत्त्या वा ब्राह्मणानुपवेश्य —

**पाणिप्रक्षालनं दत्त्वा विष्टरार्थान् कुशानपि ।**
**आवाहयेदनुज्ञातो विश्वेदेवास[1] इत्यृचा ॥ २२६ ॥**

विष्टरार्थान् आसनार्थानित्यर्थः । "विश्वान् देवानावाहयिष्य" इति पङ्क्तिमूर्धन्यं सर्वान् वा पृष्ट्वा तदनुज्ञातो "विश्वेदेवास आगते"तीमामृचं जपेत् । एतदेवावाहन नान्यत् ॥ २२६ ॥

ततः —

**यवैरन्ववकीर्याथ भाजने सपवित्रके ।**
**शन्नोदेव्या पयः क्षिप्त्वा यवोऽसीति यवान् क्षिपेत् ॥**
**या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।**

यवैरन्ववकिरण प्रदक्षिणेन विकिरणम्[2] । अथशब्दसामर्थ्यात् स्मृत्यन्तरोक्त द्रष्टव्यम् । "विश्वेदेवा· शृणुतेमंमि"ति मन्त्र जप्त्वा यथालाभोपपन्ने भाजने स्मृत्यन्तरानुसाराद् यज्ञीयवृक्षपात्रादौ पवित्रे निधाय

१. 'श्व' घ. पाठ. २ प्र ह पाठ ३ 'तीमं म' ख पाठ ४. 'ये' घ. पाठ.

"शन्नो देवीरि"त्यनयर्चोदकं प्रक्षिप्य "यवोऽसि यवये"त्यनेन यवानोप्य ब्राह्मणहस्ते पवित्रे निधाय "या दिव्या" इत्यनेनार्घ्यं निनयेत् । हस्तग्रहणं स्मृत्यन्तरे पात्रान्तरितश्रवणात् तन्निवृत्त्यर्थम् । अर्घ्यवचनात् पुष्पाण्यपि प्रक्षेप्तव्यानि । हस्तेष्विति बहुवचनं ब्राह्मणापेक्षम् । अर्घ्यस्त्वेक एव ॥ २२७३ ॥

एवमर्घ्यं प्रदाय —

**दत्त्वोदकं गन्धधूपमाल्यदाम सदीपकम् ॥ २२८ ॥**
**अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ।**
**द्विगुणांस्तु कुशान् दत्त्वा उशन्तस्त्वेत्यृचा पितॄन् ॥२२९॥**
**आवाह्य तदनुज्ञातो जपेदायन्तुनस्ततः ।**
**यवार्थास्तु तिलैः कुर्याच्छेषं त्वर्घ्यादि पूर्ववत् ॥ २३० ॥**

धूपमाल्ययोः (?) क्रमभेदश्छन्दोनुरोधार्थः । अपसव्याप्रदक्षिणवचनाच्च वैश्वदेवे विपर्यय इति ज्ञायते । ततःशब्दो हेत्वर्थः । ततो हेतोः श्रुत्युपन्यासलक्षणात्, "प्राचीनावीतं पितॄणाम् । पितॄणां वा एषा दिक् या दक्षिणा । पराञ्चः पितरः" इत्यादेः पित्रर्थेऽपसव्यादिप्रयोग इत्यर्थः । ततश्चादित एव सर्वमेतत् पितृकार्ये सिद्धं भवति । पितॄणामिति च तदर्थब्राह्मणार्था षष्ठीत्यवसेयम् । यद्यपि च काण्डानुसमयो लाघवार्थमाचार्येण दर्भासनादिप्रदीपान्त उक्तः, तथापि प्रधानासत्त्यनुरोधात् पदार्थानुसमय एव युक्तः । तेन वैश्वदेवे दर्भासनं, ततः पित्र्ये । एवमर्घ्याद्यपि योज्यम् । देवतादिसङ्ख्यया त्वर्घ्यादिकल्पन, न ब्राह्मणसङ्ख्यया । "त्रीण्यर्घ्यपात्राणि पितृभ्य· कुर्यादि"ति स्मृत्यन्तगत् । तेनैकस्यापि ब्राह्मणस्यार्घ्यत्रयं कार्यम् । ब्राह्मणबहुत्वे चैक एवार्घ्यः सर्वेभ्यो देयः । सर्वब्राह्मणानां पितृत्रयार्थत्वात् । स्पष्टमन्यत् ॥ २२८—२३० ॥

पितृभ्य एव तु —

**दत्त्वार्घ्यं संस्रवानेषां पात्रे कृत्वा विधानतः ।**
**पितृभ्यः स्थानमासीति न्युब्जं पात्रं करोत्यधः ॥२३१॥**

---

१. 'ति मन्त्रेणार्घ्यं', २. धात् । अ', ३. 'दिवो', ४. 'तास' घ पाठ·.

एषामर्घ्याणा शेषानेकस्मिन् पात्रेऽवधाय तत् पात्र "पितृभ्य स्थानमसी"त्यनेन मन्त्रेणाधोमुख भूमो कुर्यात् । 'स्थानमासी'ति दीर्घपाठश्छन्दोनुरोधार्थ ॥ २३१ ॥

तत —

**अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृताप्लुतम् ।**
**कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ॥ २३२ ॥**
**हुतशेषं प्रदद्याच्च भाजनेषु समाहितः ।**
**यथालाभोपपन्नेषु रौप्येषु तु विशेषतः ॥ २३३ ॥**

घृताप्लुतमन्नमादायाग्नौ करिष्य इति पृष्ट्वा पितृयज्ञवन्मेक्षणेन* 'अग्नये कव्यवाहनाये'त्याहुतिद्वय जुहुयात् । अग्निवचनमाहिताग्नेरप्यौपासने यथा स्याद्, न तु †अन्वाहार्यपचन इत्येवमर्थम् । हुतशेष चात्र ब्राह्मणभाजनेष्वाचारत प्रक्षालितेषु निक्षिपेद् रौप्येषु, अलाभे तदन्वितेषु, अलाभेऽन्येष्वपि । अन्ये तु कतिपयरौप्यसम्भवे पङ्क्तिपावनेभ्यस्तानीति वर्णयन्ति, विशेषत इति वचनात् । तथाप्यदोष । पित्रर्थेभ्यश्चाग्नौकरणशेषदान न वैश्वदेविकेभ्य , अग्नौकरणस्य पित्रर्थसम्बन्धात् । तुशब्दोऽवधारणार्थ । ततश्च नियोगत शेषदानीय, न शेषस्य सतो दानमित्यवसेयम् । हुतशेषवचनात् तु होमाभावे निवृत्ति ॥ २३२,२३३ ॥

दैवपूर्वकमव त्व'चर् —

**दत्त्वान्न पृथिवीपात्रमिति पात्राभिमन्त्रणम् ।**
**कृत्वेदंविष्णुरित्यन्ने द्विजाङ्गुष्ठान्निवेशयेत् ॥ २३४ ॥**

पुनरन्नवचनमग्नौकरणशेष एवाङ्गुष्ठनिवेशनार्थम् । तत्संयोगाच्च पात्रालम्भाऽपि तत्रैवावसेय । दानपदार्थस्य चापदात् सर्वेभ्योऽन्न दत्त्वा ततः पात्रालम्भनम् । ' पृथिवी ते पात्रमि 'ति वक्तव्ये पृथिवीपात्रमित्युक्त छन्दोनुरोधात् ॥ २३४ ॥

१ घ ड पाठ २ नु ग ड पाठ

* मञण चर्इयपात्रभद । † अन्वाहार्यपचना यह्णम ।

एवमत्र परिवेष्याणोशन च परिकल्प्य ततः —

**सव्याहृतिकां सावित्रीं मधुवाता इति त्र्यृचम्।**
**जप्त्वा यथासुखं वाच्य भुञ्जीरंस्तेऽपि वाग्यताः॥२३५॥**

अपिशब्दात् स्वयं च वाग्यतः स्यात्। यथासुखं तु भोजनविषयम्। यद्रोचते येन च क्रमेण, ते तथैव भुञ्जीरन्नित्यर्थः॥ २३५॥

अथ किमन्नमनियतमेव भोक्तव्यम्। नेत्युच्यते —

**अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः।**
**आ तृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा॥२३६॥**

तुशब्दाज्जप एव स्वयं कार्यः। परिवेषण त्वन्यकर्तृकमेव। एवञ्च पत्नीव्यापारोऽपि श्राद्धे सपादितः स्यात्। अन्नवचन पक्वान्नार्थम्। चशब्दो मूलफलाद्यर्थः। इष्टं ब्राह्मणाभिप्रेतं शास्त्रचोदितं वा कालशाकादि। हविष्यवचन विदलादिनिवृत्त्यर्थम्। तथाच व्यासः —

"अजानानस्तु यः श्राद्ध विदलैः परिवेषयेत्।
रक्षांसि तद् विलुम्पन्ति श्रुतिरेषा पुरातनी॥"

इति। "मापाढकीमुद्गवर्जं विदलानि न दद्यादि"ति भारद्वाजः। तथाशब्दः स्मृत्यन्तरोक्तपरिवेषणभोजनजपप्रकारार्थः। तथाच शङ्खः — "दर्भैर्दक्षिणाग्रैरग्निं परिस्तीर्य जुहुयादि"त्युपक्रम्य "जानू निपद्य भूमौ पितॄन् ध्यायन् मनसा ततस्तिलैर्मांसैः शाकैर्यूपैः कृसरपायसापूपैर्लाजैर्मधुना घृतेन दध्ना पयसा च प्रभूतमिष्टतोऽन्न दद्यादनसूयुः। ब्राह्मणाश्चाश्नन्तः न गुणदोषानभिदध्युः, नान्योन्य ससपृशेयुः, नान्योन्य प्रशंसेयुः। अन्नपानं प्रभूतमिति न ब्रूयुः। न विकृत ब्रूयुः, अन्यत्र हस्तसज्ञानात्। यावत् सोष्मान्न तावदश्नन्ति पितरः, अन्यत्र मूलफलपानेभ्यः। पवित्रपाणिर्दर्भेष्वासीनो मधुवातीयं जपेत्। पवित्रं धर्मशास्त्रमि"त्यादि। तथाच व्यासः —

---

१. 'चान्य', २. 'ह' ङ. पाठ ३. 'भू' ख. पाठ. ४. 'सनात', ५. 'यथाह श' ङ. पाठ. ६. 'च भू' ख. पाठ.. ७ 'णांश्चाश्नत. न' ख. प. पाठ'.

"यावदूष्मान्नमश्नन्ति यावदश्नन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥"

इति । तथान्यत्र "राक्षोघ्नी: पावमानी: पुरुषसूक्तमि"त्येवमादि । एतत् सर्वं तथाशब्दाक्षिप्तप्रकारपरिपूरणार्थं द्रष्टव्यम् ॥ २३६ ॥

एवं तृप्तान्ज्ञात्वा ततः पूर्ववत् सव्याहृतिकसावित्र्यादिलक्षणं जप्त्वा [illegible]—

**अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य ह ।**
**तदन्नं प्रकिरेद् भूमौ दद्याच्चापः सकृत्सकृत् ॥ २३७ ॥**

अन्नं गृहीत्वा 'तृप्ताः स्थे'ति ब्राह्मणान् पृष्ट्वा तैश्च 'तृप्ताः स्म' इत्युक्ते शेषमन्नं तेभ्य एव निवेद्य तैर्यथेष्टं विनियुज्यतामित्येवमनुमान्य, अनुज्ञाप्येत्यर्थः । हशब्दोऽवधारणार्थः, स्मृत्यन्तरे 'यथा ब्रुयुस्तथा कुर्या-दि'ति श्रवणात् । एवं शेषमनुज्ञाप्य यद् गृहीतं तदन्नं प्रकिरेद् भूमौ, न दर्भेषु । ततश्चापो ब्राह्मणेभ्यः सकृत् सकृद् दद्याद्, न पूर्वं तृतिप्रश्ना-दित्यर्थः ॥ २३७ ॥

पूर्ववदपः दत्त्वा यत् प्रकुर्यात् तद् —

**सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।**
**उच्छिष्टसन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवत् ॥ २३८ ॥**

उपशब्दोऽन्यतोपादानार्थः, सर्वस्मादन्नादन्यतश्च आदायेत्यर्थः । पिण्डपितृयज्ञवदिति सकृदाच्छिन्नास्तरणनिधानादिप्राप्त्यर्थम् । अयं तु विशेषः— सतिलमुच्छिष्टसन्निधौ चेति । पिण्डवचनं सूक्तवानादिनिवृत्त्यर्थम् । प्रशब्दो मध्यमपिण्डभक्षणप्रतिषेधार्थः ॥ २३८ ॥

यथा चेतरेषां [illegible]

**मातामहानामप्येवं दद्यादाचमनं ततः ।**
**स्वस्तिवाच्यं ततो दद्यादक्षय्योदकमेव च ॥ २३९ ॥**

१ [illegible] २. [illegible]

पूर्वस्मादेवातिदेशे सिद्धे पुनर्वचनं यथार्थमूहसिद्ध्यर्थम् [१]। क्रमसिद्धिस्तु पाठादेव । आचमनं च सर्वेभ्यो दत्त्वा ततः स्वस्तिवाचन कुर्यात् स्वस्तीति ब्रूहीत्येवं प्रत्येक वाचयेत् । विधानाच्च क्षत्रियादयोऽपि वाचन कुर्युरित्येवशब्दः । किञ्च, अक्षय्योदक दद्यात् तिलव्यामिश्रितम् [२]। अक्षय्यमस्त्विति च वाचयेत् ॥ २३९ ॥

किं स्वस्तिवाच्यानन्तरमेवाक्षय्योदकम् । नेत्युच्यते । पूर्वमक्षय्योदकं प्रदाय,तत —

दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥ २४० ॥

स्वधाकारोदाहरण 'स्वधां वाचयिष्ये' इति । तैश्च 'वाच्यतामि'त्यनुज्ञातः प्रकृतेभ्यः पितृभ्यो मातामहेभ्यश्च स्वधोच्यतामिति ब्रूयात् ॥ २४० ॥

ततस्तेऽपि —

ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत् ततो जलम् ।
प्रीयन्तामिति चाहैवं विश्वेदेवा जलं ददत् ॥ २४१ ॥

भूमिवचनात् कुशव्यावृत्तिः । ततःशब्दस्तु पिण्डपितृयज्ञादालोच्येत्येवमर्थः । ततश्च 'ऊर्जं वहन्ती'त्यनेनेति लभ्यते । वैश्वदेविकेभ्यश्च ब्राह्मणेभ्यो जलं ददत् स्वयमेवाह—विश्वेदेवाः प्रीयन्तामिति । न वाचयेद्, आहेति वचनात् ॥ २४१ ॥

इद चान्यद् —

दातारो नो विवर्धन्तां वेदसन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद् बहु देयं च नोऽस्त्विति ॥ २४२ ॥

---

१. 'न च कु' घ ङ. पाठः. २. 'अक्षय्योदकम् अथ', ३. 'ति वा' ङ. पाठः.

**उक्त्वोक्त्वा च प्रिया वाचः प्रणिपत्य विसर्जयेत् ।**
**वाजेवाज इति प्रीतः पितृपूर्वं विसर्जनम् ॥ २४३ ॥**

विसर्जनमेव पितृपूर्वम्, अन्यत् सर्वं देवपूर्वमित्यभिप्रायः ॥ २४२,२४३ ॥

इद च कुर्यात्—

**यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ।**
**पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत् ॥ २४४ ॥**

पितृपात्रवचनं मातामहपात्रनिवृत्त्यर्थम् ॥ २४४ ॥

एव ब्राह्मणानुत्थाप्य—

**प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।**
**ब्रह्मचारी निशां तां तु नियतात्मा सह द्विजैः ॥ २४५ ॥**

स्यादितिशेषः । पित्र्यर्थत्वादप्रदक्षिणनिवृत्त्यर्थं प्रदक्षिणवचनम् । भुञ्जीत पितृसेवितमित्यन्यत्राभोजनार्थं, पुन. पाकनिवृत्त्यर्थं वा । ततश्च पूर्वमेव हन्तकाराद्यान्विहिक कर्म कृत्वा ततः श्राद्धनित्यवसेयम् । नियतात्मा तां रात्रिं ब्राह्मणैः सह ब्रह्मचारी स्यात् । तामिति च प्रयत्नातिरेकः ऋतावपि ब्रह्मचर्यार्थम् । तुशब्दो विचिकित्सापनोदार्थः । नियतात्मवचनं च ब्राह्मणब्रह्मचर्याकरणेऽप्यवैगुण्यज्ञापनार्थम्, अनध्यायार्थं वा । यत्तु पुरस्ताद् "आत्मवाञ्छुचिरि"त्युक्तं, तन्निश्चितपरलोकस्यैवाधिकारज्ञापनार्थम् । सर्वार्थं वाविशेषात् तेद् द्रष्टव्यम् । शुचिवचन च तत्र तत्र बाह्यशौचार्थम् । समाहितवचन चैकाग्र्यार्थम् । "अक्रोधनोऽत्वर" इत्यनश्नतः क्षुत्पीडितस्य स्वभावप्राप्तक्रोधादिप्रतिषेधार्थम् । एवमन्यान्यपि यथार्थं विवेक्तव्यानि । स्मृत्यन्तराणि च सर्वत्र व्याख्यानाक्षिप्तानि ज्ञापकत्वेनोदाहर्तव्यानि —

"श्राद्धं कृत्वा परश्राद्धे यस्तु भुञ्जीत विह्वल"

इत्येवमादीनि । ग्रन्थातिरेकभीतेस्त्वनुपन्यासः ॥ २४५ ॥

---

१ 'इ[illegible]युक्त्वा' घ पाठ २ [illegible] ३ [illegible]
४ 'दनार्थं' घ.ङ पाठ ५ [illegible] पाठ ६ [illegible]

सर्वप्रकृतिभूत श्राद्धमुपन्यस्य विकारोपदेशमिदानीमाह—

**एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखान् पितॄन् ।**
**यजन्ति दधिकर्कन्धूमिश्राः पिण्डा यवैः क्रियाः ॥**

यथा च श्राद्धमुक्तममावास्यादौ, एवमेव वृद्धावपि । अयं तु विशेषः — आदित एव प्रदक्षिणं कृत्वा सर्वं श्राद्धं कुर्यात् । प्रदक्षिणवचनं चापसव्यादिनिवृत्त्यर्थमपि । कुत एतत् । यत आह यजन्तीति । अस्यायमर्थः — देवतात्वेनात्र पितरो न संप्रदानत्वेन । ततश्च पितॄणामपि देवतात्वात् तद्धर्मा एव यज्ञोपवीतादयः प्रवर्तन्ते, न पितृधर्माः प्राचीनावीतादयः । तथाच व्यासः—

"पितॄणां रूपमास्थाय देवा अन्नमदन्ति हि"

इति । अयं विशेषः — पितॄनावाहयिष्य इत्येवमादिषु नान्दीमुखशब्दः प्रयोक्तव्यः । पिण्डदानं तु नामगोत्रेणैव । दधिकर्कन्धूमिश्राश्च पिण्डाः कार्याः । कर्कन्धूर्बदरम् । मिश्रवचनाच्चान्नेनैव पिण्डाः, यवैस्तिलार्थाः कार्याः । देवत्वादेव यवप्राप्तौ तद्वचनाद् वैश्वदेवेऽपि तिलप्राप्तिरस्तीति ज्ञापयति । ततश्च प्रकृतौ वैश्वदेविके वैकल्पिकास्तिला इत्यवसेयम् । देवत्वादेव च स्वधावचननिवृत्तिः । प्रयोगस्तु प्रपञ्चनीयः । ननु च पूर्वं श्राद्धमपि वृद्धावुपदिष्टम्—"अमावास्याष्टका वृद्धिरि"ति । सत्यम् । वृद्धौ तु निमित्ते पूर्वं तु यच्छ्राद्धमाभ्युदयिकाख्यं, तस्यायं विधिः यथा समावर्तनाद्यारम्भे । यत्तूत्पन्नायां वृद्धौ पुत्रजन्मादिलक्षणायां, तत् पूर्ववदेवेति व्यवस्था । यद्वा निमित्तमात्रतयैव तत्र तत्र वृद्ध्युपादानम् । इह तु प्रकारोपदेश इति व्याख्येयम् ॥ २४६ ॥

अथान्यदपि विकारभूत श्राद्धमाह—

**एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।**
**आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ २४७ ॥**

---

१. 'दिश्य वि' घ ङ पाठ॰. २. 'द्धम', ३. 'न वाम' घ. पाठ. ४. 'ज्य. । वि' घ. ङ. पाठ . ५. 'व' ख. पाठः. ६. 'वतात्वादे' ख, 'दे' ङ, ७. 'वतात्वा' प. पाठः. ८. 'ति वचनात् । स', ९ 'अ ङ' ङ. पाठ॰.

एकं प्रेतमुद्दिश्य यत् क्रियते तदेकोद्दिष्टम् । तच्च पूर्ववदेव । अयं तु विशेषः — वैश्वदेविककर्महीनम् एकश्चार्घ्यः । तत्राप्येकं पवित्रम् । अस्मादेव च ज्ञायतेऽन्यत्र पवित्रद्वयमिति । एकदेवतात्वादेवार्घ्यैकत्वसिद्धौ तद्वचनं पवित्रसंख्याविधानार्थम् । अस्मादेव चैतदपि ज्ञायते — देवतासंख्ययैवार्घ्यकरणं न ब्राह्मणसंख्यया, नानियमो वेत्याशङ्कनीयम् । अयं चान्यो विशेषः— आवाहनाग्नौकरणरहितं स्यात् । कुतः प्राप्तिरिति चेत् । यतोऽपसव्यवदेतद् भवति । अपसव्यसाधनत्वादपसव्यं पार्वण, तद्वदेतत् स्यात् । न सन्निहिताभ्युदयिकवद् इत्यर्थः ॥ २४७ ॥

- अथ चान्यो विशेष —

**उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने ।**
**अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरताः स्मह ॥ २४८॥**

उपतिष्ठतामित्यक्षय्यमस्त्वित्यस्य स्थाने ब्रूयात् । विप्रविसर्जने च वाजे वाज इत्यस्मिन् वक्तव्येऽभिरम्यतामित्येतत् । अयं चात्र विशेषः — अभिरताः स्मेति ब्राह्मणा ब्रूयुः । हशब्दोऽवधारणार्थः । एतदेव स्यान्न वाजे वाज इत्यर्थः । अन्यत्र प्रत्याम्नानाद् बाध इति ज्ञापितं भवति ॥ २४८ ॥

इदं चान्यद् वैकृतं श्राद्धं प्रेतस्य मृताहाद् वा संवत्सरे पूर्णे प्रागपि वा कारणान्तरात् —

**गन्धोदकतिलैर्युक्तं कुर्यात् पात्रचतुष्टयम् ।**
**अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ २४९ ॥**

गन्धोदकतिलैर्युक्तं पात्रचतुष्टयं कुर्यात् । त्रीणि पितॄणामेकं प्रेतस्य । किमर्थम् । अर्घ्यार्थम् । ततश्च प्रत्याम्नानात् प्राकृतार्घ्यनिवृत्तिः । तच्च प्रेतपात्रं पितृपात्रेषु त्रिधा विभज्यावसेचयेत् । प्रेतशब्देन च केचिद् वृद्धप्रपितामहं व्याचक्षते, प्रकर्षेणेतः प्रेत इति च व्युत्पादयन्ति, तदीयं च पात्रं पित्रादिपात्रेष्वासेचयन्ति । तत् पुनर्न युक्तं, स्मृत्यन्तरविरोधात् ।

---

१. 'व प्रवसते' क पाठ २ 'धारणत्वा', ३. 'न कं' ख. क पाठः,

"पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात् पुत्रवांश्चेदि"ति पारस्करः । न च वृद्धस्यापुत्रत्वाशङ्कोपपत्तिः । न चार्वाचीन आसेको युक्तः, सकृद्दृष्ट इव "पराञ्चः पितर" इत्याम्नायविरोधात् । रूढ्या च प्रेतशब्दः प्रथम एव वर्तते, सर्वत्र प्रयोगदर्शनात् । योगोऽपि च तद्गत एवानुगन्तव्यः, न तु तत्सम्भवमात्राद् रूढ्यतिक्रमो युक्त इत्यनया दिशा भ्रान्त्यपनोदः कार्यः ॥ २४९ ॥

किं तूष्णीमेव सेचयेत् । नेत्युच्यते—

**ये समाना इति द्वाभ्यां शेषं त्वर्घ्यादि पूर्ववत् ।**
**एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ २५० ॥**

"ये समाना" इति द्वाभ्यामृग्भ्यां पितृपात्रेष्वासेकः । शेषं पूर्ववत् पार्वणवत् । आचरेदित्यर्थः । कुत एतत् । पात्रत्रयलिङ्गात् । प्रदर्शनार्थं चार्घ्यवचनम् । ततश्च पिण्डदानमप्येवमेव । तथाच कात्यायनः—"एतेनैव पिण्डो व्याख्यात" इति ; एतच्चैकोद्दिष्टपार्वणयोर्विलक्षणं सपिण्डीकरणाख्यं श्राद्धं प्रत्येतव्यम् । संज्ञाकरणमतः परं सहैव पिण्डदाननियमार्थम् । एकोद्दिष्टं स्त्रिया अपि, मातुरपि भवति । सपिण्डीकरणं तु पितुरेवेत्यर्थः । अयं च मातामहैः सह सपिण्डीकरणप्रतिषेधः, तैः सह पिण्डदानात् । स्त्रीभिस्तु सह सपिण्डीकरणमस्त्येव, स्मृत्यन्तरात् । यद्वा एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि इत्यस्यायमर्थः—एक आचार्या उपदिशन्तीत्येकोद्दिष्टं, स्त्रिया अप्येतत् सपिण्डीकरणमस्तीति । सर्वथा स्त्रीभिः सह सपिण्डीकरणानिषेधः ॥ २५० ॥

स्मृत्यन्तरोक्तं सपिण्डीकरणस्य कालद्वयमभिप्रेत्याह—

**अर्वाक् सपिण्डीकरणं यस्य संवत्सराद् भवेत् ।**
**तस्याप्यन्नं सोदकुम्भं दद्यात् संवत्सरं द्विजे ॥ २५१ ॥**

सपिण्डीकरणात् पृथग्दाननिषेधे प्राप्तेऽपवादार्थः श्लोकः । द्विजग्रहणं दानसम्बन्धाद् ब्राह्मणार्थमेव । चतुर्थ्यर्थे सप्तमी छन्दोनुरोधात् ॥ २५१ ॥

---

१. 'अकृत्वा' इ पाठ.. २. 'शेषं' प., 'शेष' ङ. पाठः. ३. 'पूर्ववदाचरेत् । ए' ख. ङ. पाठ. ४. 'प्रतिषे' ङ. पाठः.

किं पुन सापिण्डीकृतस्य पृथक्पिण्डता नास्त्येव । समाख्यानादेव खलु प्राप्तम् ।
अस्यापवाद —

**मृताहनि च कर्तव्यं प्रतिमासं तु वत्सरम् ।**
**प्रतिसंवत्सरं चैव श्राद्धं वै मासिकार्थवत् ॥ २५२ ॥**

मृतो यस्मिन्नहनि, तस्मिन्नेव श्राद्ध कुर्वीत । अह.शब्दस्तिथ्यर्थः। ततश्च प्रतिपदादौ यस्यामेव मृत., तस्यामेव कुर्यात् । चशब्दात् संस्काराहनि च। "ततः सवत्सरे प्रेतायान्न दद्याद्, यस्मिन्नहनि प्रेत. स्यादि"ति सस्काराहनि च श्राद्ध दर्शयति, प्रेतशब्दस्य सस्कार्यवचनत्वात् । कुत एतत् । मृतायेति वक्तव्ये प्रेतायेति वचनात् । स्मृतित आम्नायाच्च। तथाच पारस्कर "प्रेतस्पृशो ग्राम न प्रविशेयुरा नक्षत्रदर्शनादि"ति प्रेतशब्द सस्कार्यवचन दर्शयति । मनुरपि —

"अह्ना चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः ।
प्रेतस्पृशो विशुद्ध्यन्ति"

इति । तथा शवस्पर्शने स्नानमेवोक्त —

"शव तत्स्पृष्टिन चैव स्पृष्ट्वा स्नानेन शुद्धयति"

इति । आम्नायश्च "एतद् वै परम तपो यत् प्रेतमरण्य नयन्ति, यत् प्रेतमग्नावभ्यादधती"ति सस्कारप्रवृत्तावेव प्रेतशब्द दर्शयति । नन्वेतद् विपरीत, प्रेतस्य सतोऽरण्यनयनोपदेशात् । नैवत् । अन्यत्राभिधानाद् "यो वै कश्चिन्म्रियते स शव" इति । अतो मृतमात्रवचन. शवशब्दः, सस्कार्यवचनश्च प्रेतशब्दः । अतश्च यस्मिन्नहनि प्रेतः स्यात् सस्कृत. स्यादित्ययमेवास्यार्थ. । तत्रासस्कृतस्य श्राद्धलोपो मा भूदित्याचार्यस्य मृताहर्ग्रहणम् । इयं चात्र व्यवस्था — यो न सस्कृत., तस्य मृताहनि । अन्यस्य सस्काराहन्येव । यस्य तूभयमपि न ज्ञात, तस्य यदाधिकृतानां तत्त्वतो मरणावगति', तदहरेव सामर्थ्यात् कुर्यात् । अन्यथा ह्यविशेषेणैव विहितेकोद्दिष्टलोपः स्यात् । किमेतदन्तर्दशाह एव श्राद्ध कुर्यात् । नेति ब्रूमः । प्रतिमासमेव नान्तर्दशाह इत्यवधारणार्थस्तुशब्द । कियन्त कालम् । यावद् वत्सरम् । परतस्तु प्रतिसवत्सरमेव । चशब्द शस्त्रहतादेः कृष्ण-

१ 'यात् । अ', २ थाच श' घ ड पाट ३ "रहताह', ४ 'मह्ना' ड पाठ ५ पवि ख 'पत्ते वि' प पाठ. ६ मस्त' ग घ पाठ.

चतुर्दश्यर्थः, त्रिपक्षाद्यर्थश्च। सपिण्डीकृतस्य पृथक्पिण्डाभावप्रसक्तावाह— श्राद्धं वै मासिकार्थवत्, कुर्यात्। वैशब्दः समाख्याबाधनार्थः। अर्थशब्दो विधानार्थः। यथा विहितं मासिकं, तथेत्यर्थः। ततश्च मासिकविधानवत् सपिण्डीकृतस्याप्येकोद्दिष्टमस्त्येवेति श्लोकार्थः। ननु च मासिकं पार्वणमेवोच्यते —

"पिण्डानां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः"

इति मासिकवचनात्। नैतदेवम्। एवं सति सपिण्डीकरणात् प्रागपि[1] पार्वणवत् स्यात्। तत्रैतद् विरुध्येत —

"असपिण्डक्रियाकर्म द्विजातेः संस्थितस्य तु"

इति, संवत्सरे वा सपिण्डीकरणविधिरनर्थकः स्यात्। समाख्ययैव सिद्धे श्लोकानर्थक्यमेव स्यात्। तस्मात् स्मृत्यन्तरोक्तमेकोद्दिष्टमेव मासिकशब्देन प्रत्येतव्यम्। तथाच यमः —

"सपिण्डीकरणादूर्ध्वमृते कृष्णचतुर्दशीम्।
प्रतिसंवत्सरादन्यदेकोद्दिष्टं न कारयेत्॥"

तथा —

"वर्षे वर्षे तु कर्तव्या मातापित्रोस्तु संततिः।
अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेत्॥

इति। यत्पुनर्मनोः "असपिण्डक्रियाकर्मे"त्युपक्रम्य

"सह पिण्डक्रियायां तु कृतायामस्य धर्मतः।
अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैः॥"

इति। अनयैवेति सन्निहितपार्वणावृदुपदेशः, तदन्यत्र प्रतिसंवत्सरादवसेयम्। तथेदमपि

"प्रदानं यत्र यत्रैषा सपिण्डीकरणात् परम्।
तत् स्यात् पार्वणवत् सर्वमन्यत्राभ्युदयात् पितॄन्[2]॥"

इति, तदपि प्रतिसंवत्सरादन्यत्रैव। अथवा, मानवमप्येकोद्दिष्टविधानार्थमेव। अनयैवेति सन्निहिततरत्वादेकोद्दिष्टावृदेव गृह्यते। न पार्वणावृद्,

१. 'प्राप्तावा' घ ङ पाठः २. सर्वे' ख पाठः.

व्यवहितत्वात्। एकोद्दिष्टेऽपि त्वावृत्सभवात्। किमर्थं तर्हि वचनं, सपिण्डीकरणमिति समाख्यानात् सहपिण्डदानाशङ्का मा भूदिति। इतरथा पूर्वश्लोकात् समाख्यानाच्च तत्सिद्धेरारम्भो व्यर्थ एव स्यात्। तस्मात् सहपिण्डक्रियायां त्वित्यपिशब्दार्थस्तुशब्दः, संशयव्यावृत्त्यर्थो वा, न समाख्यानमात्राद् व्यामोहः कार्य इति सपिण्डीकृतस्याप्यनयैवैकोद्दिष्टावृता कार्यमित्यर्थः। एवंच सति सर्वदैवैकोद्दिष्टप्रसङ्गे पार्वणश्राद्धविधानसामर्थ्यादाचार्यवचनाच्च मृताहनीत्यादेः प्रतिसंवत्सरादावेवैकोद्दिष्टम्, अन्यत्र पार्वणवदेवेति व्यवस्था। यत्तु "प्रदान यत्र यत्रैषामि"ति, तत् प्राचीनावीतार्थं न पिण्डत्रित्वार्थम्, "अन्यत्राभ्युदयादि"त्यपवादात्। किञ्च, एषामिति बहुवचनाद् यत्र यत्र बहूनां दानं पितृत्वादिस्य प्राप्तं तत्र तत्रैवामिति गम्यते, न तु यत्र प्रदान तत्र बहव इति। पितृवचनं च प्रेतव्यावृत्त्यर्थमेव। तथाच भृगुः—

> "वर्षे वर्षे तु कर्तव्या मातापित्रोस्तु सत्क्रियाः।
> अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेत्॥"

इति। ततः सवत्सरे सवत्सरे प्रेतायान्न दद्याद् इति चोदितमेव। अन्ये तु कुतश्चिदागमय्येमं श्लोकं पठन्ति —

> "यः सपिण्डीकृतं प्रेत पृथक् पिण्डेन योजयेत्।
> विधिघ्नस्तेन भवति पितृहा चोपजायते॥"

इति। अय त्वस्पष्टमूलत्वादकिञ्चित्करः। किञ्च, अस्याप्युक्तविपर्ययेत्र, उक्तत्वान्न्यायस्य। अथवा अयमप्येकोद्दिष्टद्योतनार्थ एव। अयमस्यार्थः— यः सपिण्डीकृतमिति व्यामोहात् प्रेतधर्मैकपिण्डार्हं प्रेतं प्रतिसवत्सरादौ नैव पृथक् पिण्डे योजयेत्, स तेन व्यामोहेनैकोद्दिष्टविधिघ्नो भवतीत्यादि। यद्वा पृथग्भावः पिण्डानां यस्मिंस्तत् पृथक्पिण्डं पार्वणमेव, तत्रैव च योजनं सम्भवति, नैकोद्दिष्टे, द्वितीयापेक्षत्वाद् योगस्य इति। किञ्च सहपिण्डदानप्रसक्तौ त्वुक्त आरम्भः, अन्यथा तु निर्निमित्त एव स्यात्, प्राप्त्यभावादित्यल प्रसङ्गेन॥ २५२॥

---

१ 'चोत्कम', २ 'भृगुः' ३ नृ। कि' प पाठ.

सर्वश्राद्धेषु प्रातिस्विको भेद उक्तः। पिण्डदानान्त. । साधारण त्विदानामाह —

**पिण्डांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।**
**प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ॥२५३॥**

विप्रादिभ्यः पिण्डं दद्यात्, अग्नावुदके वा प्रक्षिपेद् न स्वेच्छया विनियुञ्जीत । ब्राह्मणेषु चानुत्थितेषु पित्रर्थब्राह्मणोच्छिष्टं न मार्जयेत् । द्वितीय द्विजग्रहणं पित्रर्थब्राह्मणार्थम् । अयं चान्त्यः कल्पः । शक्तिविषये तु वासिष्ठम् —

"उच्छिष्ट न प्रमृज्यात्तु यावन्नास्तमितो रविः"

इति । नन्वेतद् वैकृतश्राद्धाभिधानात् प्रागेव वक्तव्यम् । सत्यम् । प्रतिपत्तीनां स्वप्रवृत्त्यर्थोऽयमारम्भः । ततः संस्रवाधानादेरप्रवृत्तिसिद्धिः । वक्ष्यमाणस्य चैवं साधारण्यात् पायसादिद्रव्यमपि सर्वार्थं स्यात् । अन्यथा पितृतुष्ट्यर्थोपदेशादाभ्युदयिकादावभावशङ्कापि स्यात् । कामसंयोगाश्चैवं तिथ्याद्याश्रयाः सर्वार्था भवन्ति, अन्यथा प्रकृतावेव स्युः, फलस्यानतिदेशाद् इत्यादिक्रमभेदप्रयोजनमवसेयम् ॥ २५३ ॥

कानि पुन पितृतुष्ट्यर्थान्यन्नानि । इत्यानीत्युच्यते—

**हविष्यान्नेन वै मास पायसेन तु वत्सरम् ।**
*** मात्स्यहारिणऔरभ्रशाकुनच्छागपार्षतैः ॥ २५४ ॥**
**ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।**
**मासवृद्ध्या हि तुष्यन्ति दत्तैरिह पितामहाः ॥२५५॥**

हविष्यान्नेन व्रीह्यादिना मासिकी तृप्तिः, मत्स्यादिभिः क्रमात्तैर्द्वित्रिमासाद्येकादशमासान्ता । पायसेन तु गव्येन संवत्सरम् । तथाच मनुः —

"सवत्सरं तु गव्येन पयसा पायसेन वा"

---

१ रा' ड पाठ

---

* म.त्स्यहारणऔरभ्रेत्यसन्धिराप । हारिणौरभ्रे'ति तु मिताक्षरापाठ ।

इति । पितामहग्रहणं च मातामहाद्युपलक्षणमपि प्रकरणाविशेषाद् द्रष्टव्यम् । मत्स्यहारिणौ प्रसिद्धौ । औरभ्रमाविकम् । शाकुनं शकुनिहतभक्ष्यप्राणिषु भवम् । पार्षत पृषन्मांसम । एणः शिशुः कृष्णमृग एव । जात्यन्तरमित्यन्ये । रुरुर्बृहच्छृङ्गो मृग एव । वराहः सूकरः । शशः प्रसिद्धः । तुष्टिवचनानुसाराच्च यथार्थवादं दानविधिकल्पना, न तु पायसदानात् संवत्सरं तृप्ता एव पितर इति श्राद्धाकरणम् ॥ २५४, २५५ ॥

इमानि त्वतितुष्टपर्थानि —

खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ।
लोहामिषं कालशाकं मांसं वार्ध्राणसस्य च ॥ २५६ ॥
यद् ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।
तथा वर्षे त्रयोदश्यां मघासु च न संशयः ॥ २५७ ॥

[1] खड्गामिषं गन्धकमांसम् । महाशल्कः शरभ इति केचित् । तत्त्वमेध्यश्रुतेरयुक्तम् । अतो मत्स्यविशेष एव कश्चिन्महाशल्कः प्रत्येतव्यः । मुन्यन्नं श्यामाकादि । लोहो लोहितच्छागः । आमिषवचनं पश्वालम्भाशङ्कानिवृत्त्यर्थम् । वार्ध्राणसो वृद्धच्छागः । कङ्कणाहिरित्यन्ये । पुनर्मांसवचनं स्तुत्यर्थम् । तथाचाम्नायः — "एतद् वै परममन्नाद्यं यन्मांसमि"ति । गयास्थश्चेति चशब्दो मघादिकालसमुच्चयार्थः । उत्तरत्र तु समस्तालाभे प्रत्येकमपि दद्यादिति विकल्पार्थः । सर्वशब्दादन्यदपि यदेवात्र ददाति, तदेवाक्षयं पितॄन् प्राप्नोतीत्यर्थः । असंशयवचनादर्थवादादेव फलकल्पना न स्तुतिमात्रावसायित्वमिति मन्तव्यम् ॥ २५६, २५७ ॥

एवं तावद् देशकालाश्रय नैयोगिक श्राद्धमुक्त्वेदानीं कामसंयोगेनाह —

कन्यां कन्यावेदिनश्च पशून् मुख्यान् सुतानपि ।
द्यूतं कृषिवणिज्यं च द्विशफैकशफं तथा ॥ २५८ ॥
ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥ २५९ ॥

---

१ पायस [illegible]

**प्रतिपत्प्रभृति ह्येता वर्जयित्वा चतुर्दशीम् ।**
**शस्त्रेण तु हता ये वै तेषां तत्र प्रदीयते ॥ २६० ॥**

श्लोकत्रयस्याप्ययमर्थः—सार्वकालमेव प्रतिपत्प्रभृत्यमावास्यान्तासु तिथिषु चतुर्दशीव्यतिरेकेण प्रत्येकं यथाक्रमेण कन्यालाभादीनि चतुर्दश फलान्यवसेयानि । प्रतिपदि श्राद्धकरणात् कन्यां दुहितृकामाः कन्यावेदिनश्च परिणयनकामास्तां प्राप्नुवन्तीति । एवमुत्तरत्रापि योज्यम् । पशवश्छागादयः । मुख्याः सुताः ब्राह्मीपुत्रादयः । द्यूतकृषिवाणिज्येषु लाभातिरेकः । द्विशफं गवादि । एकशफमश्वादि । ब्रह्मवर्चस्विनः श्रुताध्ययनसंपन्नाः । स्वर्णरूप्ये प्रसिद्धे । कुप्यं ताम्रोपस्करादि । सर्वकामाः प्रकृता एव । स्पष्टमन्यत् ॥ २५८—२६० ॥

तथेदमपि कामसंयोगेनैव—

**स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।**
**पुत्रान् श्रैष्ठ्यं ससौभाग्यमपत्यं मुख्यतां सुतान् ॥ २६१ ॥**
**प्रवृत्तचक्रतां पुत्राञ्ज्ञातिभ्यः प्रभुतां तथा ।**
**अरोगित्वं यशो वीतशोकता परमां गतिम् ॥ २६२ ॥**
**धनं विद्यां भिषक्सिद्धिं कुप्यं गावो ह्यजाविकम् ।**
**अश्वानायुश्च विधिवद्यः श्राद्धं परिवेषयेत् ॥ २६३ ॥**
**कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ।**
**आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ॥ २६४ ॥**

इदमपि श्लोकचतुष्टयं पूर्ववद् व्याख्येयम् । कृत्तिकादिभरण्यन्तानि सप्तविंशतिरेव नक्षत्राणि । तावन्त्येव स्वर्गादीन्यपि फलानि प्रत्येकं यथाक्रमं योज्यानि । कृत्तिकासु सर्वकालं श्राद्धकरणात् स्वर्गप्राप्तिः । एवं रोहिण्यादावपत्यादिप्राप्तियोजना । हिशब्दादयश्च पादपूरणार्थाः । एवं पूर्वत्रापि व्याख्येयम् । न चात्र फलतयोपन्यासाद् द्यूतादिकर्तव्यताप्रतिषेधातिक्रमेण तु प्रवृत्तानामभ्युपाय इति मन्तव्यम् । स्पष्टमन्यत् ॥ ॥ २६१—२६४ ॥

अथ किमेतच्छ्राद्धं कर्तुरेव फलप्रदम् उत पितृणामप्युपकारकमिति । उभयार्थमिति ब्रूमः । तथैवावगमात् । उक्ता हि पितृतृप्तिः कर्तुश्च कामावाप्तिः । सत्यमुक्ता । अनुपपन्ना तु सा । कथं हि स्वकर्मानुसारादनेकविधयोनिगतपितृतुष्ट्युपपत्तिः । शास्त्रप्रमाणकत्वादस्यार्थस्याचोद्यमेतत् । किञ्च—

**वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।**
**प्रीणयन्ति मनुष्याणां पितॄञ्छ्राद्धेन तर्पिताः ॥ २६५ ॥**

अग्न्यादयो नक्षत्रान्ता वसवः । प्राणाद्यात्मैकादश रुद्राः । द्वादश मासा आदित्याः । एते नित्या एवार्थो पितरः । एत एव श्राद्धदेवताः प्रत्येतव्याः । तस्मादविरोधः । एवं सति मनुष्यपितॄणां किमायातम् । उच्यते । एते देवा वस्वादयः प्रीताः प्रीणयन्ति यत्रतत्रस्थान् मनुष्याणां पितॄन् श्राद्धात्तरसानुप्रदानेनेत्यर्थः । सर्वप्राणिगतत्वाच्चैषां सर्वावस्थितपितृतर्पणसामर्थ्यमविरुद्धम् । अग्न्यादीनां च सर्वेषामन्तर्वर्तिन्यो देवता इष्यन्त एवेत्यविरोधः । पूर्वमप्यनेनैवाभिप्रायेण पितॄणां सम्प्रदानत्वमुक्तम् । पितृभ्यो दद्यादिति चोदितत्वात् तदुपपत्त्यपेक्षामुपपादयन्तोऽर्थवादा अपि हि प्रमाणमेवेत्यवधार्य नातीव कुतार्किकोक्तकुसृत्यालीकचोद्याभिनिवेशः कार्यः । ननु चाचोदिता एव वस्वादयो देवताः । इयमेव हि तच्चोदनेत्युच्यमाने पूर्वचोदितपितृदेवतात्वहानिः । अत्रोच्यते । वस्वादीनां च देवतात्वाभिधानात् पितॄणां च सम्प्रदानत्वादविरोधः । देवा इति वक्तव्ये देवता इति पादपूरणार्थः । अनर्थक एव वा तत्प्रयोगः । देवो दानादिति च व्युत्पादनाद् दातारो वस्वादय इति गम्यते । ततश्चायमर्थो भवति— यत् कर्त्रा पितृभ्यो दातुमिष्टं तद् वस्वादयो यत्रतत्रस्थेभ्यः सर्वगतत्वेन समर्था दातुमिति । अतोऽनवद्यम् । वस्वादिभ्योऽपि च प्रदातृवचनात् तृप्तिरस्त्येवेत्यवसेयम् । यद्वा पितॄणां रूपद्वयम् । संसारिरूपता वस्वादिरूपता च । तत्र ये वस्वादिरूपता प्राप्तास्तेऽन्येभ्यः संसारिभ्यो विभुत्वात् तृप्तिं कुर्वन्तीत्यर्थः । यत्र चाभ्युदयादौ देवतात्वेनैव पितॄणां सम्बन्धः, तत्र वस्वादिरूपतयैव देवतात्वम् । चोदनानुसारात्तु नामगोत्रेणैव । एवञ्च जानतोऽधिकार इत्यवसेयम् । अथवा अन्यार्थ एवायं श्लोकः । वस्वादयोऽपि श्राद्धदेवता एव । तत्रैव विषयक्लृप्तिः ।

यः पितृनामानभिज्ञः स वस्वादिभ्यस्त्रिभ्यो दद्यात् । जीवपितृको वाभ्युदये, अन्यस्तु पितृभ्यस्त्रिभ्य एवेति । तथाचाश्वलायनः "नामान्यविद्वांस्ततपितामहप्रपितामहे"ति नामानभिज्ञस्याधिकारं दर्शयति । स्मृतिद्वयाच्च विकल्पः, वस्वादिपदैर्वोद्देशस्ततादिपदैर्वेति । एवञ्च सत्यर्थवादप्राप्तसंप्रदानानुसाराद् दद्यादित्युत्पत्तिचोदनोपपत्तिः । एवञ्च विद्वद्भिः पुत्रैः श्राद्धेनाप्याय्यमानाः पितरः स्वयमपुण्यकृतोऽपि वस्वादिपदं लभन्ते इत्यवसेयम् ॥ २६५ ॥

तच प्राप्य तत —

**आयुः प्रज्ञां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।**
**प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥ २६६ ॥**

स्पष्टार्थः श्लोकः ॥ २६६ ॥

एवमेतच्छ्राद्धमाचार्यमतेनामावास्यादिषु तिथिषु पितृद्वेषिभिरपि चोदनानुसाराच्छक्तिविषये नियोगतः कर्तव्यम् । अशक्तौ तु मानव प्रत्येतव्यम्—

"अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
हेमन्तग्रीष्मवर्षासु पाञ्चयज्ञिकमन्वहम् ॥"

इति । पाञ्चयज्ञिकवचनं दृष्टान्तार्थम् । यथैव प्रत्यक्षश्रुत्यनुसारादशक्तावपि "अहरहर्दद्यादोदपात्रादि" इत्यन्वह पाञ्चयज्ञिककरणं, तथानेनापि स्मार्तविधिनोक्तं — निर्विचिकित्समिह गृहाश्रमे वसता त्रिर्वर्षस्यात्यन्तमशक्तेनापि कार्यम् इति । अग्निहोत्रिणश्चायं कल्पः । सुष्ठ्वप्यशक्तौ

"न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः"

इति । "न श्राद्धेन विना दर्श" इति विभक्तिव्यत्ययः । अन्यथा ह्यसामञ्जस्यं स्यात् । यस्य त्वौपासनमपि नास्ति, तस्य श्राद्धानधिकार एव । यतः —

"न पैतृयज्ञिको होमो लौकिकेऽग्नौ विधीयते"

इति । तदभावे च श्राद्धवैगुण्यम् । सर्वस्यैव त्वत्यन्ताशक्तावयं कल्पः ।

"यदेव तर्पयत्यद्भिः पितृन् स्नात्वा समाहितः ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥"

इत्येव तावन्मनु । "शाकेनापि नापरपक्षमतिक्रामेद् मासि मासि चाशनमिति श्रुतिरि"ति च कात्यायन. । तच्चापरपक्षिकार्थमिति सम्प्रदाय. । सर्वथा शक्त्यनुसारादशाठ्येन श्राद्धकरणमिति परमार्थ. । कस्मात् पुनर्मानवोऽपि श्राद्धकल्प आचार्येण नोपनिवद्ध । समानार्थत्वात्, अनेनैव च प्रयोजनोवाप्ते । न च सर्वं सर्वस्मर्तृभिर्वक्तव्य, स्मृतिबहुत्वस्यानर्थक्यप्रसङ्गात् । मैवम् । एककालीन यत् पुसो नैयोगिक कार्यं, तत् सर्वं स्मर्तव्यम्, अन्यथा सापेक्षत्वप्रसङ्गात् । ननु च यद्येनोपलब्ध, स तदेव स्मर्तु क्षमः । स्मर्तृस्वरूपानभिज्ञ ! मैवम् । येन ह्यशेषतो वेदार्थो नावगत, स कथमिवोपदिशेत् । उपदिशन् वा कथ विद्वद्भिर्ग्राह्यवचन स्यात् । आप्ताश्च मन्वादय., तस्मादखिलवेदार्थाभिज्ञा, तदुपदेशाच्चान्यस्यावगतेरनुष्ठानाविरोध. । नन्वेव सति सर्वं सर्वस्मर्तृभिरुपदेष्टव्यम् । वाढम् । कथ तर्ह्यनुपदेश । कारणान्तरात् । यथैव श्राद्ध समानार्थत्वान्मानवमाचार्येण नोक्त, तथा मनुनापि मातामहश्राद्ध, वैकल्पिकत्वात् । कुतो वैकल्पिकत्वमिति चेद्, अस्मादेव मन्वनभिधानात् । यत्तु नित्यत्वमुक्त, तदाचार्याभिप्रायेण । एवरूपाश्च विकल्पा द्रष्टव्या. । तेनैव चशब्दादिभि स्मृत्यन्तरोक्तार्थान्तर्भाव. । यत्र त्वन्तर्भावासभव., तत्र प्रयोगार्थाया स्मृतावनुच्यमान वैकल्पिकत्वेन द्रष्टव्यम् । गुणार्थाया त्वन्यपरत्वात् स्वरूपाभिधानमतन्त्रमिस्युक्तमेवैतद् "वक्तारो धर्मशास्त्राणामि"त्यत्र । सर्वथा स्मृतिरचनाविशेषान्निर्विचिकित्सा प्रमाणतामालोच्य सर्वमेवमादि यथायोग विविच्य व्याख्येयम् । अत एव स्मृतिवहुत्वानर्थक्यचोद्यमप्यचोद्यमेवेति स्थितम् ।

इति विरचित एष श्राद्धकल्प पुराण.
स्फुटविकटविविक्तन्यायसन्दर्भगर्भ. ।
इममिति च विवस्वान् याज्ञवल्क्याय साक्षात्
पितृसमयविधिज्ञ प्रोक्तवाञ्छ्राद्धदेव ॥

इति श्राद्धप्रकरणम् ।

---

१ ते २ नप्राप्त ' ख. पाठ

## अथ विनायकादिकल्पप्रकरणम्।

एवं तावच्छ्राद्धमुपादिष्टम्, निमित्तप्रयोगो च। इद त्वत्र वक्तव्यम्। तस्मात् पुनरेतान्यनन्तरमेव स्वर्गादीनि फलानि कर्मणो नोत्पद्यन्ते। विशिष्टशरीरोपभोग्यत्वात् स्वर्गस्येति चेत्। पुत्रादीनां तदनन्तरोत्पादप्रसङ्ग। कस्य चैतदनिष्टम्। नन्वदर्शनाद्भवत। नैवम्। निमित्तान्तरात् तददर्शनं, न तु कर्मणामनुत्पादकत्वात्। किं तन्निमित्तान्तरमिति। उच्यते —

**विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः।**
**गणानामाधिपत्याय रुद्रेण ब्रह्मणा पुरा॥२६७॥**

विनायकशब्देनात्र व्यामोह उच्यते। स हि भावाभावाभ्यां कर्मविघ्नार्थं सिद्धयर्थं च विरुद्धासु क्रियासु पुरुषनयनाद् विनायकशब्दवाच्यः क्रोधादिप्रारम्भकत्वेनापकर्षहेतोर्गणस्याधिपत्ये विनियुक्तो रुद्रेण। ब्रह्मणा शरीरस्रष्ट्रेत्यर्थः। यद्वा प्राक्कृताशुभकर्मनिचयो विनायकशब्दवाच्यः। सोऽपि स्वफलोत्पादप्रवृत्तौ विविधं मनुष्यान् नयन् विनायक एव। स च साम्प्रतं कर्मणः फलप्रदानप्रवृत्तस्य विघ्नार्थं रुद्रब्रह्मशब्दवाच्यापूर्वशक्त्या विनियोजितः प्राणिगणानां बलवत्त्वेनाधिपत्यायैव प्रवृत्तः सर्वथा स्वेच्छाप्रवृत्तिं निरुणद्धीत्यर्थः। तथाच व्यासः —

"यत्तत् पूर्वकृतं कर्म न स्मरन्तीह मानवाः।
तदिदं पाण्डवश्रेष्ठ! दैवमित्यभिधीयते॥"

इति। देवैरिव सृष्टं दैवम्। रुद्रेण ब्रह्मणा चेत्यत्रापि योज्यम्। क्रोधो वा रुद्रः। ब्रह्म शास्त्रीयं विधानम्। तत्र क्रोधोपहतेन यद् ब्रह्म नादृतं तेन ब्रह्मणा प्राक्कृताशुभेनैवं रूपेणायमिदानीं क्रोधाख्यो विनायको विनियुक्त इत्यादि योज्यम्। अस्तु वा देवतैव विनायकोऽर्थवादानुसारात्। अधिकारतस्तु नित्यत्वाव्याघातः॥२६७॥

कथं पुन प्राक्तनाशुभसंयोग पुरुषस्यावगम्यत इत्याह —

**तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत।**
**स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति॥२६८॥**

---

१. 'वायमि' ख. पाठः,

काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ।
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ २६९ ॥

व्रजमानस्तथात्मानं मन्यतेऽनुगतं परैः ।
विमना विफलारम्भः संसीदत्यनिमित्ततः ॥ २७० ॥

जाग्रदवस्थायामप्येतानि कौनख्यादिवत् पुराकृताशुभकर्मनिमित्तानि द्रष्टव्यानि ॥ २६८ — २७० ॥

इद् त्वत्रातिस्पष्ट प्राक्तनाशुभ[1]संयोगनिमित्तम् —

तेनोपसृष्टो लभते न राज्यं राजनन्दनः ।
कुमारी न च भर्तारमपत्यं गर्भमेव च ॥ २७१ ॥

गर्भिण्यपत्यम् ऋतुमत्यपि च गर्भमिति च योज्यम् ॥ २७१ ॥

आचार्यत्वं श्रोत्रियः सन् न शिष्योऽध्ययनं तथा ।
वणिग् लाभं न चाप्नोति कृषिं चैव कृषीवलः ॥ २७२ ॥

श्रोत्रिय. श्रुतसम्पन्नोऽप्याचार्यत्व न लभते । शिष्यश्च शुचिः शोभनोऽप्रमत्तः शिष्यगुणयुक्तोऽप्यध्यापकमध्ययन वा न लभत इति व्याख्येयम् । उदाहरणार्थं चैतत् । सर्वथा यो यद्योग्य इति शास्त्रतो लोकतो वावगतः स तदलभमान. प्राक्तनाशुभकर्मोपसृष्ट इत्यवसेयम् ॥ २७२ ॥

अथ त्वत्र प्रतिसमाधिः—

स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम् ।
गौरसर्षपकल्केन *साज्येनोच्छादितस्य तु ॥ २७३ ॥
सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ।
भद्रासनोपविष्टस्य स्वस्ति वाच्य द्विजाञ्छुभान् ॥ २७४ ॥

---

1 भस्मनि ख ग

* सायन मयम्यपादितन । सद्य दाभ्दाञ्ञ् पुनरर्पं । साज्येनेति तु मिताक्षरा
ऽ' ।

तथा स्नपनं कर्तव्यमिति संबन्धः । पुण्याहश्चन्द्रबलादियोगः । उच्छादनमुद्वर्तनम् । तच्च सद्यःपिष्टेन गौरसर्षपकल्केन । तुशब्दात् तेनैव शिरसो विलेपनम् । तथाशब्दाच्च सर्वौषधिगन्धैरुद्वर्तनम् । अप्रतिषिद्धौषध गन्धापेक्षः सर्वशब्दः । भद्रासनं शोभनमासनम् । स्वस्तिवाचनं ब्राह्मणेभ्यो हिरण्यादिदानम् ॥ २७३, २७४ ॥

किंच —

अश्वस्थानाद् गजस्थानाद् वल्मीकात् संगमाद्ध्रदात् ।
मृत्तिकां रोचनां गन्धान् गुल्गुलुं चाप्सु संक्षिपेत् ॥२७५
या आहृता एकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ।
चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं तथा ॥ २७६ ॥

यथायोगं कल्पना ॥ २७५, २७६ ॥

अमी तु स्नपनमन्त्राः —

सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ।
तेन त्वामभिषिञ्चामि पावमानीः पुनन्तु ते ॥ २७७ ॥
भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ।
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ २७८ ॥
यत् ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ।
ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नन्तु ते सदा ॥ २७९ ॥

त्रिभिर्मन्त्रैः प्रतिमन्त्रं कलशत्रयेण स्नापनम् । चतुर्थेन त्वविशेषात् सर्वमन्त्रैरेव । मन्त्रार्थास्तु व्याख्यातृभ्योऽवसेयाः ॥ २७७—२७९ ॥

एवं तावत् कलशचतुष्टयेनापि —

स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ।
जुहुयान्मूर्धनि कुशान् सव्येन परिगृह्य च ॥ २८० ॥

चशब्दो दक्षिणजान्वञ्चनादिप्रकारार्थः ॥ २८० ॥

अमी तु होममन्त्राः —

**मितश्च सम्मितश्चैव तथा सालकटङ्कटः ।**
**कूश्माण्डराजपुत्रश्च जपेत् स्वाहासमन्वितान् ॥२८१॥**

चत्वारो विनायकमन्त्राः । एतान्येव चतुर्णां नामानि । तत्र स्वाहाकारान्तैर्जपबलिकर्मणी, स्वरूपेणैव वा बलिकर्मेति । अयं च प्रयोगप्रकारः— मिताय स्वाहा, सम्मिताय स्वाहा, सालकटङ्कटाय स्वाहा, कूश्माण्डराजपुत्राय स्वाहेति । चशब्दद्वयेन मितसम्मितयोर्भेदं दर्शयन्नितरयोस्तदभावात् समासकरणाच्चाभेदं दर्शयति । अतश्चत्वार एव मन्त्रा इति ॥२८१॥

एवं तावद् गृहे एव कर्म । अतः परं तु —

**नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ।**
**दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ॥ २८२ ॥**

नामानि मितादीनि । बलिमन्त्रा बलिदानविहिताः नमस्क्रिया इत्येवमादयः । अत्र हि बलिलिङ्गयोगोऽस्ति नमोऽस्तु बलिभ्यो हरामीति । उपस्थाने चाम्बिकादर्शनात् स्त्रीमन्त्रत्वादेत एव युक्ताः । चतुष्पथे कुशास्तरणं, न शूर्पे । स्पष्टमन्यत् ॥ २८२ ॥

किं पुनस्तच्छूर्पे देयं —

**कृताकृतांस्तण्डुलांश्च पललौदनमेव च ।**
**मत्स्यान् पक्वांस्तथैवामान्मांसमेतावदेव तु ॥ २८३ ॥**

कृताः फलीकृताः । अकृता अफलीकृताः । चशब्दादोदनमपि द्विरूपमेव । मांसमप्येतावदेव पक्वमामं चेत्यर्थः ॥ २८३ ॥

किंच —

**पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ।**
**मूलकं पूरिकापूपांस्तथैवोण्डेरकस्रजम् ॥२८४॥**

एतत् सर्वं नामभिर्बलिमन्त्रैश्च दत्त्वा ॥ २८४ ॥

---

१- हक' स. पाठ.

अनन्तरं—

**दूर्वासर्षपकल्केन दत्त्वार्घ्यं पूर्णमञ्जलिम् ।**

पूर्वमन्त्रैरेव ।

**विनायकस्य जननीमुपतिष्ठेत् ततोऽम्बिकाम् ॥ २८५ ॥**

अम्बिका चात्र बुद्धिरुच्यते । सा ह्यशुभनिमित्त लोभादिं जनयति । यद्वा, देव्येवाम्बिका रुद्रपत्नी, अधिकारनित्यत्वेनेत्युभयथाप्यदोषः ॥२८५॥

अथ तूपस्थानमन्त्रः—

**रूपं देहि यशो देहि भगं भवति! देहि मे ।**
**पुत्रान् देहि श्रियं पुण्यान् सर्वकामांश्च देहि मे ॥२८६॥**

एवमुपस्थाय तत—

**शुक्लाम्बरधरः शुक्लमाल्यगन्धानुलेपनः ।**
**ब्राह्मणान् भोजयेद् दद्याद् वस्त्रयुग्मं गुरोरपि ॥ २८७ ॥**

गुरुः स्नापकः । स्पष्टमन्यत् ॥ २८७ ॥

**एवं विनायकं पूज्य ग्रहांश्चैवं विधानतः ।**
**कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् ॥ २८८ ॥**

अशुभक्षपणार्थत्वादस्य कर्मणः क्षीणाशुभस्य कर्मफलावाप्तिरनवद्या । यस्तु पुण्यकृदिवोपलभ्यते, सोऽप्येतत् कृत्वा श्रियमनुत्तमां प्राप्नोति । अतस्तेनापि कर्तव्यमेव, "आमृत्योः श्रियमाकाङ्क्षेदि"ति वचनात् । ग्रहपूजाविधानं च वक्ष्यमाणं द्रष्टव्यम् ॥ २८८ ॥

यस्त्वेवमपि कर्मफल न प्राप्नुयात्, तस्यायमपरोऽप्युपाय—

**आदित्यस्य सदा पूजां तिलकस्वामिनस्तथा ।**
**महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात् ॥ २८९ ॥**

अविशेषेण चेयं स्मृतिः । सर्वपुंसां सिद्ध्यर्थं पूजाविधिरवसेयः, सदाशब्दसामर्थ्यात् । स्पष्टमन्यत् ॥ २८९ ॥

इति विनायकादिकल्पप्रकरणम् ।

अथ ग्रहशान्तिप्रकरणम् ।

ग्रहाणां कर्माविघ्नसिद्ध्यर्थं पूज्यत्वं विधानत उक्तम् । तद्विधानमधुना विवक्षु स्वातन्त्र्येणापि प्रयोगसिद्ध्यर्थं कामसंयोगेनाधिकारान्तरमाह—

**श्रीकामः शान्तिकामो वा ग्रहयज्ञं समारभेत् ।**
**वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन् पुनः ॥ २९० ॥**

पुनःशब्दादविघ्नार्थं कृत्वा पुनः कामार्थं करणम् ॥ २९० ॥

के पुनरमी ग्रहा नाम —

**सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।**
**शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥ २९१ ॥**

किमेते गगनस्थाः पूज्यन्ते । नेत्युच्यते —

**ताम्रिकात् स्फटिकाद् रक्तचन्दनात् स्वर्णकादुभौ ।**
**रजतादयसः सीसाद् ग्रहाः कार्याः क्रमादिमे ॥ २९२ ॥**

उभौ बुधबृहस्पती सौवर्णकौ कार्यौ । केतुस्तु सन्निधानात् सीसकादेव । इम इति वचनात् पुरुषविग्रहेणेति गम्यते । अर्थवादोत्थादेतिहासाद् विग्रहावगतिः ॥ २९२ ॥

शक्त्यपेक्षया तु ताम्राद्यभाव —

**स्ववर्णैर्वा पटे लेख्या गन्धमण्डलकेषु वा ।**

सर्वकल्पेष्वेव —

**यथावर्णं प्रदेयानि वासांसि कुसुमानि च ॥ २९३ ॥**
**गन्धाश्च वलयश्चैव धूपो देयः सगुग्गुलुः ।**

यथावर्णं ताम्रादिप्रतिकृतिवर्ण एवैषा वर्ण इत्यवसेयम् ॥

सर्वेषां[3] चादित्यादीनां ग्रहाणां —

**कर्तव्यास्तन्त्रवन्तश्च चरवः प्रतिदैवतम् ॥ २९४ ॥**

---

१ 'स्था एव पू', २ 'वादात्येति' ख. पाठ ३ 'षामादि' क पाठ.

तन्त्रवन्तः एकतन्त्रा इत्यर्थः । चशब्दात् प्रत्येकं पूजाविधिरवसेयः ॥ २९४ ॥

अमी तु सर्वार्था प्रधानमन्त्रा —

आकृष्णेन इमंदेवा अग्निर्मूर्धा दिवः ककुत् ।
उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्तिताः ॥ २९५ ॥

बृहस्पते अतियदर्यस्तथैवान्नात्परिस्रुतः ।
शन्नो देवीस्तथा काण्डात् केतुं कृण्वन्निमा अपि ॥ २९६ ॥

पाक्यज्ञसामान्येन च प्रवृक्षमात्रात् समित्प्रसक्तावपवादमाह —

अर्कः पलाशखदिरावपामार्गोऽथ पिप्पलः ।
उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ २९७ ॥

इदानीं सङ्ख्याविशेषार्थमाह —

एकैकस्यात्राष्टशतमष्टाविंशतिरेव वा ।
होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः ॥ २९८ ॥

यद्वा, अयमपूर्वः समिद्धोमोऽङ्गत्वेन विधीयते । ततश्च प्राशनान्ते पूर्वमन्त्रैरेव कर्तव्यः । वैकल्पिकश्चायं चरुभिः सह समिद्धोमविधिरिति सम्प्रदायः ॥ २९८ ॥

पक्षद्वयेऽपि तु —

गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ।
दध्योदनं हविः पूपान् मांसं चित्रान्नमेव च ॥ २९९ ॥

दद्याद् ग्रहक्रमादेतद् द्विजेभ्यो भोजनं बुधः ।
शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ॥ ३०० ॥

स्पष्टार्थौ श्लोकौ ॥ ३०० ॥

---

१ 'द् भेदनापि च प्र' घ. ट.. पाठ. २ 'कर्तव्य' ट पाठ.

एवं ब्राह्मणान् भोजयित्वा तेभ्य एव —

**धेनुं शङ्खमनड्वाहं काञ्चनं वसनं हयम् ।**
**कृष्णां गामायसं छागं प्रदद्याद् दक्षिणाः क्रमात् ॥ ३०१॥**

शक्त्यपेक्षं चैषां परिमाणम् ॥ ३०१ ॥

एवं तावत् समस्तग्रहपूजा विघ्नोपशमनाय कामसंयोगेन चोक्ता । ज्योतिःशास्त्रानुसारेण स्वदेवेष्वपि —

**यश्च यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् ।**

कस्मात् —

**ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥ ३०२ ॥**

पूजा च प्रत्येकमप्युक्तविधिलक्षणैव ॥ ३०२ ॥

भूयश्च ग्रहाणां प्रत्येकं सहितानां च पूज्यत्वे हेतुमाह —

**ग्रहाधीना नरेन्द्राणामुच्छ्रयाः पतनानि च ।**
**भावाभावौ च जगतस्तस्मात् पूज्यतमा ग्रहाः ॥ ३०३ ॥**

स्पष्टार्थः श्लोकः ॥ ३०३ ॥

इति ग्रहशान्तिप्रकरणम् ।

---

## अथ राजधर्मप्रकरणम् ।

कः पुनरयं नरेन्द्रो नाम, यस्य ग्रहाधीनौ पातोच्छ्रायौ । ननु च प्रसिद्धो राजनि नरेन्द्रशब्दः । किं क्षत्रिये । बाढम् । तथाचोक्तं —

प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ।"

इति । उक्तंच स्वयंभुवा —

'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥ '

इति । अयं तु विशेषः । अभिषेकादिगुणयुक्तस्यैव राज्याधिकारो न क्षत्रियमात्रस्य, "मूर्धाभिषिक्तो राजेति समाख्यानं च" 'स मूर्धन्यभिषिक्तो राजा भवति' इत्याम्नायात् न चैव सति ग्रहाधीनत्वात् पातोच्छ्रायवर्दिवतैर एव राजा स्यात् । किं तर्हि —

**महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेविता ।**
**विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक्छुचिः ॥ ३०४ ॥**

---

१ 'कोऽपि', २ भिषिक्तस्यैव राज्यप्रभि' इ पाठ

**अदीर्घसूत्रः स्मृतिमानक्षुद्रपरिषत् तथा ।**
**धार्मिको दृढभक्तिश्च प्राज्ञः शूरो रहस्यवित् ॥ ३०५ ॥**
**स्वरन्ध्रगोप्तान्वीक्षिक्यां दण्डनीत्यां तथैव च ।**
**विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥ ३०६ ॥**

स्यादिति शेषः । महोत्साहो विजिगीषुः । स्थूललक्षः प्रभूतदाता । कृतज्ञ उपकारज्ञः, न स्वार्थैकनिष्ठः । वृद्धसेविता ज्ञानवयोवृद्धसेवी । विनीतोऽनुद्धतः, विविक्तनयतया वा येनकेनचिदनेयः । सत्त्वसम्पन्नः सर्वथाविषादी । कुलीनो महाकुलप्रसूतः । नन्वेतदशक्यं, दैवाधीनत्वात् । सत्यम् । कुलीननृपत्यनुकारी स्यादित्यस्यार्थः । सत्यवाक् सत्यसन्धः । शुचिः सर्वोपधाशुद्धः । अदीर्घसूत्रः सर्वथा क्षिप्रकारी । स्मृतिमानालोचनकोऽविस्मरणशीलश्च । अक्षुद्रपरिषत्को हंसपरिवारः । तथाच शङ्खः— "न हंसो गृध्रपरिवारः काम तु गृध्रो हंसपरिवारः स्याद्" इति । तथाशब्दात् प्रकृत्यन्तरग्रहणम् । धार्मिको यथाविहितधर्मानुष्ठाता । दृढभक्तिः भक्तिग्राह्यः, यत्र वा समाश्रितः तत्राविचलितभक्तिः, देवब्राह्मणगुर्वादौ च । प्राज्ञः सर्वत्र सारासारविवेकज्ञः । शूरः प्रसह्य सकलारातिमण्डलविक्षोभिता तदभिभूतश्चाविषण्णः[१] । रहस्यविद् मित्रार्युदासीनविजिगीषुमध्यमाखिलगुप्तिप्रयुक्तिप्रचारज्ञः, अमात्यादिप्रकृतिपरीक्षाप्रकारज्ञश्च, निगूढाव्यभिचारिचारचक्षुः । अध्यात्मं रहस्यं तज्ज्ञः, प्रसंख्यानवानित्यर्थः । स्वरन्ध्रगोप्ता अखिलनिजव्यसनगोपनः परच्छिद्रोद्भावकश्च । आन्वीक्षिक्यां दण्डनीत्यां विविधवार्तायां त्रय्यां च विनीतः । आन्वीक्षिकी समस्तासान्दृष्टिकानिरूपणक्षमा हेतुविद्या । निजान्यप्रतापोन्नतिहानिहेतुर्निजदण्डोद्योगात्मिका यथार्हं दण्डनीतिः, दण्ड्येषु वा यथार्हं दण्डपातनेन योज्या । अन्ये तु तर्कविशेषं दण्डनीतिमाहुः । त्रयी ऋग्यजुःसामलक्षणा । एवं महोत्साहादिगुणयुक्तः स्याद्, न दैवनिक्षिप्तभरः, पुण्याभिमानात् । महोत्साहादिगुणवानन्यो नारिरपि कष्टत्वाचिन्त्यः, विपरीतश्चारभ्य इति नयसंक्षेपः । तथा— नराजनीजो लुब्धः क्षुद्रपरिषत्को विरक्तप्रकृतिरन्या-

१ 'द्रष्टव्य' इ पाठ. २ 'नयार्थ' ३ 'नीतिम्' ग पाठ

यवृत्तिरयुक्तो व्यसनी निरुत्साहो यत्किञ्चनकार्यगतिरननुबन्धो नित्यापकारी चेत्यादि। सर्वथा च तथाच कुर्याद् यथाखिलकृत्यवर्गो महोत्साहादिगुणसम्पद्विपरीत्यादारभ्यः स्यात्, स्वयं च यथाखिलमहीमण्डलस्वीकरणक्षमो विजिगीषुरनन्यारम्यो याता परमण्डलोच्छित्तिसमर्थः स्यादिति। अन्वयव्यतिरेकमूलत्वाच्च स्मृतेरनुक्तमुक्तं वाखिलं विविच्य यथार्हं व्याख्येयम्। यतश्च नराधिप एवंगुणः स्यात् ततश्च प्रतिष्ठितराज्यस्यापि गुणार्जनमविरुद्धम्॥ ३०४—३०६॥

एवंगुणोऽपि किममात्यैनेति नैवमभिमानी स्यात्, किं तर्हि? एवंगुण एव च —

**स मन्त्रिणः प्रकुर्वीत प्राज्ञान् मौलान् स्थिराञ्छुचीन्।**
**तैः सार्धं चिन्तयेत् कार्यं विप्रेणाथ ततः स्वयम्॥ ३०७॥**

तथाच मनुः —

"अपि यत् सुकरं कर्म तदप्येकेन दुष्करम्।
विशेषतोऽसहायेन किमु राज्यं महोदयम्॥"

इति। मन्त्रिवचनं च सर्वसचिवोपलक्षणार्थम्। तथाचाह —

"निर्वर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः।
तावतोऽतन्द्रितान् दक्षान् प्रकुर्वीत विचक्षणान्॥"

इति। प्रधानमन्त्र्यर्थं चैतद् वचनम्। कार्यतस्त्वन्यकरणाविरोधः। दृष्टार्थत्वाच्चान्यमन्त्र्यभाव एव करणम्। यस्तु पैतृकादिकमन्यदीयं वा राज्यमवाप्नुयात्, स यदि तद्राज्ययोग्यं पूर्वामात्यानामात्मविशिष्टमधिकं वान्यं मन्येत ततः प्रकृत्यकोपक्रमेण सर्वानेवैवंगुणानन्यान् मन्त्रिणः कुर्यात्। प्रशब्दश्चोक्तन्यायेन प्रकर्षालोचनार्थः। ते च प्राज्ञा विवेकिनो मौलाश्च। मूलं राज्यं तदर्हा मौला, राज्यविस्तारक्षमा इत्यर्थः। मूलतो वा ज्ञाता महाकुलीनाः। मूलक्रमागता वा ते ह्यधिकारात् प्रच्याविता अपि सत्येव सामर्थ्येऽनुरागातिरेकात् कुलाङ्कुशोपग्रहाद् वा विरोधानारम्भकाः। स्थिराः सर्वोपत्सहिष्णवोऽनन्यगामिनः साध्वारम्भकाश्च। शुचयो धर्मार्थकामभयोपधाशुद्धाः। प्रदर्शनार्थं चैतत्। सर्वथा लोकतः शास्त्रतश्चालोच्य यथार्हं

१ 'ग', २ 'तथान् स' इ पाठ ३ द्वा' ग पाठ ४ य' घ ङ पाठ,

स्वाधिकारानुसारेण सचिवसन्निवेशः कार्यः। यथाह बृहस्पतिः—"स्वधर्मविदनुरक्तः शुचिरनुद्धत उद्युक्तो देशकालविन्नीतिनिगमेतिहासकुशलोऽव्यसनी मृदुरर्थशास्त्रकृतयोग्यो हस्त्यश्वपुरुषाचारोहोरात्रयामानिर्गमविनिश्चितमतिश्च स्वपरबलचलाबलज्ञो बलाधिकृतः सेनापतिः स्यात्। कुलाढ्य उद्युक्तो मृदुरुदात्तः समरचित्तः शूरोऽनुरक्तोऽभेद्यः पत्तिविशेषज्ञ इङ्गिताकारकुशलः प्रतिहारः स्यात्। वनकुलकालजातिसात्म्यगुणवयःशीलायुरादानगमनकल्पनावान् व्यपगतभयो विजयोर्जितमना हस्त्यध्यक्षः स्यात्। क्षेत्रजातिसात्म्यगुणलक्षणवाहनास्त्रज्ञोऽत्यर्थसमर्थः शुचिरनुद्धतोऽनुरूपोऽश्वाध्यक्षः स्यात्। सन्धिभेदसन्धानस्थानज्ञोऽनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालज्ञो दर्शनीयो नीतिगतिज्ञः प्राज्ञो वाग्मी दूतः स्यात्। उभयत उत्तमवंशप्रभवः शुद्धो मनुबृहस्पत्युशन शास्त्रविद् दण्डनीत्यादिकुशलोऽशठोऽजिह्मः सम्मानासम्मानाविकृतो विगतभीः कार्याकार्यविनिश्चितमतिरहार्यः सर्वोपधाशुद्धो गूढमन्त्रो मन्त्री स्यात्। अविकार्योऽविकलेन्द्रियः प्रतापवान् सुभग सुमुखोऽकृपणोऽप्रमादी दक्षो दाक्षिण्यचारित्ररक्षणार्थमधिकरणसन्दिग्धविवेककृदुपरिक स्याद्" इति। एवञ्च भाण्डागारान्तःपुरमहानसशय्यागृहाद्यधिकृता यथार्हं विविच्य व्याकरणीयाः। एवं बृहस्पत्युशनःशास्त्रमतेन सर्वसचिवान् यथार्थं राजा कृत्वा तैः सार्धं यथार्हं सामान्य च मन्त्रयित्वा व्यस्तसमस्ताभिप्रायं च विविच्य पश्चात् परमरहस्यगामिना महामन्त्रिमपद्युक्तेन विदुषा ब्राह्मणेन सह षाड्गुण्ययुक्तं महोदयं चित्रफलं नयबीजं मन्त्रयेत्। ततस्तद्विश्वासात् स्वय च तदेव निपुणतोऽपररात्रोत्थितः सम्यग्विविच्यादीर्घसूत्र्येव क्षिप्रमनुतिष्ठेत्। एवमखिलोन्नतिबीजं समासतोऽभिहित विविच्य विस्तरेण व्याख्येयम्। इत्यलं प्रसङ्गेन॥ ३०७॥

पूर्वोक्तन्यायेनैव—

> पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम्।
> दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा॥ ३०८॥

१. 'रदारादो' ख पाठः २. 'रथला' ग. घ पाठः ३. 'ज्ञोऽपि' ङ. पाठः ४. 'रा स्या' ख पाठः ५. 'शूरोऽभ्य' ङ. पाठः ६. 'नृ। आर' ग पाठः ७. 'रारादि', ८. 'र्थं', ९. 'निपमाद्यश्च' ङ. पाठः

तथाशब्दात् पूर्वगुणयोगश्च । दैवज्ञो ज्योतिःशास्त्रवित् । प्राक्तनकर्मफलसंबन्धज्ञो वा । इदमस्मात् कर्मणोऽथफलमुपभुज्यते पश्चात् तु प्रतिसमाधिरित्युदितोदितः । दण्डनीत्यां च प्रवीणः । चशब्दात् त्रय्यामान्वीक्षिक्यां विविधवार्तायां च । एतच्च मन्त्रिणामपि समानम् । अयं त्वस्य विशेषः — अथर्वाङ्गिरसे शान्तिकपौष्टिकाभिचारार्थं प्रवीणः स्यात् । एतेनापि सह यथार्थं मन्त्रणीयम् । सर्वामात्याश्चानेनैव धर्मोपधाशुद्धत्वेन परीक्ष्याः । एवमन्यैरपि यथास्थानमुपधाविशेषैः सर्वामात्यपरीक्षा कर्तव्येति नीतिसङ्क्षेपः ॥ ३०९ ॥

अयं च राज्ञोऽभ्यधिको वैशेषिको धर्मः —

**श्रौतस्मार्तक्रियाहेतोर्वृणुयादृत्विजस्तथा ।**
**यज्ञांश्चैव प्रकुर्वीत विधिवद् भूरिदक्षिणान् ॥ ३१० ॥**

तथाशब्दात् पुरोहितोऽपि श्रौतस्मार्तक्रियाहेतोरेव । ऋत्विग्वरणं चैतत् कर्मप्रयोगाद् बहिरादित एव द्रष्टव्यम् । यज्ञांश्च विधिवत् कुर्यात्, न तु यथाकथञ्चनेत्यर्थः । भूरिदक्षिणा बहुसुवर्णकादयः । प्रसर्पकदानापेक्षया वा भूरिदक्षिणत्वं योज्यम् ॥ ३१० ॥

यज्ञव्यतिरेकेणापि —

**भोगांश्च दद्याद् विप्रेभ्यो वसूनि विविधानि च ।**

कस्मात् । यस्मात् —

**अक्षयोऽयं निधी राज्ञां यद् विप्रेषूपपादितम् ॥ ३११ ॥**

भोगा अन्नपानादयः । चशब्दोऽभयसत्कारार्थः । वसूनि हिरण्यादीन्यनेकविधानि । चशब्दः संप्रदानगतवैचित्र्यार्थः । तथाच मनुः — "सममब्राह्मणे दानमि"त्यादि । स्पष्टमन्यत् ॥ ३११ ॥

भूयश्च दानविधिप्ररोचनायाह —

**अस्कन्नमव्यथं चैव प्रायश्चित्तैरदूषितम् ।**

यस्मात्, तस्मात् —

**अग्नेः सकाशाद् विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ॥ ३१२ ॥**

---

१. 'तिप्रवेशसङ्क्षेप', २. 'र्णा ।' ख पाठ.

किं पूर्वार्जितमापदर्थं स्थितं भाण्डागारादेव दातव्यम् । नेत्युच्यते —

**धर्मेण लब्धुमीहेत लब्धं यत्नेन पालयेत् ।**
**पालितं वर्धयेन्नित्यं वृद्धं पात्रेषु निक्षिपेत् ॥ ३१३ ॥**

स्पष्टार्थः श्लोकः ॥ ३१३ ॥

एवं तावद्धिरण्यादिषु प्रदानान्ततैव । भूमिनिबन्धदानयोस्त्वयं विशेषः —

**दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।**

कस्मात् —

**आगामिक्षुद्रनृपतिपरिज्ञानाय पार्थिवः ॥ ३१४ ॥**

निबन्धोऽक्षयनिधिः । स्पष्टमन्यत् ॥ ३१४ ॥

किं पुनर्वक्ष्यमाणलेख्यलक्षणवत् कार्यम् । नेत्युच्यते । किं तर्हि —

**पटे वा ताम्रपट्टे वा स्वमुद्रापरिचिह्नितम् ।**
**अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥ ३१५ ॥**
**प्रतिग्रहपरीमाणं दानाच्छेदोपवर्णनम् ।**
**स्वहस्तकालसंपन्नं शासनं कारयेत् स्थिरम् ॥ ३१६ ॥**

पटवचनं भूर्जनिवृत्त्यर्थम् । परिशब्दात् प्रज्ञाद्दूतकस्वहस्तमुद्रास्कन्धावारसमावासनामदेशादिचिह्नितम् । आदावेवाभिलेखनीयाः पूर्वपुरुषास्त्रयः । वंश्यत्ववचनाच्च स्त्रियोऽपि । अनन्तरमात्मानम् । ततः प्रतिग्रहपरीमाणम् । अस्मिन् देशेऽमुकनामेयान् ग्राम इत्यादि । ततो दानाच्छेदमुपवर्ण्य । एतद् दानफलम्, एतदाच्छेदनफलं

"षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥"

इत्यादि । लेखकनामाङ्कितं स्वहस्तसयुक्तमागामिक्षुद्रनृपत्यशोचनं स्थिरं भूमेश्छिद्रन्यासेनाचन्द्रात् स्थितिसंस्थानं कारयेत् । सर्वथा यथागामिनोऽप्यस्मादेव शासनान्न विकुर्युः, तथा कार्यमिति ॥ ३१५, ३१६ ॥

ननु च राष्ट्रसकोशप्रसङ्गाद् भूमिदानमयुक्तम् । राजवृत्तान्तानभिज्ञ ! मैवम् । नित्यमेव हि त्रिवर्गवृद्धिचतुरो राजा —

**रम्यं पशव्यं स्वाजीव्यं जाङ्गलं देशमाश्रयेत् ।**
**तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ॥ ३१७ ॥**

दुर्गाणीति बहुवचनं दुर्गभेदप्रकारार्थम् । यथाह मनु —

"धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव च ।
नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेत् पुरम् ॥
सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ।
एतेषां बाहुगुण्येन गिरिदुर्गं प्रशस्यते ॥"

इत्यादि ॥ ३१७ ॥

एव दुर्गाणि कृत्वा त देशमध्यास्य तत —

**तत्र तत्र च निष्णातानध्यक्षान् कुशलाञ्छुचीन् ।**
**प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान् ॥ ३१८ ॥**

नात्र तिरोहितमिवास्ति ॥ ३१८ ॥

एव तावत् स्वराष्ट्र एवार्जननियम उक्तः । इदानीं परस्वानपहरणप्रसक्तावपवादमाह —

**नातः परतरो धर्मो नृपाणां यद् रणार्जितम् ।**
**विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ॥ ३१९ ॥**

रणार्जितादित्यभिप्रायः ॥ ३१९ ॥

इदानीं 'न वधाय प्रवर्तेत' 'न हिंस्यात् सर्वभूतानी'ति प्रतिषेधद्वय त् मम्रा मा प्रा प्ति-प्रसक्तावाह —

**य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः ।**
**अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ ३२० ॥**

आहवः संग्राम । भूम्यर्थवचनं दण्डकोशादेरप्युपलक्षणार्थम् । अकूटैरायुधैर्युध्यमाना इति योज्यम् । कूटानि विषदिग्धकर्णिकादीनि । आयुधवचनं सर्वायुधोपलक्षणार्थम् । स्पष्टमन्यत् ॥ ३२० ॥

सर्वाधिकारव्यापृतैराहृतमात्र भाण्डागार एव न्यसेत्, न दद्यात्। तत एव हेतो'र्वृद्ध पात्रेषु निक्षिपेदि'र्ति। नित्य च भुक्त्वा व्यपेतक्रमो विश्वस्तचित्त पश्येच्चारान् अवस्थितानेकविधचारप्रहितान् प्रहेतव्याश्च। अय हि नीतिसक्षेपः—नित्य ह्यनेकविधा सर्वाश्रमसर्वपापण्डिनो लिङ्गि नोऽनेकविद्याव्याजकपटैः परराष्ट्रस्वराष्ट्रविन्यस्तास्तत्प्रहितान्धमूकजलबधि रोन्मत्तादिप्रकारकपटप्रच्छन्ना प्रख्यापितकुतूहलप्रधानतया सर्वसत्त्वानुजि-घृक्षापरत्वप्रसिद्ध्या वा राज्ञा प्रयत्नतो गूढसङ्केतनिपुणेनान्वहमप्रमत्तेन द्रष्टव्या। यद्वा, एक कश्चिद् वामनकुब्जादिकमात्मनोऽतिशयवाल्लभ्यप्र ख्यात सुपरीक्षितमाप्त चारव्यापारे नियोजयेत्। स चाखिला राज्ञो नित्य युक्तचारप्रहिता मुहुर्मुहुर्वार्ता सपादयेत्। एव चारान् दृष्ट्वा तदर्थनिश्चया नुसारेण सर्वार्थेषु यथार्थ दूतान् प्रेषयेत् प्रधानामात्यसगत। षाड्गु-ण्यनयानुसारिणा त्वेतच्चिन्तसञ्चारमाभ्युदयिकबीजमप्रमत्तेनान्वह वप्त व्यम्॥ ३२४॥

यतश्च गूढम त्रत्वमाभ्युदयिकबीज—

**ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः।**
**बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत्॥ ३२५॥**

स्वैरविहारिता प्रधानमन्त्रिण्यप्यप्रकटितमन्त्रता। यद्वा मन्त्रिभिरूप न्नविश्वासे सहैवैतच्चारादिदर्शन कुर्यादिति। अगूढमन्त्रताप्यनभ्युदयायैवे त्यभिप्राय। नैयाविरोधेन चैतयोर्व्यवस्था। भूयो भूयः सर्वसचिवा सुप-रीक्षिता अपि परीक्ष्या। परीक्षितैश्च सह यथार्ह कार्यप्रवृत्तिरिति। किञ्च, बलाना हस्त्यश्वरथपादातायुधसन्नाहादिसारेतरविवेकेन निपुणतो महाब लाधिकृतसेनापतिसमक्ष दर्शन कृत्वा ततः षाड्गुण्य निपुणत पूर्वोक्तक्र मेणैव चिन्तयेत्। दण्डकोशाद्यनुसारेणैव सन्धिविग्रहादिनियम इत्यभि प्रायः॥ ३२५॥

न चैकान्ततोऽभिनिष्ठतयवतरपुरुषाभद्यापनम्। किं तर्हि—

**सन्ध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम्।**
**गीतनृत्तैश्च भुञ्जीत पठेत् स्वाध्यायमेव च॥ ३२६॥**

---

१ न्या' ड पाठ

भूयश्च संग्रामविधिप्ररोचना युद्धाकृतिप्रकारं चाह —

**पदानि क्रतुतुल्यानि भग्नेषु* विनिवर्तताम् ।**
**राजा सुकृतमादत्ते हतानां विपलायताम् ॥ ३२१ ॥**

युद्धार्थमेव हि तत्संग्रहाद् युक्तमेवैतत् ॥ ३२१ ॥

एव च[2] सति सर्वथा सङ्ग्रामे हिंसायां प्राप्तायामपवादार्थ[3]माह —

**तवाहंवादिनं क्लीबं निर्हेतिं परसंगतम् ।**
**न हन्याद् विनिवृत्तं च युद्धप्रेक्षकमेव च ॥ ३२२ ॥**

चशब्द आयुधादिव्यसनापन्नाद्यर्थः । निर्हेतिरयुध्यमानः । परसंगतोऽन्येन युध्यमानः । स्पष्टमन्यत् ॥ ३२२ ॥

एव तावत् सामासिको राजनय । इदानीमान्वहिकं राज्ञः कर्म —

**कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ।**
**व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ॥ ३२३ ॥**

रक्षा दिव्या मानुषी च द्विविधा । देवब्राह्मणपूजादिलक्षणा मन्त्रात्मिका च दिव्या, सुपरीक्षितोद्यतायुधयुद्धपुरुषैः परिवेष्टन मानुषी । तथाच बृहस्पतिः —"ब्रह्मशङ्खस्तुतिपुण्याहशब्दैर्विबुध्योत्थाय सन्ध्यामुपास्य देवपितृब्राह्मणान् मनसा वा नमस्कृत्य धर्मार्थकामभयोपधाशुद्धावश्यकगृहीतायुधायातयामविश्वासोत्पन्नासन्नपरिवृत" इत्यादि । गुरुतरात्ययिककार्यानुरोधेन स्वयमेवायव्ययं पश्येद् व्यवहारांश्च वक्ष्यमाणविधिना । ततः स्नात्वा देवपित्राद्यर्चनं कृत्वान्तःपुरं प्रविश्य कामतः सुपरीक्षितमन्नमश्नीयात् ॥ ३२३ ॥

एव स्वपरराष्ट्रव्यवस्थया द्रव्यार्जनविधिरुक्त । तत् पुनर्द्रव्यं किमुत्तममेव पात्रे सम पणीयं तदर्थत्वादुपादनस्य । एवमिति प्राप्त आह —

**हिरण्यं व्यापृतानीतं भाण्डागारे न्यसेत् ततः ।**
**पश्येच्चारांस्ततो दूतान् प्रेषयेन्मन्त्रिसंगतः ॥ ३२४ ॥**

---

१. राचाह', २ 'च सर' घ. पाठ. ३ त्वा' प. ह. पाठ.

---

* भग्नेषु विनिवर्ततां भग्नेष्वपि स्वपक्षेषु आनिवर्तमानानां पराभिमुखं गच्छतामित्यर्थः । विपलायतां निर्विषण्णचेतसां । परस्मैपदं चार्षम् ॥

सर्वाधिकारव्यापृतैराहृतमात्रं भाण्डागार एव न्यसेत्, न दद्यात् तत एव हेतो'र्वृद्धं पात्रेषु निक्षिपेदि'ति । नित्यं च भुक्त्वा व्यपेतक्लमो विश्वस्तचित्तः पश्येच्चारान् अवस्थितानेकविधचारप्रहितान् प्रहेतव्यांश्च । अयं हि नीतिसंक्षेपः—नित्यं ह्यनेकविधाः सर्वाश्रमसर्वपापण्डिनो लिङ्गिनोऽनेकविद्याव्याजकपटैः परराष्ट्रस्वराष्ट्रविन्यस्तास्तत्प्रहितान्धमूकजलबधिरोन्मत्तादिप्रकारकपटप्रच्छन्नाः प्रख्यापितकुतूहलप्रधानतया सर्वसत्त्वानुजिघृक्षापरत्वप्रसिद्ध्या वा राज्ञा प्रयत्नतो गूढसङ्केतनिपुणेनान्वहमप्रमत्तेन द्रष्टव्याः । यद्वा, एकं कश्चिद् वामनकुब्जादिकमात्मनोऽतिशयवाल्लभ्यप्रख्यातं सुपरीक्षितमाप्तं चारव्यापारे नियोजयेत् । स चाखिलां राज्ञो नित्ययुक्तचारप्रहितां मुहुर्मुहुर्वार्तां संपादयेत् । एवं चारान् दृष्ट्वा तदर्थनिश्चयानुसारेण सर्वार्थेषु यथार्थं दूतान् प्रेषयेत् प्रधानामात्यसंगतः । षाड्गुण्यनयानुसारिणा त्वेतच्चित्रसञ्चारमाभ्युदयिकबीजमप्रमत्तेनान्वहं वप्तव्यम् ॥ ३२४ ॥

यतश्च गूढमन्त्रत्वमाभ्युदयिकबीज —

**ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः ।**
**बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥ ३२५॥**

स्वैरविहारिता प्रधानमन्त्रिण्यप्यप्रकटितमन्त्रता । यद्वा मन्त्रिभिरुपपन्नविश्वासैः सहैवैतच्चारादिदर्शनं कुर्यादिति । अगूढमन्त्रताप्यनभ्युदयायैवेत्यभिप्रायः । नयाविरोधेन चैतयोर्व्यवस्था । भूयो भूयः सर्वसचिवाः सुपरीक्षिता अपि परीक्ष्याः । परीक्षितैश्च सह यथार्हं कार्यप्रवृत्तिरिति । किञ्च, बलानां हस्त्यश्वरथपादातायुधसन्नाहादिसारेतरविवेकेन निपुणतो महाबलाधिकृतसेनापतिसमक्षं दर्शनं कृत्वा ततः षाड्गुण्यं निपुणतः पूर्वोक्तक्रमेणैव चिन्तयेत् । दण्डकोशाद्यनुसारेणैव सन्धिविग्रहादिनियम इत्यभिप्रायः ॥ ३२५ ॥

न चैकान्ततोऽर्थनिष्ठत्वैवेतरपुरुषार्थह्रापनम् । किं तर्हि—

**सन्ध्यामुपास्य श्रृणुयाच्चाराणां गूढभाषितम् ।**
**गीतनृत्तैश्च भुञ्जीत पठेत् स्वाध्यायमेव च ॥ ३२६ ॥**

१. 'न्या' ड. पाठ..

गीतनृत्तैश्च भुञ्जीत, काममप्यनुरुन्ध्यात् । पठेच्च स्वाध्यायम् । धर्मान् न हापयेदित्यर्थः । यद्वा, एतत्परमेतच्छ्लोकार्धं—महत्यामप्यापद्विपादिनमात्मानं दर्शयितुं स्थितकृत्यचिन्ताप्रवण एव स्वव्यसनगोपनाय परप्रस्वापनाय वानाकुलतयैव—गीतनृत्तैश्च भुञ्जीत पठेत् स्वाध्यायमेव च । चशब्दान्मृगयामप्यनुतिष्ठेत् ॥ ३२६ ॥

किञ्च—

**संविशेत् तूर्यघोषेण सुप्त्वा बुध्येत् तथैव च ।**
**शास्त्राणि चिन्तयेद् बुद्ध्वा सर्वकर्तव्यतास्तथा ॥३२७॥**

अपस्वप्नायतो मन्त्रश्रुतिर्मा भूदिति यावत्स्वापं यथास्थानं तौर्यत्रिको नृत्तगीतवादित्रलक्षणः प्रयोज्यः । चशब्दो वन्द्यादिघोषणार्थः । कामोऽपि चैवमुत्पन्नः संवृतो भवति, अर्थश्च । सुप्त्वा विबुध्य व्यपेतक्लमो निपुणया प्रज्ञया त्रिवर्गचातुर्येण सर्वार्थं विनिश्चिनुयात् ॥ ३२७ ॥

एवं च निपुणतश्चिन्तोदयां नीतिं नियम्य—

**प्रेषयेत ततश्चारान् स्वेष्वन्येषु च सादरम् ।**
**ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ॥ ३२८ ॥**

पश्चिमयाम एव चारान् प्रेषयेत्, स्वेषु स्थितचारमण्डलेषु । ये[1] पराराष्ट्रसचिवा नीतिचातुर्याद् भेदिताः, तेषु च सबहुमानं चारान् प्रेषयेत् । चशब्दादाटविकस्वमण्डलगतेषु च । एवं च विशालाक्षः—

"वन्यान् वनगतैर्नित्यं मण्डलस्थांस्तथाविधैः ।
चारैरालोच्य सात्कुर्याज्जिगीषुर्दीर्घदूरदृक् " ॥ ३२८ ॥

एवं चारान् प्रेष्यासीन् ऋत्विगाद्याशीर्भिरभिनन्दितः सभां प्रविश्य ततः—

**दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद् गां कनकं महीम् ।**
**नैवेशिकानि च तथा श्रोत्रियाणां गृहाणि च ॥ ३२९ ॥**

---

१. 'कथन म' ट, पाठः.

ज्योतिर्विदो वैद्यांश्च दृष्ट्वात्मीयशरीरसंस्थां ग्रहगोचरं चालोच्य निमित्तविशेष च बुद्ध्वा तदनुसारेणैव श्रोत्रियेभ्यो यथार्हं गां कनकमित्यादि दद्यात् । गतार्थमन्यत् ॥ ३२९ ॥

अयं चान्यो राज्यप्राप्तिस्थितिकर सारनयसक्षेप —

**ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिपु ।**
**स्याद् राजा भृत्यवर्गेषु प्रजाभ्यश्च यथा पिता ॥३३०॥**

स्निग्धो निरभिसन्धिस्नेहैकनिबन्धनतया मित्रम् । अजिह्मोऽकुटिलः । स्पष्टमन्यत् ॥ ३३० ॥

कस्मात् पुनरेतदेवम् । यस्मात् —

**पुण्यात् षड्भागमादत्ते न्यायेन परिपालयन् ।**

कस्मात् —

**सर्वदानाधिकं यस्मान्न्यायेन परिपालनम् ॥ ३३१ ॥**

केन पुन. प्रजा पीड्यन्ते, येनाय प्रयत्न । उच्यते —

**चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ।**
**पीड्यमानाः प्रजा रक्ष्याः कायस्थैश्च विशेषतः ॥ ३३२ ॥**

[1]कायस्था रागादयः । लेखका इत्यन्ये ॥ ३४२ ॥

यदि स्तेनमादिभ्यो राजा रक्षा न कुर्यात् तत —

**अरक्ष्यमाणाः कुर्वन्ति यत्किञ्चित् किल्बिषं प्रजाः ।**
**तस्मात्तु नृपतेरर्धं**

स्यादिति शेषः ॥

कस्मात् —

**यस्माद् गृह्णात्यसौ करान् ॥ ३३३ ॥**

---

1. 'कायनामि' इ. पाठ,

कथं पुनः पीडाः प्रजाभ्यो विजानीयाद् राजा । ननूक्तं तत्र तत्र च निष्णातानध्यक्षान् कुर्यादिति । एत एव यदा विकुर्युस्तदा कथमिति चेत् । उच्यते —

**ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।**
**साधून् संमानयेन्नित्यं विपरीतांस्तु घातयेत् ॥ ३३४ ॥**

यदा तु दुष्टजनाः सहाध्यक्षैरेकीभूय लुब्धाः साधुजनं खलीकुर्युः, ततस्तानपि—

**उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत् ।**

ये तु साधवस्तान्—

**सदानमानसत्कारैः श्रोत्रियान् वासयेत् सदा ॥ ३३५ ॥**

श्रोत्रियवचनं दृष्टान्तार्थम् । यद्वा दानादिभिरपि श्रोत्रियानेव वासयेद्[1], न करदानप्यविनीतानित्यर्थः ॥ ३३५ ॥

यतश्चैतदेवम्, अत. —

**अन्यायेन नृपो राष्ट्रात् स्वकोशं योऽभिवर्धयेत् ।**
**सोऽचिराद् विगतश्रीको नाशमेति सबान्धवः ॥ ३३६ ॥**

कस्मात् पुनरेतदेव, यस्मात् —

**प्रजापीडनसन्तापसमुद्भूतो हुताशनः ।**
**राज्ञः कुलं श्रियं प्राणान् नादग्ध्वा विनिवर्तते ॥ ३३७ ॥**

अल्पपराधादेकलोष्टवधेनाप्येनं हन्युरित्यभिप्रायः । दण्डकोशाद्युच्छित्तिस्तु तन्मूलत्वान्नियतैव ॥ ३३७ ॥

नन्वेव परराष्ट्रेऽपि पीडनादयमेव दोषः । धर्मतरानभिज्ञो मैवम् —

**य एव धर्मो नृपतेः स्वराष्ट्रपरिपालने ।**
**तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ ३३८ ॥**

इयं तावद् धर्मगतिः । दोषान्तरं त्वत्र नाशङ्कनीयमेवेत्यभिप्रायः ॥ ३३८ ॥

---

1. 'नपि' ख. पाठः.

किन्तु —

**यस्मिन् यस्मिन् य आचारो व्यवहारः कुले स्थितिः।**
**तथैव परिपाल्योऽसौ यदा वशमुपागतः॥ ३३९॥**

धर्माविरोधेनेति शेषः। आत्मीयत्वादेव पालने प्राप्ते गुणार्थं वचनम्॥ ३३९॥

कथ पुनः पररा्ट्रसिद्धिः। मन्त्रत इति ब्रूमः। तदधीना हि कोशदण्डादयः। अतश्च —

**मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम्।**
**कुर्याद् यथास्य न विदुः कर्मणामाफलोदयात्॥ ३४०॥**

स्वपरराष्ट्रप्राप्तिस्थितिवृद्धिहेतुर्मन्त्र एव सुनिर्णीतः सुगुप्तो यस्मात्, तस्मान्निर्णयगुप्तिभ्यां सुरक्षितः कार्यः, विपर्यये सर्वोच्छेदप्रसङ्गात्। न च फलोदयेऽपि मन्त्रः प्रकाश्यः, पुनरपि तथाकरणात्। फलदर्शनात्तु कारणमनुमिमाना न विशेषनिर्धारणं कुर्युः कुतूहलेनात्र समुत्पन्नेन। अतः कृत्येतरवर्गयोः सर्वथा मन्त्रप्रच्छादनं नियोगतः कर्तव्यम्। मन्त्रशक्त्यधीने एव ह्युत्साहप्रभुशक्ती, तदपायेऽपि हि मन्त्रशक्त्यैव सिद्धिदर्शनात् अतस्तद्गुप्तौ यत्नः कार्य इति॥ ३४०॥

किं पुनस्तन्मन्त्रणीयम्। उक्तं च दिक्प्रचारदूतसम्प्रेषणकापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनावस्थितचारप्रपञ्चपरिनिरूपणपरप्रयुक्तकापटिकागुच्छेददुर्गादिकरणकन्यासंप्रदानकुमारचिन्तान्तःपुरप्रचाराद्यनेकविधं च। इद चापरम् —

**अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः।**
**क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः॥ ३४१॥**

विजिगीषोरवस्थितस्य भूम्यनन्तरः शत्रुः। तस्मात् परो मित्रम्। तत्परस्तूदासीनः। एवमिदं मण्डलमवस्थितं सामोपप्रदानभेददण्डैर्यथार्हं चिन्त्यम्॥ ३४१॥

कस्मात् पुनर्यथार्हं सामादियोजना। यस्मात् —

**उपायाः साम दानं च भेदो दण्डस्तथैव च।**

---

१. 'नप्राप्तौ गु' ङ पाठः २. 'प्तिद्धे', ३. 'कार्यम्' ख पाठः,

उपायत्वादेव च—

**सम्यक् प्रयुक्ताः सिध्येयुर्दण्डस्त्वगतिका गतिः ॥ ३४२ ॥**

साम वाचिकं कायिकं च। दानं दीयमानस्याकोपेन ग्रहणं, स्वकीयस्य च दानम्। भेदः संहतयोरुपजप्यविश्लेषणम्। दण्डो हठात् प्रसाधनम्। तेऽमी व्यस्ताः समस्ताश्च यथार्हं योज्याः। आद्योपायत्रयक्षये दण्डः। तत्रारिस्त्रिविधः सहजः कृत्रिमो भूम्यनन्तरश्च। अनन्तरो दण्डसाध्य एव। तथा मित्रं सहजकृत्रिमानन्तरपरत्वेन। अनन्तरपरः सामोपप्रदानगोचरः। सामैवोदासीनेषु। अरिपक्ष्याः सर्वदा भेद्या एव। इत्येवमादिप्रकारो बहुधा प्रयोगानुसाराद् द्रव्यशुद्धिवद् 'देशं कालं तथात्मानमि'त्यवेक्ष्य सामादिप्रयुक्तिनियमः ॥ ३४२ ॥

याश्चैता राज्यप्रकृतयः स्वाम्याद्याः, तासु यथार्हमालोच्य सुरक्षितमन्त्रो विजिगीषुः—

**सन्धिं सविग्रहं यानमासनं संश्रयं तथा ।**
**द्वैधीभावं गुणानेतान् यथावत् परिकल्पयेत् ॥ ३४३ ॥**

हिरण्यादिपणनिबन्धेनोभयानुग्रहार्थः सन्धिः। स कदाचिद् द्वयोरपि तादात्विकफलः। कदाचिदेकस्य तदात्वेऽन्यस्यायत्याम्। तथाच मनुः—

"समानयानकर्मा वा विपरीतस्तथैव च।
तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः ॥"

इति। एवं विग्रहादिद्वैविध्यमप्युदाहार्यम्। सन्धिविपरीतो विग्रहः। अभ्युच्चयातिरेके रिपून् प्रति गमनं यानम्। अनारम्भकत्वमासनम्। सन्धिविग्रहद्वयवर्जोपादानं द्वैधीभावः। क्षीणस्यान्याश्रयणं संश्रयः। तदात्वे परिक्षीणस्य भाविन्यभ्युच्चये सन्धिकरणं; विपर्यये विग्रहः। मित्रोपरोधाच्चोभयम्। मित्रानुरोधाद् भाविबलापेक्षया च प्रक्षीणः शनकैः परान् सान्त्वयन् आसनेन वृद्धिमातिष्ठेत्। प्रक्षीण एव चावष्टम्भो द्विधा बलं व्युह्य द्वयमी

१. 'तदभ्यस्ता', २ 'चे च द', ३. 'स्यास्तु स' ड. पाठ. ४. 'प्रयोगो बहुधा प्रयोजनानु' घ. ड. पाठ. ५ 'समः स', ६. 'भेद्य' ड. पाठः. ७. 'च्चू', ८ 'च्चू' घ. पाठ..

जमुपादद्यात् । सर्वपरिक्षये तु स्वबलव्यसनेन वा कुलीनं बलवन्तमलुब्धं धार्मिकं पूर्वपुरुषाश्रितं मित्रवर्गभूयिष्ठं राजानं-क्षिप्रमाश्रयेत् । सर्वथा च सामोपप्रदानाभ्यां तमेवाराधयेत् । तथा चाह—

"निग्रहं प्रकृतीनां च कुर्याद् योऽरिबलस्य च ।
उपसेवेत तं नित्यं सर्वयत्नैर्गुरुं यथा ॥"

इति । यदा तु मन्त्रोत्साहप्रभुशक्तियुक्तः, तदा यातव्यं प्रतिविधायामित्रं प्रति गच्छेत् । तथाचाहुः—"सामन्तयोर्व्यसनसाम्ये न यातव्यं तममित्रमेव यायादि"ति ॥ ३४३ ॥

मित्रानुरोधेन स्वेच्छया वा गच्छन् सांपरायिकेन विधिना —

**यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ।**
**परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥ ३४४ ॥**

गतार्थः श्लोकः ॥ ३४४ ॥

नन्वेव सकल एवारम्भोऽनर्थकः, सुसमृद्धानामपि विपर्ययदर्शनात् । तथाच सुयोधनस्य विराटं प्रति घोषयात्रायां च दृष्टमेव । उक्तं च — 'महाधीना नरेन्द्राणामुच्छ्रयाः पतनानि चे'ति । अतो दैवतन्त्रत्वाद् राज्यस्यापभ्रष्टमूलामिवेमां स्मृतिं मन्यामहे । पुरुषकारानभिज्ञ ! मैव —

**दैवे पुरुषकारे च द्वये सिद्धिः प्रतिष्ठिता ।**

न दैव एवेत्यभिप्रायः ।

किञ्च, दैवस्वरूपमप्यनिरूपितमायुष्मता । यतः —

**तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ ३४५ ॥**

जन्मान्तरीयपुरुषकार एव दैवमित्युच्यते, नान्यदित्यर्थः ॥ ३४५ ॥

नन्वेवमपि षाड्गुण्यनिरूपण[२] व्यर्थमेव । उच्यते । यदि हि सर्वं दैवाधीनमेव स्यात् सदैवं स्यात् । अपितु, यदा तु —

**केचिद् दैवाद्धठात् केचित् केचित् पुरुषकारतः ।**
**सिध्यन्त्यर्था मनुष्याणां**

---

१. 'न्तं सत्यसन्धम', २. 'ण्यादिनि' ख. पाठः,

तदेतदचोद्यमिति शेषः ॥

किञ्च,

**तेषां योनिस्तु पौरुषम् ॥ ३४६ ॥**

तेषां दैवहठपुरुषकाराणां पौरुषमेव योनिः कारणमित्यर्थः । हठोऽपि योऽध्यवसायातिशयः वेतालसाधनादिकः सोऽपि च पुरुषकारातिशय एवेत्यर्थः । अतः सूक्तं तेषां योनिस्तु पौरुषमिति ॥ ३४६ ॥

नन्वेवमप्यपरिहृतमेवास्मच्चोद्यम् । अहेतुकखल्वतिशयवान् मातृमतो विवेक । पश्य —

**यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ।**
**एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ३४७ ॥**

सुष्ठुपि हि दैवसंपन्नाः पदार्थस्थितिं नैवातिवर्तन्ते । न जातुचिदुपनीतमपि भोज्यं व्यापारमन्तरेण मुखं प्रविशति । व्यापारोऽपि हि दैवादेवेति चेत् । न । दैवस्यापि तत्पूर्वकत्वादित्युक्तं प्राक्तन एव कर्मणि दैवशब्द इति । तदपि दैवान्तरेणेति चेत्, अव्यनस्थैव सति स्यात् । भवतु, अनादित्वान्निर्दोषेति चेन्न । निर्निमित्तत्वप्रसङ्गात् । तदभिधाने चावस्थितं पुरुषकारस्यानपेक्षत्वम् । दृष्टानुगुण्येन चादृष्टकल्पना युक्ता, न दृष्टबाधेन । आम्नायस्य चैवमप्रामाण्यप्रसङ्ग । निमित्तान्तरकल्पने चादृष्टकल्पना दुष्परिहार्यैव स्यात् । अतः पुरुषकारप्राधान्याद् युक्तः कृत्स्न एवायमुपदेश इति स्थितम् ॥ ३४७ ॥

यदि तु मित्रेण सह तुल्यफलाया यात्रायामवरुन्धो रिपुरशक्तो भूम्यादि प्रयच्छेत्, तदा किं मित्रमतिसन्धाय स्वकार्यं न क्रियते उक्तं हि मनुनापि — 'यथैनं नातिसन्दध्युर्मित्रोदासीनशत्रव' इत्यादि, 'विदध्यादितमात्मन' इति च । धर्मेतरविवेककुशल ! मैवम् —

**हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।**
**अतो यतेत तत्प्राप्तौ सत्यं रक्षेत् समाहितः ॥ ३४८ ॥**

समाहितो लोकद्वयहिताभिज्ञ ॥ ३४८ ॥

---

१. 'मि पु', २ 'चा', ३ 'नेऽट' ग पाठ ४ 'हरणार्थं' क पाठ.. ५ 'दा किमिति मि', ६ 'याध्यदि' ध पाठ.

किञ्च —

**स्वाम्यमात्यो जनो दुर्गं कोशो दण्डस्तथैव च ।**
**मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते ॥ ३४९ ॥**

स्वामी राजा । अमात्यः सचिवः । जनो जनपदः । कोशो द्रव्यनिचयः । दण्डो बलं हस्त्यश्वरथपादातात्मकम् । मित्रदुर्गे उक्ते । एताः प्रकृतयः सप्तैव । एतदपेक्षया हि राज्यं सप्ताङ्गमुच्यते यस्मात्, तस्माद् यथैवात्मामात्यादिप्रकृतयश्च प्रयत्नतः पालनीयाः, तथैव मित्राण्यपीत्यर्थः ॥ ३४९ ॥

एवं यद् दैवपुरुषकाराभ्यां कथमपि प्राप्तुं शक्यं राज्यं प्राक्तनानेकविधपुण्यसमुदायादैहिकविचित्रगुणसंप्रयोगाच्च, धीमान् कृतविद्यः सत्यसन्धश्च —

**तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ।**

कस्मात् । यस्मात् —

**धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥ ३५० ॥**

तद् राज्यं राजा सुदुर्लभं लब्ध्वा निर्व्याजप्रसाधितसमग्रदण्डपातैश्चतुर्वर्गप्राप्तिलम्पटः प्रयत्नाद् दुर्विनीयमानानालोच्याविनीतेषु यथार्हं दण्डं पातयेत् । न चातिमृदुहृदयतया हृद्विलेखः कार्यः । धर्म एवायं दण्डाभिधानो ब्रह्माण्डान्तर्वर्त्यखिलप्राणिसङ्घोपकारार्थं ब्रह्मणा[1] वेदेन निर्मितो विहितः । पुरेत्यनादित्वेन निर्विचिकित्सानुष्ठानप्ररोचनार्थम् । तथाच गौतमः— "ततः शेषेण विशिष्टदेशजाती"त्युपक्रम्य "विष्वञ्चो विपरीता नश्यन्ति । तानाचार्योपदेशो दण्डश्च पालयते । तस्माद् राजाचार्यावनिन्द्यावि"त्यादि । आम्नायश्च — "सद्व वा इदमभवत् । देवाश्च मनुष्याश्च ते यदोपकारैर्न शेकुर्मनुष्यानात्मीकर्तुम् अथ देवास्तिरोबभूवुः, तान् प्रजापतिरब्रवीत् । कः प्रजाः पालयिता भुवि सर्वेऽन्तर्हिताः स्थ । असंरक्ष्यमाणाः प्रजा अधर्मार्दितास्त्यक्ष्यन्तीतः प्रदानमुपजीवनमस्माकमिति । ते देवाः प्रजापतिमब्रुवन् । पुरुषमूर्तिं राजानं करवाम सोमाद् रूपमादायादित्यात् तेजो विक्र-

१ 'शा हि व' ख पाठ २. 'भ ।' ड पाठ

ममधेन्द्राद् विष्णोर्विजयं वैश्रवणात् त्यागं यमात् संयमनामि"त्याद्युपक्रम्य "सोऽब्रवीद् धर्ममेव मे सख्याय कुरुध्वं ततोऽहं प्रजाः पालयामीति । ततस्तस्मै धर्मं द्वितीयमकुर्वन् स एष धर्मो निदानेन यद् दण्डः तस्मादेवंविद् राजा दण्डं पितर्यपि पातयेत् । धर्मेणैनं संस्करवाम्याधिपत्यायेन्द्रत्वाय ब्रह्मलोकायेति । ईश्वरोऽहं तथा कर्त्तोरि"त्यादि ॥ ३५० ॥

यतश्चैवरूपो दण्डः —

न स नेतुमतः शक्यो लुब्धेनाकृतबुद्धिना ।

केन तर्हि शक्यः —

सत्यसन्धेन शुचिना सुसहायेन धीमता ॥ ३५१ ॥

तस्मात् पुनरत्र प्रयत्नः । यस्मात् —

यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानवम् ।
जगदानन्दयेत् कृत्स्नमन्यथा तु प्रकोपयेत् ॥ ३५२ ॥

यस्माद् दण्डाधीनौ जगतः कृत्स्नस्यानन्दप्रकोपौ, तस्माद् यत्नो दण्डप्रणीतौ कार्य इत्यभिप्रायः ॥ ३५२ ॥

यतश्चैतदेवम् ,-अतः —

अधर्मदण्डनं लोकस्वर्गकीर्त्तिविनाशनम् ।
सम्यक् तु दण्डनं राज्ञः स्वर्गकीर्त्तिजयावहम् ॥ ३५३ ॥

लोकः परराष्ट्रप्राप्तिः स्वराष्ट्रस्थैर्यं च । स्पष्टमन्यत् ॥ ३५३ ॥

यस्माच्च सम्यग् दण्डनात् स्वर्गादिप्राप्तिः । तस्मात् —

अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।
नादण्डयो नाम राज्ञोऽस्ति धर्माद् विचलितः स्वकात् ॥

एवं चाराध्य —

यो दण्डयान् दण्डयेद् राजा सम्यग् वध्यांश्च घातयेत् ।
इष्टं स्यात् क्रतुभिस्तेन सहस्रशतदक्षिणैः ॥ ३५५ ॥

क्रत्वर्थहिंसावचोरादिहिंसापि धर्म्यैवेत्यभिप्रायः। सहस्रशतदक्षिणो राजसूयः। क्रतुबहुत्वाद् बहुवचनम्। यद्वा शतदक्षिणा अग्निष्टोमादयः। सहस्रदक्षिणा अभिजिदादयः। स्पष्टमन्यत् ॥ ३५५ ॥

दण्डपादण्डपवध्यावध्यविवेकक्लृप्तयथम् —

**इति सञ्चिन्त्य नृपतिः क्रतुतुल्यफलं पृथक्।**
**व्यवहारान् स्वयं पश्येत् सभ्यैः परिवृतोऽन्वहम् ॥३५६॥**

पृथक् विविक्तानित्यर्थः। यद्वा क्रतुतुल्यफलं पृथगिति संबन्धः। एकैकदण्डने क्रतुफलप्राप्तिरित्यर्थः ॥ ३५६ ॥

एवं दण्डपातनविधिरुक्त। अधुनार्थदण्डस्योक्तं मध्यमाधमसाहसाद्यपेक्षया प्रमाण वक्तुमाह —

**जलं सूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम्।**
**तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥ ३५७ ॥**

सूर्यमरीच्यन्तर्गतं जलमिव यद्रजो दृश्यते, तद् भेदबुद्ध्या गृह्यमाणं *त्रसरेणुसंज्ञकं भवति। त्रस्त इव परिभ्रमतीति त्रसरेणुः। तेऽष्टौ रेणवः* एकीभूता लिक्षा। ताश्च तिस्रो राजसर्षप उच्यते। एवमुत्तरत्रापि योज्यम् ॥ ३५७ ॥

**गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः।**
**कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥ ३५८ ॥**
**पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तिताः।**

उभयथा प्रयोगदर्शनात्। कार्यविशेषापेक्षया च व्यवस्था ॥३५८३॥

एवं तावत् सुवर्णस्य पलपर्यन्तं प्रमाणमुक्तम्। रौप्यस्य[2] तु —

**द्विकृष्णलो रौप्यमाषो[3] धरणं षोडशैव ते ॥ ३५९ ॥**

---

१. 'म', २., ३ 'रू' ख पाठ

**शतमानं तु दशभिर्धरणैः पलमेव तत् ॥ ३५९ ॥**

कृष्णलद्वयेन रौप्यमाषः । षोडश माषा धरणम् । दश धरणानि शतमानम् । तच्च गण्यमानं चतुःसौवर्णिकं पलमेव पलसम्मितं भवति ॥३५९॥

एव रौप्यपरिमाणमुक्तम् । सुवर्णस्यैव तु —

**निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः॥ ३६०॥**

**साशीतिः पणसाहस्री दण्ड उत्तमसाहसः ।**
**तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः॥ ३६१ ॥**

यत्तु चतुःसौवर्णिकं पलमुक्तं, तस्यैव द्वितीया निष्कसंज्ञा । ताम्रकार्षस्तु पणसंज्ञः । अशीतिकृष्णलः षोडशमाषः कर्षः । तद् दर्शयति—साशीतिः पणसाहस्री दण्ड उत्तमसाहसः । सैषा पणशब्दवाच्या कृष्णलाशीतिः । ताम्रग्रहणमुपलक्षणं सुवर्णरूप्ययोरपि । कार्षिकपणो दण्डविशेषापेक्षया योज्यः । सहस्रगुणित उत्तमसाहसो दण्डः । यद्वा सहाशीत्या वर्तत इति साशीतिः । अशीत्यधिकसाहस्र इत्यर्थः । तदर्धं मध्यमसाहसः। स्मृत इति, शास्त्रादियं व्यवस्था न प्रमाणान्तरादित्यर्थः । संज्ञाकरणं स्वशास्त्रसंव्यवहारार्थम् । उत्तमसाहसादिदण्डवचनेष्वेत एव यथा स्युः ॥ ३६१ ॥

अथ किं सर्वापराधेपूत्तमसाहसाद्यपेक्षया दण्ड. प्रयोज्यः । नेत्युच्यते —

**वाग्दण्डस्त्वथ धिग्दण्डो धनदण्डो वधस्तथा ।**
**योज्या व्यस्ताः समस्ता वाप्यपराधवलादिमे ॥ ३६२ ॥**

वाग्दण्डः स्वरूपाभिधानमात्रम् । धिग्दण्डः कुत्सनम् । धनदण्ड उक्तः । वधदण्डः शारीरः । तथाशब्द उच्चाटनाद्यर्थः । स्पष्टमन्यत् ॥ ३६२ ॥

अथ चात्र व्यवहारनीतिश्च उप.—

**ज्ञात्वापराधं देशं च कालं वलमथापि चै ।**
**वयः कर्म च वित्तं च ज्ञात्वा दण्डं प्रकल्पयेत् ॥ ३६३ ॥**

---

१. 'णार्प, सु' ख. पाठः. २. 'गव्य' ख. पाठः. ३. 'कः पणश', ४. 'वा' ख. पाठः.

अपराधपुनर्वचनं दृष्टान्तार्थम् । यथैवापराधं ज्ञात्वा तदपेक्षया दण्डप्रकल्पनं, तथैव[1] च देशकालाद्यपेक्षयापीत्यभिप्रायः । ज्ञात्वेति पुनर्वचनं निर्णीतेऽपि व्यवहारे धर्मानुसारेण पुनर्व्यवहारोद्धरणार्थम् । स्पष्टमन्यत् ॥ ३६३ ॥

इति संभृतमण्डलः सुधामा पुरुरुचिरो रमणः प्रतापशीलः ।
रविरिव नृपतिः समः प्रजानां जगदखिलं व्यवहारतो बिभर्ति ॥

*ग्रन्थातिरेकभीत्या यन्न निबद्धं मयात्र सद्वस्तु ।*
व्याख्यातृभिर्विविक्तं तल्लभ्यं सम्प्रदायेभ्यः ॥

इति* परमभट्टारकयाज्ञवल्क्यप्रणीते धर्मशास्त्रे
विश्वरूपकृतविवरणबालक्रीडायां

प्रथमोऽध्यायः ।

---

१ 'व दे' ख. पाठ

* 'याज्ञवल्कीये परमभट्टारकप्रणीते' इति क्वचित् पठ्यते ।

**शतमानं तु दशभिर्धरणैः पलमेव तत् ॥ ३५९ ॥**

कृष्णलद्वयेन रौप्यमाषः । षोडश माषा धरणम् । दश धरणानि शतमानम् । तच्च गण्यमानं चतुःसौवर्णिकं पलमेव पलसम्मितं भवति ॥३५९॥

एवं रौप्यपरिमाणमुक्तम् । सुवर्णस्यैव तु —

**निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ॥ ३६० ॥**

**साशीतिः पणसाहस्री दण्ड उत्तमसाहसः ।**
**तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥ ३६१ ॥**

यत्तु चतुःसौवर्णिकं पलमुक्तं, तस्यैव द्वितीया निष्कसंज्ञा । ताम्रकर्षस्तु पणसंज्ञः । अशीतिकृष्णलः षोडशमाषः कर्षः । तद् दर्शयति —साशीतिः पणसाहस्री दण्ड उत्तमसाहसः । सैषा पणशब्दवाच्या कृष्णलाशीतिः । ताम्रग्रहणमुपलक्षणं सुवर्णरूप्ययोरपि । कार्षिकपणो दण्डविशेषापेक्षया योज्यः । सहस्रगुणित उत्तमसाहसो दण्डः । यद्वा सहाशीत्या वर्तत इति साशीतिः । अशीत्यधिकसाहस्र इत्यर्थः । तदर्धं मध्यमसाहसः। स्मृत इति, शास्त्रादियं व्यवस्था न प्रमाणान्तरादित्यर्थः । संज्ञाकरणं स्वशास्त्रसंव्यवहारार्थम् । उत्तमसाहसादिदण्डवचनेष्वेत एव यथा स्युः ॥ ३६१ ॥

अथ किं सर्वापराधेषूत्तमसाहसाद्यपेक्षया दण्ड. प्रयोज्य. । नेत्युच्यते —

**वाग्दण्डस्त्वथ धिग्दण्डो धनदण्डो वधस्तथा ।**
**योज्या व्यस्ताः समस्ता वाप्यपराधवलादिमे ॥ ३६२ ॥**

वाग्दण्डः स्वरूपाभिधानमात्रम् । धिग्दण्डः कुत्सनम् । धनदण्ड उक्तः । वधदण्डः शारीरः । तथाशब्द उच्चाटनाद्यर्थः । स्पष्टमन्यत् ॥ ३६२ ॥

अथ चात्र व्यवहारनीतिसंक्षेप.—

**ज्ञात्वापराधं देशं च कालं वलमथापि च ।**
**वयः कर्म च वित्तं च ज्ञात्वा दण्डं प्रकल्पयेत् ॥ ३६३ ॥**

---

१. 'णार्ध, स्रु' ख पाठः. २. 'यज्ञ' ङ. पाठः. ३. 'कः पणसा', ४. 'वा' पाठः.

अतएवच —

**रागाद् द्वेषाद् भयाद्वापि स्मृत्यपेतादिकारिणः ।**
**सभ्याः पृथक् पृथग् दण्ड्या विवादद्विगुणं धनम् ॥ ४॥**

स्मृत्युक्तार्थान्यथाकारिणो रागादिभिस्तद्विगुणं धनमेकैकशो दण्ड्याः । आदिग्रहणात् स्मृत्यर्थं चान्यथानिनीषव इत्यभिप्रायः । सर्वसभ्यदण्डाद् द्विगुणं च राजा तत्स्थानीयो वा दण्ड्यः, तदधीनत्वान्निर्णयस्य । अतएवच पृथक् पृथगिति वीप्सा । सभ्याः पृथक् पृथग् विवादद्विगुणं, तद्द्विगुणं च राजा । तथाच वक्ष्यति ॥ ४ ॥

अथ किं राज्ञा स्वपुरुषैरान्विष्य कार्यिणो व्यवहारयितव्याः । न । प्रतिषेधात् । यथाह मनुः—'नोत्पादयेत् स्वयं कार्यं राजा नाप्यस्य पूरुषः ।' इति । तथ तर्हि व्यवहारप्रवृत्तिः उच्यते —

**स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।**
**आवेदयति चेद् राज्ञे व्यवहारपदं हि तत् ॥ ५॥**

तदेव हि व्यवहारपदं, यत् स्मृत्याचारव्यपेतेन वाह्येन मार्गेणास्मद्वैः खलीकृत इत्येवं कश्चित् कथयेत् । न तु स्वयं कार्यारम्भक इत्यभिप्रायः । तथाच नारदः —

"स्वनिश्चितबलाधानस्त्वर्थी स्वार्थप्रचोदितः ।
लेखयेत् पूर्ववादं तु कृतकार्यविनिश्चयः ॥"

इति । स्मृत्युक्त आचारः स्मृत्याचारः । कुलधर्माद्यभिप्रायं वैतत् । परैरिति गुरुशिष्यवादनिवृत्त्यर्थम् । तथाच नारदः —

"गुरुशिष्यपितापुत्रदम्पत्योः स्वामिभृत्ययोः ।
एतेषां समवेतानां व्यवहारो न विद्यते ॥
एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यकरैस्तथा ॥"

इत्यादि । कात्यायनश्च —

"यश्च राष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः ।
अनेकपदसङ्कीर्णः पूर्वपक्षो न सिध्यति ॥"

इत्यादि । व्यवहारः पदनीयो निरूपणीयत्वेनेत्यर्थः ॥ ५ ॥

# अथ व्यवहाराध्यायः ।

## अथ सामान्यन्यायप्रकरणम् ।

श्रियं समुदयं प्राप्तुमिच्छता विजिगीषुणा समृद्धे राज्ञा प्रयत्नादमित्रराज्यान्यादिश्य स्वराज्यं विवर्धनीयमित्युक्तम् । तत्रापि वञ्चतमाः गलत्स्व कापटिककुर्वन्तव्यवहारिणो दस्यव । तेभ्योऽपि राष्ट्रं रक्षणीयमित्येतदप्युक्तम् । अथेदानीं तदुद्धरणप्रकारविवेकार्थं व्यवहारनिरूपणं प्रस्तौति —

**व्यवहारान् नृपः पश्येद् विद्वद्भिर्ब्राह्मणैः सह ।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ १ ॥**

ननु चैतत् प्रागेवोक्तम् 'इति सञ्चिन्त्य नृपतिः' इत्यत्र । सत्यम् । गुणार्थस्त्वयमारम्भः, न कोशसञ्चिचीषयार्थप्रधानो भवेत् । धर्मशास्त्रानुसारेणैव व्यवहारान् नृपः पश्येदित्यर्थः । किञ्च विद्वद्भिर्ब्राह्मणैः सह । प्रवक्तृत्वेऽपि ब्राह्मणानां नृपसहायोपयोगितैव । द्रष्टा तु निग्रहानुग्रहसामर्थ्याद् राजैव । अत एवोक्तं क्रोधलोभविवर्जित इति । समर्थेनापि धर्मशास्त्रानुसारिणा भाव्यम् । न क्रोधादिवशेनान्यथा व्यवहर्तव्यमित्यर्थः । एकत्वेऽपि व्यवहारस्य स्वकीयविशेषापेक्षया बहुवचनम् । यथाह मनुः— 'तेषामाद्यमृणादानम्' इत्यादि । नारदश्च — 'चतुष्पादश्चतुर्व्यापी'-त्यादि ॥ १ ॥

यतश्च धर्मशास्त्रप्राधान्यं व्यवहारदृष्टौ, अतः —

**श्रुताध्ययनसम्पन्नाः कुलीनाः सत्यवादिनः ।**
**राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ २ ॥**

निगदोक्तः श्लोकः ॥ २ ॥

दृष्टमूलत्वाच्च राज्ञः स्वयं व्यवहारदर्शनस्मृतेरदृष्टार्थत्वेऽपि च प्रयोजनानुसारात् कार्याणां गुरुलघुत्वे समीक्ष्य —

**अपश्यता कार्यवशाद् व्यवहारान् नृपेण तु ।**
**सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ ३ ॥**

सोऽपि राजस्थानीयत्वात् क्रोधादिरहित एव स्यात् ॥ ३ ॥

"गहनत्वाद् विवादानां क्षणिकत्वात् स्मृतेरपि ।
ऋणादिषु हरेत् काल कामं तत्त्वबुभुत्सया ॥"

इति ॥ १२ ॥

ननु अनेकप्रकाराः पुंसां प्रवृत्तयः । तत्र यदि कश्चिद् व्यवहारानुगुणवाक्प्रत्ययकुशलतया सत्येऽप्यर्थे मिथ्यावादीव लक्ष्यते । अन्यस्तु कश्चित् कपटव्यवहारचतुरो मिथ्याभूतेऽप्यर्थे सत्यवादीव लक्ष्यते । तत्र च व्यवहारनिरूपणप्रयासवैयर्थ्यमेव । सत्यमेव, यदि विवेकावधृतिप्रकारो न स्यात् । स्यात्तु खल्वयम् —

देशाद् देशान्तरं याति सृक्कणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ १३ ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथौष्ठौ निर्भुजत्यपि ॥ १४ ॥
स्वभावाद् विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगे च साक्ष्ये च स दुष्टः परिकीर्तितः ॥ १५ ॥

यद्यपि व्यवहारमार्गनिपुणतया कुतश्चिद्वा सहायावष्टम्भात् साधुताभासं प्रत्ययमुत्पादयति, तथापि यस्यैवमादीनि लिङ्गानि स दुष्ट परिकीर्तितः । परिकीर्तितवचनं दौष्ट्यनिश्चयख्यापनार्थम् । स्फुटावगतचातुर्यश्चैवमादिभिर्लिङ्गैरध्यवसेय । अन्यस्य त्वप्रतिभयापि धूर्तजनसन्त्रासितस्य वा भवत्येव । अतश्चैव विविच्यैतानि लिङ्गानि व्यवस्थापनीयानीत्यनवद्यम् । सृक्कणी ओष्ठसन्धी । वाक्चक्षुः पूजयति नो इतिच्छेदः । वाचश्चक्षुषो वा पूजां न करोतीत्यर्थः । वाक्पूजा स्वोक्तिनिश्चयावष्टम्भः । चक्षुषश्च दर्शनावष्टम्भः । ओष्ठनिर्भुजनमनेकधोष्ठविकारः । जिह्वया वा परिलेहनम् । स्पष्टमन्यत् ॥ १३,१४,१५ ॥

यदा पुनर्द्वयोर्व्यवहारावप्रतिपत्तौ स्वपक्षावष्टम्भनव्यतिरेकेण राजावेदने सामर्थ्यं स्यात्, तदा किमसौ राज्ञ एव निवेदनीयम् । नेत्याह । यत —

सन्दिग्धार्थं स्वतन्त्रो यः साधयेद् यश्च निष्पतेत् ।
न चाहूतो वदेत् किञ्चिद्धीनो दण्ड्यश्च स स्मृतः ॥ १६ ॥

स्वाभियोगमनिस्तीर्याभियोक्तारं नाभियुञ्जीत, अनवस्थाप्रसङ्गेन व्यवहारासमाप्तेः । अत एव चान्याभियुक्तोऽप्यनभियोज्यः । न च स्वयमुक्तार्थापलापः कर्तव्य इति ॥ ९ ॥

अस्यापवाद —

**कुर्यात् प्रत्यभियोगं तु कलहे साहसेषु च ।**
**उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥ १० ॥**

अनिस्तीर्य स्वाभियोग साहसादौ प्रत्यभियुञ्जीत । अयमेव तत्र निर्णयप्रकार इत्यर्थः । सर्वविवादेषु च यदा न सद्य एव निर्णयः स्यात्, तत उभयोरपि कार्यिणोः प्रतिभूः कार्यनिर्णयक्षमो ग्राह्यः ॥ १० ॥

यदा तु न्यायेनान्यतर कार्यी पराजित, तदा —

**निह्नवे भावितो दद्याद् धनं राज्ञे च तत्समम् ।**
**मिथ्याभियोगी द्विगुणमभियोगाद् धनं वहेत् ॥ ११ ॥**

निह्नवोऽपलापः तत्र स्पष्टीकृते यावद् धनिना प्रार्थितं, तावद् देयम् । राज्ञे च तत्तुल्यमन्यत् । यदा तु मिथ्यैवाभियुङ्क्ते, तदाभियोक्त्रा प्रार्थिताद् द्विगुण राज्ञ एव धन देयमित्यर्थः ॥ ११ ॥

किं पुन सर्वत्रैव सद्योव्यवहारनिर्णीति. । सत्यम् । एव युक्तम् । तथापि तु —

**साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियः ।**
**विवादयेत् सद्य एव कालोऽन्यत्रेच्छया भवेत् ॥ १२ ॥**

निर्वहणमनिरूप्यैव स्वबलावष्टम्भेन सहसा प्रसह्य यत् क्रियते, तत् साहसम् । स्तेय पारुष्य च वक्ष्यति । गोवधाद्यभिशापो गोभिशापः । गोग्रहणमुदाहरणार्थम् । सर्वपशूनां शृङ्गिणां वाभिशापः । अत्ययः कालप्रतीक्षणासमर्थं कार्यम् । स्त्रियश्च यत्राभियुज्यन्ते, तत्र कालप्रतीक्षणे विरोधात् सद्य एव विवादयेत् । विवादं समापयेदित्यर्थः । अन्यत्र त्वृणादानादौ कालप्रतीक्षणमपि कार्यम् । ध्रुवाधिकरणेच्छया वा भवति । यथाह

इत्यादि । नारदश्च—

"भापायामुत्तर यावत् प्रत्यर्थी न निवेशयेत् ।
अर्थी विशोधयेत् तावद् यावद् वस्तु निवक्षितम् ॥"

इति । नात्र च्छलजात्यादीनामवसर इत्यभिप्राय एव पूर्वरात्युक्त पत्रारूढ श्रावयेत् ॥ ६ ॥

**श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।**

श्रुतश्चासावर्थश्च श्रुतार्थ । तस्य यदनुरूपमुत्तर भवति, ततो लेख्यम् । अन्यथा पराजय एवेत्यभिप्राय । सन्निधाविति सद्योनिर्णयार्थम्। एतच्चात्ययिककार्यविषय द्रष्टव्यम् ।

यतश्चैव,

**ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम् ॥ ७॥**

न काल हरेदित्यर्थ ॥ ७ ॥

कस्मात् पुन प्रतिज्ञातार्थसाधनाभिधानयत्न यस्मात्—

**तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ।**

उक्त च—

"सारस्तु व्यवहाराणा प्रतिज्ञा समुदाहृता ।
तद्धानौ हीयते वादी तरस्तामुत्तरो भवेत् ॥"

इति । अतएवच यत् तार्किकै प्रतिज्ञावचनस्यानङ्गत्वमुक्त तदपि प्रत्युक्तम् ।

यस्माद्,

**चतुष्पाद् व्यवहारोऽयं विवादेषूपदर्शित ॥ ८ ॥**

न्यायागमाभ्यामिति शेष । प्रतिज्ञा, उत्तर, साधन, निर्णयश्चेत्येव चतुष्पात् । अन्यथा तु न स्यात् । तस्मात् प्रतिज्ञाक्रमेणैव विवादकिरेत्यभिप्राय' ॥ ८ ॥

ननु च यद [illegible] मवालेनापराद्धाय [illegible] [illegible], इदाय [illegible] [illegible] । तत्र च—

**अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।**
**न चाभियुक्तमन्येन नोक्त विप्रकृतिं नयेत् ॥ ९ ॥**

एवं चार्थिभिरावेदिते निर्व्याजं प्रत्यर्थिनं तदैवाहूय राज्ञार्थिप्रत्यर्थिसम्मतानुमतेन लेखकेन —

**प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।**
**[1]समामासतदर्धाहोनामजात्यादिचिह्नितम् ॥ ६ ॥**

यथावेदितमित्यनुबन्धप्रयोजनादिविशिष्टापराधज्ञापनार्थम् । समा संवत्सरः । मासः स्पष्टः । तदर्धमर्धमासः । आदिग्रहणं स्मृत्यन्तरानुसारेण भाषाप्रपञ्चनिरूपणार्थम् । यथाह कात्यायनः —

"निवेद्य कालं वर्षं च मासं पक्षं तिथिं तथा ।
लेखाप्रदेशं विषयं स्थानजात्याकृतीश्च याः ॥
साध्यार्थमानं द्रव्यं च सङ्ख्या नाम तथात्मनः ।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥
क्रमात् पितॄणां नामानि पीडां चाहर्तृदायकौ ।
क्षमालिङ्गाद्यादिकालं पक्षं संकीर्त्य कल्पयेत् ॥"

इति । एतानि च न्यायानुसारेणालोच्य व्यस्तानि समस्तानि वा लेखनीयानि । पूर्वं च भूमावालिख्य प्रतिज्ञां शोधयित्वा पश्चात् पत्रारोपणं कार्यम् । यथाह —

"अधिकान् शोधयेदर्थान् न्यूनांश्च प्रतिपूरयेत् ।
भूमौ निवेशयेत् तावद् यावत् पक्षः प्रतिष्ठितः ॥
प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥

इत्यादि । प्रतिज्ञादोषास्तु । यथाह —

"अप्रसिद्धं सदोषं च निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षं राजा विवर्जयेत् ॥
न्यायं मे नेच्छते कर्तुमन्यायं वा करोति च ।
न लेखयति यस्त्वेवं तस्य पक्षो न सिध्यति ॥"

---

1. 'यः पूर्वं तस्य' इति ख. पाठ..

---

* एतत्समासषट्केऽङ्कदेशशब्दे रत्नमार्पम् ।

इत्यादि । नारदश्च—

"भाषायामुत्तरं यावत् प्रत्यर्थी न निवेशयेत् ।
अर्थी विशोधयेत् तावद् यावद् वस्तु विवक्षितम् ॥"

इति । नात्र च्छलजात्यादीनामवसर इत्यभिप्राय. एवं पूर्वावाद्युक्त पत्रारूढं श्रावयेत् ॥ ६ ॥

**श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।**

श्रुतश्चासावर्थश्च श्रुतार्थः । तस्य यद्यनुरूपमुत्तरं भवति, ततो लेख्यम् । अन्यथा पराजय एवेत्यभिप्रायः । सन्निधाविति सद्योनिर्णयार्थम् । एतच्चात्ययिककार्यविषयं द्रष्टव्यम् ।

यतश्चैवं,

**ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम् ॥७॥**

न कालं हरेदित्यर्थः ॥ ७ ॥

कस्मात् पुनः प्रतिज्ञातार्थसाधनाभिधानयत्न , यस्मात्—

**तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ।**

उक्तं च—

"सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
तद्धानौ हीयते वादी तरस्तामुत्तरो भवेत् ॥"

इति । अतएवच यत् तार्किकैः प्रतिज्ञावचनस्यानङ्गत्वमुक्तं तदपि प्रत्युक्तम् ।

यस्माद्,

**चतुष्पाद् व्यवहारोऽयं विवादेषूपदर्शितः ॥ ८ ॥**

न्यायागमाभ्यामिति शेषः । प्रतिज्ञा, उत्तर, साधन, निर्णयश्चेत्येवं चतुष्पात् । अन्यथा तु न स्यात् । तस्मात् प्रतिज्ञाक्रमेणैव विवादक्रियेत्यभिप्रायः ॥ ८ ॥

ननु च यदा तु ममानेनापराद्धमित्येवमुक्त स्वमभियोगमनिस्तीर्यैव तमेव प्रत्यभियुङ्क्ते, तदायं क्रमो नोपपद्यते । सत्यम् । तेनैव च—

**अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।**
**न चाभियुक्तमन्येन नोक्तं विप्रकृतिं नयेत् ॥ ९ ॥**

यथैव यो राज्ञाहूतो निष्पतेत् प्रणश्येत्, यो वा राजान्तिकं गतः सम्भावितप्रतिभानवानपि न किञ्चिद् वदेत्, स यथा पराजितो दण्डार्हश्च स्याद्, एवं योऽपि प्रत्यर्थिसन्दिग्धं न्यायेन निश्चयमकृत्वैव हठात् स्वतन्त्रः साधयेत्, सोऽपि पराजितो दण्ड्यश्चेत्यभिप्रायः ॥ १६ ॥

एवं तावद् यत्र साक्षिणः स्युः, तत्र तदधीनैव निर्णीतिः, तदभावे विपर्यये वा देशान्तरगमनादिभिर्लिङ्गैः । यत्र तर्हि द्वयोरपि साक्षिणो लिङ्गानि वा देशान्तरगमनादीनि, तत्र कथम् । उच्यते —

**साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।**
**पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ १७ ॥**

क्व पुनर्विषये द्वयोः साक्षिसम्भवः । यत्रोत्तरवादी प्रत्यवस्कन्दनेन व्यवहारमाक्षिपति । यथा केनाप्युक्ते ममानेनामुष्मिन् काले देशे चैवं द्रव्यं गृहीतमिति अथापरो वदति— सत्यम्, यद्येवम् । अहं पुनस्तस्मिन् काले निर्दिष्टदेशाद् देशान्तरस्थमात्मानं साक्षिभिः साधयामीति । तत्र द्वयोः साक्ष्यभ्युपगमे पूर्ववादिन एव साक्षिणो भवेयुः, तत्प्राधान्याद् व्यवहारप्रवृत्तेः । यत्र त्वप्रमाणीकृतः पूर्वः पक्षः, तत्रोत्तरवादिन एव साक्षिणः स्युः । यथा सत्यं यथैवायमाह । ततु मयास्य प्रतिनिर्यातितम् । एवं च साक्षिभिः साधयामीति ॥ १७ ॥

यदा तु प्रत्यवस्कन्दनमनेन मार्गेण पुनः पूर्वेणाधरीकुर्यात्, तदा कथम् । मैवम् । एवमीतराधर्यकरणे सत्यनवस्थैव स्यात् । का तर्हि गतिः । अभ्यधिकरणोऽन्यायेन यदिपर व्यवहारपरावृत्तिः । अन्यथानवस्थैव स्यात् । ततश्च —

**सपणश्चेद् विवादः स्यात् तत्र हीनं तु दापयेत् ।**
**दण्डं च स्वपणं चैव धनिने धनमेव च ॥ १८ ॥**

दण्डस्वपणौ राज्ञे देयौ । स्वयतः पणः स्वपणः, यो धनिना व्यवहारं परावर्तयितुं पणः कृत इत्यर्थः । धनं तु धनिन एव राजा दापयेत् । चशब्दो धिग्दण्डादिसमुच्चयार्थः । एवं तावत् साक्षिसङ्करे नियम उक्तः । ललाटस्वेदादिलिङ्गसङ्करे कथम् । तत्राप्यनुमानमूलत्वाल्लैङ्गिकादिस्मृतीनां सम्यगनुमाननिरूपणाधीन एव व्यवहारनिर्णयः ॥ १८ ॥

सर्वथा तु —

**छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः ।**

व्यवहारो हि नामानृतप्रभवो व्याजैकनिबन्धनः । तथाचोक्तं नारदेन —

"धर्मैकतानाः पुरुषा यदासन् सत्यवादिनः ।
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः ॥
नष्टे धर्मे मनुष्येषु व्यवहारः प्रवर्तितः ।
द्रष्टा च व्यवहाराणां राजा दण्डधरः कृतः ॥"

इति । अधर्मप्राधान्यं व्यवहारेष्वित्यर्थः ॥

यतश्चैतदेवम् । अतश्च —

**भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ १९ ॥**

व्यवहारमार्गेणान्यथा क्रियते । तथाचोक्तम् — 'अचोरश्चोरतामाप्तो माण्डव्यो व्यवहारत' इति । अतश्च प्रयत्नतो निराकृतच्छलादिः सत्यैकप्रवणो राजा व्यवहारेषु कृती स्यादित्यर्थः ॥ १९ ॥

यदि त्वनेकमर्थेऽभियुक्तः सर्वमादौ नेत्युक्त्वा पुनः किञ्चित् कथञ्चिदभ्युपगच्छेत्, तत्र तन्मात्रमेव किमसौ दाप्यः । नेत्युच्यते —

**निह्नुते लिखितोऽनेकमेकदेशविभावितः ।**
**दाप्यः सर्वान् नृपेणार्थान् न ग्राह्यस्त्वनिवेदितः ॥ २० ॥**

अनेकार्थापलापकत्वेन लिखितः राज्ञे कथितः यदि निह्नुते, पुनश्चैकदेशे स विभाव्यते । ततो दाप्यः सर्वान् सदण्डकानर्थान् । यदि तु न लिखितः, तदेवम्भूतोऽप्यदण्ड्यः । यद्वा 'न ग्राह्यस्त्वनिवेदित' इत्यस्यान्या व्याख्या — धनिने राज्ञा सर्वमर्थं दाप्यः । न तु दण्ड्यः । तदनभिप्रेतोऽपीत्यर्थः ॥ २० ॥

नन्वसौ तदनभिप्रेतत्वेऽप्यपराधित्वाद् दण्ड्य एव । एवमादीन्येव हि नृपस्यार्थोपात्तिस्थानानि । अन्यथा तु क्वचिदेव राज्ञो दण्डः स्यात् । नैव —

**स्मृतेर्विरोधे न्यायस्तु बलवान् व्यवहारतः ।**
**अर्थशास्त्रात्तु बलवद् धर्मशास्त्रमिति स्थितिः ॥ २१ ॥**

यद्यर्थशास्त्रानुसारिता स्यात्, ततः स्यादप्येवम् । यदा तु धर्मशास्त्रमेव बलवत्, तदा तदविरुद्ध एवार्थसञ्चयो ज्यायान् । नन्वेवं सति यत्रासत्येऽपि वस्तुनि सत्यताप्रतिभानं, तत्रापि राज्ञो दोषप्रसङ्गः । यथा माण्डव्यवधादौ, स्मृत्या हि सम्यगपराधिनामेव दण्डविधानात् । तत्र च न्यायतोऽपराधापादनेऽपि परमार्थतस्तदभावादपराधी नैव । न चान्यो व्यवहारनिर्णीतिहेतुः । अतः सङ्कटमेतत् । नात्र सङ्कटम् । स्मृतेर्विरोधे न्यायस्तु बलवान् । कस्माद् व्यवहारतः । अन्यथा व्यवहारप्रवृत्त्यभावप्रसङ्ग इत्यर्थः । अथवा स्मृतिन्यायविरोधे स्मृतिरेव ज्यायसी, न तु न्यायः, व्यवहारतो हि न्यायप्रवृत्तेः । विविधमवहरणं व्यवहारः व्याजभूयिष्ठ इत्यर्थः । न चासौ शास्त्रविरोध्यप्यङ्गीकर्तव्यः । यस्मादर्थशास्त्राद् धर्मशास्त्रस्यैव बलीयस्त्वमिति स्थितिः । अन्यस्त्वपरमार्थ इत्यर्थः । इयमेव च व्याख्या ज्यायसी । यथावस्तु प्रमाणप्रवृत्तिः, न प्रमाणप्रवृत्त्यनुरोधिता वस्तुनः । स्थिते वस्तुनि तदनुसारिणी प्रमाणावगतिरित्यन वद्यम् । अन्ये त्वन्यथेमं श्लोकं वर्णयन्ति — स्मृतिद्वयविरोधे न्यायो बलवान्, व्यवहारतस्तु प्रवृत्त्यानुगुण्यात् । यत्र त्वर्थशास्त्रधर्मशास्त्रयोर्विरोधः तत्र धर्मशास्त्रं बलीयः । यथार्थशास्त्रे व्यवहारप्रकरण उक्तं — 'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इति । पुनर्धर्मशास्त्रे प्रायश्चित्तप्रकरणे 'कामतो ब्राह्मणवधे निष्कृतिर्न विधीयत' इति । तत्र धर्मशास्त्रबलीयस्त्वादाततायिवधे दोषप्रसङ्ग इति । तत् पुनः प्रकृतानुपयोगान्निष्प्रमाणकत्वाच्च नातीव सम्यक् ॥ २१ ॥

न चावश्य तत्त्वाभिनिवेशिनामपि परमार्थावगत्युपायाभाव एव । यस्मात्—

**प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।**
**एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ २२ ॥**

यदा हि दृष्टैरेव लिखितादिभिस्तत्त्वावगतिः, तदा सर्वं सुस्थमेव । अथतु तानि व्यस्तानि समस्तानि वा न सन्ति, विद्यमानान्यपि वा न परितोषक्षमाणि । तदा वक्ष्यमाणदिव्यानामन्यतमेन तत्त्वावगमादविरोधः ॥ २२ ॥

किञ्च —

**सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया।**
**आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ २३ ॥**

सर्वविवादेष्वनिर्णीतेषूत्तरा क्रिया दिव्यलक्षणेन निर्णयाव्यभिचाराद् बलीयसी । आध्यादिषु तु पूर्वा लेख्यादिका । दिव्यक्रियायास्तत्रासम्भवात् । यतो देवदत्तेन यज्ञदत्तस्याहितं तत्पुनैरपि भुज्यते । न च तेषां दिव्यप्रकृत्यवष्टम्भः, स्वानुभवाभावात् । अथवा लेख्यविषय एवायं श्लोकः । सर्वेष्वेव लेख्यविवादेषूत्तरोत्तरसङ्क्रमणादुत्तरलेख्यक्रियाबलीयस्त्वं परीक्षाबाहुल्येन व्याजकरणापनोदनात् । आध्यादिषु तु परस्वत्वान्मूल लेख्यप्राधान्येन पूर्वक्रियैव ज्यायसीत्यर्थः ॥ २३ ॥

भुक्तौ तु —

**पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।**
**परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ २४ ॥**

पश्यन्नपि यः परैरसम्बद्धैर्भुज्यमाने न किञ्चिनेयता कालेनापि ब्रूयात्, नूनं तदीयं न भवेदित्यभिप्रायः । कालनियमस्तु वेदमूलतयैव द्रष्टव्यः । नन्वेतदयुक्तम् । यदनभिधानमात्रेणैवार्थनाशः । एवं तर्ह्यनदपि वेदादेव। उपेक्षयापि द्रव्यनाशो भवतीत्यतो द्रष्टव्य परैर्भुज्यमानं नोपेक्षणीयमि त्यभिप्रायः । अथेतरस्य किं स्वत्वसम्बन्धोऽस्ति । पूर्वस्य तावद्धानिरि-त्याचार्याभिप्रायः । इतरस्यापि तु स्वत्वं नैव, परस्वबुद्ध्यैव भोगप्रवृत्तेः । यद्येवं न तर्हि राज्ञस्तदा दोषः । तदपि सत्यम् । अथ किं नृपस्यैव तद् भवतु स्वामिनो हान्युपदेशात्, तथाविधस्य च राजगामित्वात् । अथवा पूर्वस्वामिन एव तदर्पणीयं, तत्स्वत्वापाये हेत्वभावात् । स्मृतिस्तु दृष्टमूलतयाप्युपपद्यत एव । उपेक्षानिषेधमात्रं चैतत् । हानिवचनं तु निन्दा मात्रत्वेनोपेक्षकस्य व्यवहारप्रवृत्त्ययोग्यतामात्रज्ञप्तिफलम् । तदेव चात्र युक्तम् । अन्यथा श्रुतहानिरश्रुतकल्पना च स्यादित्यलं प्रसङ्गेन ॥ २४ ॥

किमुपेक्षया सर्वत्रैव व्यवहारप्रवृत्त्ययोग्यता स्यात् । सत्यम्—

**आधिसीमोपनिक्षेपजडबालधनैर्विना ।**
**तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥ २५ ॥**

आध्यादिषु तु भुक्तिर्नैवापहारकारणमित्यभिप्रायः । आधिस्तावद् भोगायैव क्रियते । सीमा च प्रतिजागर्तृदोषादनेकधा भुज्यते । निक्षेपश्च समर्पितत्वात् । जडबालयोरसामर्थ्यात् । उपनिधिं वक्ष्यति । राजधनमनेकगामित्वात् । स्त्रीधनं चास्वातन्त्र्यात् । श्रोत्रियाणां व्यापारान्तरापेक्षया । तथेति प्रकारार्थः । सर्वथा यत्रैव स्वामित्वाद् ऋतेऽपि भुक्तिः सम्भाव्यते, तत्रैव तत्कृतोपभोगो नापहारकारणमित्यर्थः ॥ २५ ॥

यतश्चाध्यादिषु निमित्तान्तराद् भुक्तिः, ततः—

**आध्यादीनां हि हर्तारं धनिने दापयेद् धनम् ।**
**दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥ २६ ॥**

धनिने धनं दत्त्वानन्तरं राज्ञे तत्समं देयम्, अपि वा शक्त्यपेक्षमित्यर्थः ॥ २६ ॥

यस्माच्च भुक्तिमात्रेण नार्थनाशः, तस्माद्—

**आगमोऽभ्यधिको भुक्तेर्विना पूर्वक्रमागतात् ।**

आगमो लेख्यम् । तद् भुक्तेर्बलीयः, निश्चितत्वाद् अन्यथापि भुक्त्युपपत्तेः । पूर्वक्रमे तु सति भुक्तेर्बलीयस्त्वं लेख्यान्तरनिरस्तस्यापि लेख्यस्य प्रमादतः स्थितिसम्भवात् । त्रिपुरुषभुक्तिः पूर्वक्रमः । यतश्च नाशादिव्याजेन लेख्यस्योपगतादिबाधितस्यापि स्थितिसम्भवः ॥

तत्र

**आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो ॥ २७**

न स्याद् यावता विना लेख्यप्रतिष्ठा न स्यादित्यर्थः ॥ २७ ॥

यस्माच्च क्रमभुक्तिरागमाद् बलीयसी, तस्माद्—

**आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।**
**न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥ २८ ॥**

लेख्यकर्तुः पुत्रो न लेख्यदोषानपाकुर्यात् , न ह्यसौ पितृवल्लेख्यस्वरूपज्ञो यतः । धन तु न तत्पुत्रस्य । तस्य तु यः पुत्र, तस्य धनमपि स्यात् । यस्माद् भुक्तिस्तत्र गरीयसी लेख्यादित्युक्तमेवेत्यभिप्रायः ॥ २८ ॥

लेख्यकृत्पुत्रस्तु किमिति धनभाङ् न भवति । यस्माद् —

*आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नाधिगच्छति ॥२९॥

लेख्यस्वरूपाज्ञत्वात् (न?) तद्दोषानपाकरणमात्रमेव स्यात् । न तु प्रमाणरहितं स्वामित्वमपीत्यभिप्रायः । प्रामाण्यं च विशुद्धागमस्यैव भोगस्य, न तु भुक्तिमात्रस्येत्यर्थः ॥ २९ ॥

किञ्च —

योऽभियुक्तः परेतः स्यात् तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विनाकृता ॥ ३० ॥

यदि हि लेख्यदोषापाकरणाभियुक्तः परेतो मृतः स्यात्, तदा तदीयधनग्राह्यपाकुर्यात् । एतच्च लेख्यकर्तृविषयम् । इतरस्य द्रव्यापहार एव स्यात् । यस्मान्न तत्र स्वामित्वे भुक्तिरागमशून्या कारण भवति, कृतापि तु व्यभिचारिणीत्यर्थः ॥ ३० ॥

यदि तु दुष्टेऽपि लेख्यादौ तत्कर्ता न दोषानपाकुर्यात्, तदा कथं स्यात् । उक्त तादृशे विषये राजावेदन 'स्मृत्याचारव्यपेतेन मार्गेणे'त्यत्र । अत एव च —

नृपोऽर्थाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ ३१ ॥

नृपो हि बलवान् व्यवहार कारयितु समर्थ इति व्यवहारविधौ स एव ज्यायान् । इतरेऽपि सामर्थ्यापेक्षया दुर्बला बलीयांसश्च भवन्ति । अतश्च कुलादिक्रमेणैव व्यवहाराणां राजगामिता द्रष्टव्या । ब्राह्मणादिसमूहाः पूगाः । स्पष्टमन्यत् ॥ ३१ ॥

प्रभुत्वादेव च राजा तदर्थाधिकृतो वा प्राड्विवाकादि —

बलोपधिविनिर्वृत्तान् व्यवहारान् निवर्तयेत् ।
स्त्रीनक्तमन्तरागारबहिरशत्रुकृतांस्तथा ॥ ३२ ॥

* इहाय श्लोको मिताक्षराया न दृश्यते ।

स्पष्टार्थः श्लोकः ॥ ३२ ॥

किञ्च —

**मत्तोन्मत्तार्तव्यसनिबालभीतप्रयोजितः ।**
**असम्बन्धकृतश्चैव व्यवहारो न सिध्यति ॥ ३३ ॥**

मत्तोऽतिहर्षितः, अहङ्कृतो वा । उन्मत्तो ग्रहगृहीतादिः । स्पष्टमन्यत् ॥ ३३ ॥

किञ्च —

***कुलानि जातयः श्रेण्यो गणान् जनपदानपि ।**
**स्वधर्माच्चलितान् राजा विनीय स्थापयेत् पथि ॥३४॥**

कुलानि कुटुम्बानि । जातयो ब्राह्मणाद्या वर्णाः । श्रेणयः कारुकसमुदायः । गणा ब्राह्मणादिसमूहाः । जनपदो दुर्गाश्रयोऽत्र जनोऽभिप्रेतः । सोऽपि राज्ञा स्वधर्माच्चलितो दण्ड्य इत्यभिप्रायः । सर्वश्चेतरजनो वा जनपदः । सर्वथा सर्वः स्वधर्माच्चलितो राज्ञा दण्ड्य इत्यभिप्रायः ॥ ३४ ॥

यस्माच्च राजा व्यवहारविधावस्यो दण्डधरः, तस्मात् —

**प्रनष्टाधिगतं देयं नृपेण धनिने धनम् ।**
**विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥ ३५ ॥**

कस्यचित् प्रनष्टं यदि राज्ञान्येन वाधिगतं लब्धं तद् यदि धनिना प्रार्थ्यते । ततः किं तत्, कियत्संख्यं चेत्येवं प्रश्नाविसंवादकस्यान्विष्यार्पणीयम् । न चेदेवं विभावयेत् तत्समं दण्ड्यः ॥ ३५ ॥

यत्तु त्वनस्वामिकं निध्यादिकं तत्र का कथा । उच्यते —

**राजा लब्ध्वा निधिं दद्याद् द्विजेभ्योऽर्धं द्विजः पुनः ।**
**विद्वानशेषमादद्यात् स सर्वस्य प्रभुर्यतः ॥ ३६ ॥**

---

* इहायं श्लोको न दृश्यते मिताक्षरायाम् । अत्र जातयः श्रेण्य इत्युभयत्र व्यत्ययेन प्रथमा बोध्या ।

स सर्वस्य प्रभुरित्यनेन प्रतिग्रहाद्यभावेऽपि स्वत्वसम्बन्धोऽस्तीति ज्ञापयति ॥ ३६ ॥

**इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्।**
**अनिवेदितविज्ञातो दाप्यस्तद्दण्डमेव च ॥ ३७ ॥**

इतरेण ब्राह्मणेनैवानभिरूपेणेत्यर्थः। गौतमीये त्वब्राह्मणविषय 'निध्यधिगमो राजधनम्' इति। यावान् निध्यधिगम, स सर्वो राजधनमित्यर्थः। तथाच 'न ब्राह्मणस्यानभिरूपस्य' इत्युक्त्वाह— 'अब्राह्मणोऽप्याख्याता षष्ठं लभेतेत्येके' इति। अनाख्याय तु गृह्णन् ब्राह्मणोऽपि सर्वमादाय शक्त्यनुरूपेण दण्ड्यः स्यात्। विद्वांस्तु 'स सर्वस्य प्रभुरि'ति वचनादनाख्यायापि गृह्णन् न दोषभागित्यर्थः ॥ ३७ ॥

यतश्च निध्यादिष्वस्वामिकेषु राज्ञ प्रभुत्व ततएव च —

**देयं चोरहृतं द्रव्यं राज्ञा जनपदाय तु।**

कस्मात्। यस्मात् —

**अददद्धि समाप्नोति किल्बिषं तस्य यस्य तत् ॥**

पालकत्वेन हि राजगामिता निध्यादे। पालकश्चेत् किमिति परकीय चोरादिहृत न प्रयच्छेदित्यभिप्राय। जनपदग्रहणं सर्वार्थम्। न ब्राह्मणायैवेत्यर्थः। तथाच बृहस्पति — 'चोरापहृत तु सर्वेभ्योऽन्विष्यार्पणीयम् अलाभे स्वकोशाद् वा अददच्चोरकिल्बिषी स्याद्' इत्यादि॥ ३८ ॥

इति सामान्यन्यायप्रकरणम्।

---

अथ ऋणादानप्रकरणम्।

एव तावत् सामान्येन न्यायस्वरूपमभिधायेदानीमृणादानादिव्यवहारस्थानक्रमेण विशेषत प्रस्तौति। तत्राद्यता मन्वादिभिः ऋणादानस्योक्ता। अतस्तदेव तावदुच्यते —

**अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके।**
**वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥ ३९ ॥**

यद्यप्यविशेषेणाशीतिभागोऽभिहित, तथापि ब्राह्मणस्यैवायम्। अन्येषां तु पादवृद्ध्या वृद्धिकल्पनम्। तथाच बृहस्पति — 'पादोप-

चयात् क्रमेणेतरेषाम्' इति । अन्यथा तु बन्धकरहिते द्विकात्रिकत्वं वृद्धेरित्यभिप्रायः । यच्चैतद् वृद्धिपरिमाणमुक्तम्, अत ऊर्ध्वं न गृह्णीयात् । न त्वर्वाग्ग्रहणे विरोधः ॥ ३९ ॥

अनयैव वृद्ध्या —

**सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा ।**
**वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा तथा ॥ ४० ॥**

पशुस्त्रीणां वृद्धिः फलभोग्यत्वेनार्पितानां या प्रसूतिः सा धनिकस्य स्यात् । तुशब्दात् सन्ततिरेव, नापरा वृद्धिरित्यर्थः । पशुस्त्रीणामिति पुंस्पशुसन्तानव्यवच्छेदार्थम् । अथवा पशूनां स्त्रीणां च दासीनामिति योज्यम् । इक्ष्वादिरसस्याष्टगुणा परा वृद्धिः । वस्त्राणां चतुर्गुणा, धान्यानां त्रिगुणा, हिरण्यादीनां द्विगुणा । तच्चाशीतिभागाद्यनुसारेण यावता कालेन हिरण्यं द्विगुणं, तावतैव धान्यादेः स्वपरिमाणयोगः ॥ ४० ॥

चातुर्वर्ण्यातिरेकेण तु —

**कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।**
**दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ ४१ ॥**

कान्तारगा अरण्यवासिनः, तद्गामिनो वा । सामुद्राः समुद्रव्यवहारिणः । ते प्रतिमासं दशकं विंशकं च शतं दद्युः । यद्वा कान्तारं वर्णापशदत्वं ये गच्छन्ति, ते कान्तारगाः, वर्णापशदा इत्यर्थः । सह मुद्रया नियमेन वर्तत इति समुद्रो वर्णाश्रमविषयः, तमतिलङ्घयन्ति ये, ते विपरीतलक्षणया वा सामुद्राः, विकर्मस्था इत्यर्थः । दद्युर्वा स्वपरिभाषितां वृद्धिं सर्वे ब्राह्मणादयोऽपि सर्वास्वपशदजातिष्वित्यर्थः । आपत्कल्पश्चायं ब्राह्मणादीनामित्येतद् वाशब्देन द्योतयति ॥ ४१ ॥

अनया च वृद्ध्या —

**प्रपन्नं साधयानोऽर्थं न वाच्यो नृपतेर्भवेत् ।**
**साध्यमानो नृपं गच्छेद् दाप्यो दण्ड्यश्च तद् धनम् ॥**

प्रपन्नं न्यायेन स्पष्टीकृतं यदृच्छया साधयानोऽर्थं न राज्ञा किञ्चिद् वक्तव्यः । यदि तु साध्यमानो राजन्यावेदयेत्, ततो दण्ड्यो दाप्यश्च राज्ञैव तद् धनं, धनिकायेति शेषः ॥ ४२ ॥

अथ यद्येकमर्णिनं युगपद् धनिनः प्रार्थयेयुः, तदा दाने क्रम —

**गृहीतानुक्रमाद् दद्याद् धनिनामधमर्णिकः ।**
**दद्यात्तु ब्राह्मणायाग्रे नृपाय तदनन्तरम् ॥ ४३ ॥**

ग्रहणानुक्रमादेवाधमर्णिकेनर्णमेकजातीयेभ्यो देयम् । जातिभेदे ब्राह्मणादिक्रमेणैव । तुशब्दात् तुल्यजातीयत्वेऽपि गुणाद्यपेक्ष क्रमं द्योतयति ॥ ४३ ॥

विप्रतिपन्नस्त्वृणिको राजन्यावेद्य साध्यः । तत्र च —

**राज्ञाधमर्णिको दाप्यः साधिताद् दशकं शतम् ।**
**पञ्चकं तु शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥ ४४ ॥**

ऋणिको राज्ञा सर्वं धनिकायार्थं दाप्यः । स्वयं च तस्मादेवाधमर्णिकाद् दशकं शतं गृह्णीयात् । धनिकोऽपि साधितार्थसङ्ख्यया पारितोषिकं राज्ञे पञ्चकं शतं दद्यात् । उत्तमर्णिको धनिकः । स्पष्टमन्यत् ॥ ४४ ॥

एवं तावत् समृद्धं दापयेत् । असमृद्धं तु —

**हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।**
**ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ४५ ॥**

स्पष्टार्थः श्लोकः ॥ ४५ ॥

यथोत्पत्त्या च ददत —

**दीयमानं न गृह्णीत प्रयुक्तं यः स्वकं धनम् ।**
**मध्यस्थस्थापितं तत् स्याद् वर्धते न ततः परम् ॥ ४६ ॥**

स्वकं धनमिति वचनादात्मनेपदयोगाच्च सन्निहितधनिकविषयमेतत् । अन्यथा तु वर्धत एवेत्यभिप्रायः ॥ ४६ ॥

ऋणिके सत्येव दानक्रम । तदभावे तु —

**रिक्थग्राह ऋणं दद्याद् योषिद्ग्राहस्तथैव च ।**
**पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥ ४७ ॥**

रिक्थानुसारित्वाद् ऋणानां रिक्थग्राहिण एव निर्विचिकित्सं दद्युः। निर्धनस्य तु नियोगाद् विना योऽस्य भार्यां सङ्गृह्णीयात्, स दद्यात्। एतच्चाब्राह्मणविषयम्। तद्योषितामेवान्यगामित्वसम्भवात्। तथैव चेति धनग्राहिवदविकल्पयन् योषिद्ग्राह्यपि दद्यादित्यर्थः। तदेव हि द्रव्यं द्रव्यहीनस्येत्यभिप्रायः। एतस्मादेव चातिदेशाद् रिक्थाभाव एव योषिद्ग्राहादयः प्रत्येतव्याः। पुत्रोऽनन्याश्रितद्रव्य इति। अन्यस्मिन् नाश्रित द्रव्यं यस्य असावनन्याश्रितद्रव्यः पुत्रो दद्यात्। न चेद् द्रव्यमन्येन गृहीतमित्यर्थः। नन्वद्रव्यस्यैव पुत्रो दद्यात्। ऋणस्य द्रव्यानुसारित्वादित्येतत् प्रागेव ज्ञापितम्। किमिदं पुनरनन्याश्रितद्रव्य इति। मैवम्। प्रागप्येतत्पदानुसारादेवं व्याख्यातम्। अतिदेशादभ्युच्चय एव। अथवा बहुपुत्रस्य यद्येकः पितृधनमितरानुमतो गृह्णीयात्, तदा धनग्राहिण इतरेषां च तुल्यमृणभाक्त्वं, यतोऽन्यैरपि स्वेच्छया स्वांशोत्सङ्कलनं कृतमितीमामाशङ्कां निरस्यति—पुत्रोऽनन्याश्रितद्रव्य इति। येनैव पुत्रेण द्रव्यमाश्रितं, स एव दद्यात्। नान्योऽनुमन्तापीत्यर्थः। अतएवच ज्ञायते भागशः पुत्रा ऋण दद्युरिति। ज्येष्ठो वा भूयो दद्याद्, रिक्थविभागे विशेषदर्शनाद् इत्येषा दिक्। सर्वथा धनप्राप्तिसम्बन्धानुसारेणैव ऋणसङ्गतिः। तथैवापुत्रस्याप्यन्ये रिक्थभाज एवर्णभाजः ऋणभाक्त्वमपि प्रतिपद्यन्त इत्यभिप्रायः। तथाच कात्यायनः—

"रिक्थहर्त्रा ऋणं देयं तदभावे च योषितः।
पुत्रैश्च तदभावेऽन्यै रिक्थभाग्भिर्यथाक्रमम्॥"

इति। बृहस्पतिश्च—'धनस्त्रीहारिपुत्राणां पूर्वाभावे यथोत्तरम् आधमर्ण्यं तदभावे क्रमशोऽन्येषां रिक्थभाजाम्' इति। यद्वा, अनन्याश्रितद्रव्य इत्यस्यान्योऽर्थः— पितरि मृते यस्य पैतृकं रिक्थं केनापि परिनिक्षिप्तादिहेतुनान्यस्मिन्नाश्रितं सोऽन्याश्रितद्रव्यः न तदप्राप्यैव पैतृकमृणं दद्यादित्यत्रैव हेतुः। पुत्रहीनस्य रिक्थिनः। अन्येऽपि तु भवन्तीति शेषः। यावदसौ न्याय्यमपि पैतृकं रिक्थं नाप्नुयात्, तावद् ऋणं किमिति दद्यादित्यभिप्रायः। सर्वाणि चैतानि स्मृत्यन्तरात् सम्यग् व्याख्यातानीत्यवगन्तव्यम्। यथाह कात्यायनः—

"यावच्च पैतृकं द्रव्यं विद्यमानं लभेत् सुतः।
सुसमृद्धोऽपि दाप्यः स्यात् तावन्नैवाधमर्णिकः॥"

इति॥ ४७॥

एवं तावत् पैतृकमृणं देयम्। भ्रात्रादिकृते तु कथम्। तत्रापि—

**अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत्।**
**दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि॥ ४८॥**

कुटुम्बे भवः कुटुम्बी भ्रात्रादिः। तेन कुटुम्बनिमित्तं यद् ऋणं कृतं, तत् सर्वैरेव तस्मिन् प्रेते प्रोषिते वा रिक्थभाग्भिरविभक्तैर्देयम्। विभक्तानामपि रिक्थभाजां सम्भवादविभक्तैरित्युक्तम्॥ ४८॥

अविभक्तत्वेऽपि तु—

**न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता।**
**दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा॥ ४९॥**

अस्यापवादः—

**गोपशौण्डिकशैलूषरजकव्याधयोषिताम्।**
**ऋणं दद्यात् पतिस्तासां यस्माद् वृत्तिस्तदाश्रया॥**

गोपो गोपालः। शौण्डिकः कल्पालः*। शैलूषो नटः। रजको वस्त्रनिर्णेजकः रञ्जकश्च। व्याधो लुब्धकः। एते स्त्रीकृतमप्यृणं दद्युः, स्त्रीप्रधानत्वादेतेषाम्। तथाच नारदः— 'तेषां तत्प्रत्यया वृत्तिः कुटुम्बं च तदाश्रयम्' इति। हेत्वभिधानं चान्येऽप्येवंप्रकारा उक्ता यथा स्युरिति॥ ५०॥

पुरुषमात्राविशेषेण तु—

**प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत् कृतम्।**
**स्वयं कृतमृणं वापि नान्यत् स्त्री दातुमर्हति॥ ५१॥**

दम्पत्योरविभक्तधनत्वेऽप्यभ्युपेतादित्र्यतिरेकेण स्त्रिया न देयमित्यभिप्रायः। कुतः पुनः स्त्रीणां स्वातन्त्र्येणर्णप्रसङ्गः, कुतो वा दानमिति।

---

* कल्यपाल इत्यभिधानेषु दृश्यते।

स्त्रीणामपि हि स्वातन्त्र्येण धन वक्ष्यति 'भर्त्रा प्रीतेन यद् दत्तम्' इत्यत्र । स्वशरीरोपभोगार्थं स्त्रीणामृणप्रसङ्गोऽविरुद्धः । अत्रैव स्त्रीणामृणसम्बन्धः ॥ ५१ ॥

अन्यत्रापितु—

**पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपिवा ।**
**पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥ ५२ ॥**

पितरि मृते प्रोषिते वा विंशतिवर्षाणि प्रतीक्ष्य, व्यसनाभिभूते वा पुत्रादिभिर्ऋण देयम् । अपिवेति च प्रकारार्थम् । अन्यस्मिन्नप्येवप्रकारे व्याध्यादावसमाधेयेन्द्रियवैकल्ये हेतावुत्पन्न इत्यर्थः । तथा निह्नवे यदि च पिता विप्रतिपन्न. तदा साक्षिभावित पुत्रादिभिरेवर्णं देयम् । सोऽपि हि प्रकृतिविपर्ययादसामर्थ्येनायोग्य एव । ऋणवत्चास्ववस्थासु पैतृक रिक्थमपि पुत्रादिभिर्ग्राह्यमित्यवगन्तव्यम् ॥ ५२ ॥

अस्यापवाद —

**सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् ।**
**वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ५३ ॥**

स्वस्थपितृकृतमस्वस्थे तस्मिन् रिक्थभाग्भिर्देयम् । न पुनरस्वस्थकृतमपीत्यभिप्राय. । अस्वास्थ्यप्रकारप्रपञ्चार्थश्चाय श्लोकः । दण्डशुल्कावशिष्टक तु वचनाददेयम् । सुरा पीत्वा यन्मूल्य न दत्त, यच्च कामसयोगेन स्त्रीणा प्रतिज्ञात, द्यूतहारित दण्डायवशिष्ट वृथादान च तथैवेह यस्य फल नामुत्रेति निश्चित, तत् पुत्रादिभिरदेयम् । शुल्क पथि राजभाव्य दानम् । अशास्त्रचोदित वृथादानम् । स्पष्टमन्यत् ॥ ५३ ॥

ऋणस्य प्रतिनिर्यातनप्रकार उक्त । कोनुखल्ल ऋणमर्हतीतेत्येतन्निरूपयितुमाह —

**भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।**
**प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥५४॥**

भ्रात्रादीनामविभक्ताना परस्परमृणसाक्ष्यप्रातिभाव्यानि न विद्यन्ते । तेनैव च विभक्ताविभक्तसशये साक्ष्यादिभिर्निर्णय. । दम्पतिवचन चात्र

विभागासम्भवादन्येषामपि रिक्थभाजामविभक्तानां साक्ष्याद्यभावप्रदर्शनार्थम् ॥ ५४ ॥

क पुनर्विषये प्रातिभाव्य—

**दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ।**
**आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ॥ ५५ ॥**

अपसर्पणाशङ्कायां दर्शनार्थम्, अविश्वासे विश्वासार्थं, सिद्धार्थप्रदानेन च प्रातिभाव्यम् । विधीयत इति विचिकित्सानिवृत्त्यर्थम् । अगृहीतं ददतो दापयतो वा विचिकित्सा मा भूत् । तत्र दर्शनप्रत्ययप्रतिभुवौ वितथे विसंवादिते कार्यिणि दाप्यौ स्वयं, न तु तत्पुत्राः । इतरस्य तु दानप्रतिभुवः पुत्रा अपीत्यभिप्राय । अपिशब्दोऽन्येषामपि रिक्थभाजां प्राप्त्यर्थः । ननु च दर्शनप्रतिभूरपि प्रत्ययार्थ एव । नैवम् । प्रत्यायितस्यापि निमित्तान्तराद् भवत्येवादर्शनम् । यद्वा मृते कार्यिणि दातृत्वार्थं दर्शनप्रातिभाव्यवचनं द्रष्टव्यम् । तथाच बृहस्पतिः — 'उपस्थाप्यविपत्तावुपस्थाप्यस्य पुनः प्रतिभूर्दाप्य' इति । एतच्चार्थार्पणेनोपविश्वास्य यत्र दर्शनप्रातिभाव्यं क्रियते, तद्विषयमेव । तथाच नारदः—

"ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वा विवादिते ।
प्रतिभूस्तदृणं दद्यादनुपस्थापयंस्तथा ॥"

इति । यदोपस्थानं सम्भवतीति शेषः । मृतस्य चोपस्थापनासम्भवाज्जीवदधिकार इति नारदाभिप्रायः । विकल्पप्रसङ्गे विषयव्यवस्थोक्तैव ॥५५॥

पूर्वश्लोकार्थमेव स्पष्टयति—

**दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।**
**न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥ ५६ ॥**

श्लोकान्तरारम्भसामर्थ्यान्मृतवचनाच्च जीवतः पुत्रैः शक्तितोऽन्वेषणं कार्यमित्यभिप्रायः ॥ ५६ ॥

एकस्यैव तु यदा कार्यिण —

**बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।**
**एकच्छायास्थितेष्वेषु धनिकस्य यथारुचि ॥ ५७ ॥**

बहवः प्रतिभुवो यदि स्युरंशतो धनं दद्युः । एकच्छायास्थितेष्वेषु धनिकस्येच्छया व्यस्तसमस्तत्वेन कृत्स्नं धनं दापयेत् । एकच्छायाकाः समानग्राहकत्वेन प्रतिभुवः न द्रव्योपभोक्तारः । एतदेव चैष्विति सर्वनाम्ना स्पष्टीकृतम् ॥ ५७ ॥

द्रव्यानुपभोक्तृत्वाच —

**प्रतिभूर्दापितो यत्र प्रकाशं धनिने धनम् ।**
**द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद् धनम् ॥ ५८ ॥**

प्रकाशवचनाद् यत् प्रतिभुवो हस्तनिर्गतं तदेव द्विगुणं देयम् । न तु धनिकाय यावद् देयमित्यभिप्रायः । हिरण्यविषयश्चायं श्लोकः ॥५८॥

पश्वादौ तु—

**ससन्तति स्त्रीपशव्यं धान्यं त्रिगुणमेव तु ।**
**वस्त्रं चतुर्गुणं देयं रसश्चाष्टगुणस्तथा ॥ ५९ ॥**

तथाशब्दः सत्काराद्यर्थः । यस्य यावती परा वृद्धिरुक्ता, तस्य तद्वृद्धियुक्तं ससत्कारं प्रतिभुवे देयमित्यर्थः ॥ ५९ ॥

विस्रम्भहेतू द्वावाधिप्रतिभुवौ । तथाचोक्त — 'विस्रम्भहेतू द्वावत्र प्रतिभूराधिरेव चे'ति । तयोः प्रतिभूर्व्याख्यातः । इदानीं क्रमप्राप्तत्वादाधिरुच्यते —

**आधिः प्रणश्येद् द्विगुणे धने यदि न मोक्ष्यते ।**
**काले कालकृतो नश्येत् फलभोग्यो न नश्यति ॥**

विश्वासार्थं हिरण्यादि यदाधीयते स आधिः । स द्विविधः गोप्यश्चागोप्यश्च । तत्र गोप्यः कदाचित् कालव्यवस्थया क्रियते इयता कालेनामोक्षयतो ममायं प्रणङ्क्ष्यतीति । कदाचित्तु संमुग्धः स प्रणश्येद् द्विगुणे धने यदि न दीयेत इतरोऽपि कालव्यवस्थया कृतस्तत एव प्रणश्यतीत्यत आह— 'फलभोग्यो न नश्यती'ति । फलं भुज्यते यस्य स फलभोग्य आधि । फल वृद्धिः । स्पष्टमन्यत् ॥ ६० ॥

किञ्च —

**गोप्याधिभोगिनो वृद्धिः सोपकारेऽथ भाविते ।**
**नष्टो देयो विनष्टो वा दैवराजकृताद्दते ॥ ६१ ॥**

गोप्याधिभोगिनो वृद्धिः प्रणश्येदिति शेषः । सोपकारेऽप्येत्यपिशब्दार्थोऽथशब्दः । सोपकारेऽप्याधौ वृद्धिर्न स्यादित्यर्थः । वाहदोहादियुक्तो गवादिः सोपकार । अविकाराशङ्कया पृथग्वचनम् । भावित इति भोक्राभ्युपगते साक्षिभिर्वा भुक्तोऽनेनायमित्येव भाविते । नष्ट आधिर्विनष्टो वा दैविकाद् अग्न्याद्युपद्रवाद् राजकीयाद्वा विना अधमर्णिकाय देयः । स्वरूपहानं विनाशः । अपहारस्तु नाश । स्पष्टमन्यत् ॥ ६१ ॥

ऋणिकार्पितस्य—

**आधेः स्वीकरणात् सिद्धी रक्ष्यमाणोऽप्यसारताम् ।**
**यातश्चेदन्य आधेयो धनं वा धनिने वहेत् ॥ ६२ ॥**

समर्पितस्यापि स्वीकरणेनोपभोग्यत्वसिद्धिः स्यात् । यत्नेनापि तु रक्ष्यमाणोऽप्यसारतां यातश्चेद् यदि पाल्यमानोऽप्यसारीभूतः, ततोऽन्य आधेयः स्यात् । यद्वा अस्मिन्नवसरे धनभाग् वा धनी भवेत् । धनिने वा धनं सोदयं देयम्, आध्यन्तरं वा कार्यमित्यभिप्रायः ॥ ६२ ॥

यदात्वाधिरपुष्यमाण एव, स तु बन्धकमात्रतया क्रियते, तदा—

**चरित्रबन्धककृतं सवृद्धं दापयेद् धनम् ।**
**सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ ६३ ॥**

चरित्रबन्धककृतं सोदयमर्थं दाप्यः । नाधित्यागमात्रेण मोच्य , इत्यर्थः । अन्यत्राप्येवमेव विश्वासव्यवहारे सत्यङ्काराय च यद् द्रव्यमर्पितं, तद् विसंवदता द्विगुणं प्रत्यर्पणीयम् । सत्यङ्कारिणस्तु विसंवादतस्तद्धानिरेव । यथाह कात्यायनः —

"सत्यङ्कारविसंवादे द्विगुणं प्रतिदापयेत् ।
अकुर्वतस्तु तद्धानिः सत्यङ्कारप्रयोजनम् ॥"

इति ॥ ६३ ॥

यदात्वृणिक सोदयं द्रव्यमादायोपस्थित , तदा —

**उपस्थितस्य मोक्तव्य आधिर्दण्ड्योऽन्यथा भवेत् ।**
**प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात् ॥ ६४ ॥**

सोऽयं द्रव्यमादायोपस्थितस्याधिमनुत्सृजन् प्रयोक्ता दण्ड्यः स्यात् । यदा त्वसन्निहितो धनप्रयोक्ता, तदा तस्मिन् प्रयोजकेऽसति तत्कुटुम्बे समर्प्य द्रव्यमाधिमाप्नुयात् निस्संशयं गृह्णीयादित्यर्थः । एवं धनिककुले द्रव्यं *समर्पयित्वाधिर्ग्राह्यः ॥ ६४ ॥

**तत्कालकृतमूल्यो वा तत्र तिष्ठदवृद्धिकः ।**
**विना धारणकाद् वापि विक्रीणीत ससाक्षिकम् ॥ ६५ ॥**

तत्काले कृतं मूल्यं यस्य स तत्कालकृतमूल्यः । यदि मूल्याद्धासः स्यात्, तदा तत्कालकृत यन्मूल्यं, तद् धनिकेन देयम् । इत्येतया परिभाषया वृद्धिशून्यो धनिकहस्ते तिष्ठेत् । यदा तु धनं द्विगुणीभूतम्, ऋणिकश्चासन्निहित । तदा तत्काले श्रावयित्वाधिं निर्विकल्पं गृह्णीयात् । विनैव धारणकात् ससाक्षिकं विक्रीणीतेत्यर्थः ॥ ६५ ॥

वृद्ध्यर्थं प्रथमदिवसादारभ्य प्रयोक्त्रा भुज्यमानेऽपि —

**यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।**
**मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ ६६ ॥**

धने प्रविष्टे सत्याधिर्मोच्यः । न त्वर्वागेव द्विगुणद्रव्याप्रदानलक्षणोऽस्य प्रणाशः स्यादित्यभिप्रायः ॥ ६६ ॥

इति ऋणादानप्रकरणम् ।

---

अथ उपनिधिप्रकरणम् ।

आध्यनन्तर विश्वासार्पितत्वसामान्यादुपनिधिरुच्यते —

**भाजनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।**
**द्रव्यं तदौपनिधिकं**

उच्यत इति शेषः ॥

**प्रतिदेयं तथैव तत् ॥ ६७ ॥**

---

* 'समर्प्य' इति लेख्ये 'समर्पयित्वा' इति लेखन लेखरप्रमादकृतं नूनम् ।

क्वापि स्थितमनिर्दिष्टस्वरूपं कस्यचित् परिग्रहे एवमुक्त्वा यत् समर्प्यते 'त्वयेदं रक्षणीयमि'ति । हस्तशब्दः परिग्रहार्थः । न्यस्य क्षिप्त्वेत्यर्थः । तद् औपनिधिकसंज्ञकं यथा गृहीतं तथैव प्रत्यर्पणीयमित्यर्थः ॥ ६७ ॥

यत्तु द्रव्यमुपनिहितं —

**न दाप्योऽपहृतं तत्तु राजदैविकतस्करैः ।**
**दोषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम् ॥ ६८ ॥**

राजाद्यपहृतमनपराधी न दाप्यः । दोषश्चेन्मार्गिते प्रयाचिते अदत्ते अनर्पिते तस्करापहारादिलक्षणो दोषश्चेद् दाप्योऽपहृतं, तत्समं च राज्ञे दाप्यो दण्डम् । ऋज्वन्यत् ॥ ६८ ॥

स्वाम्यननुज्ञयौपनिधिकं द्रव्यम् —

**आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तच्चापि सोदयम् ।**
**याचितान्वाहितन्यासनिक्षेपेष्वप्ययं विधिः ॥ ६९ ॥**

याचितं कार्यार्थमाहृतं परकीयमुपस्करादि । अन्वाहितम् आध्यसामर्थ्ये यदन्यदर्पितम् । प्रतिग्रहप्रसङ्गेन वा यदलब्धमेव पात्रादि उपकरणत्वेनाहृतम् । न्यासो निर्दिष्टस्वरूपं द्रव्यं, यद् रक्षणार्थं समर्पितम् । निक्षेपोऽन्यहस्त एव यदन्यस्मै देयत्वेन निक्षिप्तम् । एतेष्वपि याचितादिष्वयमेवौपनिधिको विधिर्द्रष्टव्यः ॥ ६९ ॥

इति उपनिधिप्रकरणम् ।

---

### अथ साक्षिप्रकरणम् ।

सर्वत्र ऋणादानादौ व्यक्तिहेतवो लिखितं साक्षिणो भुक्तिश्चेति । तत्र भुक्तिः स्थावरादौ । अन्यत्र तु लिखितं साक्षिणश्च । तथा च नारदः — 'लिखितं साक्षिणश्चैव प्रमाणे व्यक्तिकारके' इति सामान्यविषयं चाह । तेनार्थप्रत्यर्थिभ्यां साक्षिभिर्लिखितेन वा स्वपक्षसिद्धिः कार्येत्युक्ते विभागशस्तु साधनानि वक्तव्यानि च तत्र वक्तव्यम् । तत्र साक्षिणस्तावदुच्यन्ते —

**तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।**
**धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ ७० ॥**

**त्र्यवराः साक्षिणो ज्ञेयाः पञ्चयज्ञक्रियारताः ।**
**यथाजाति यथावर्णं सर्वे सर्वासु वा पुनः ॥ ७१ ॥**

तपःप्रभृतयो यथोपलब्धवादित्वे हेतवः । कथम् । यो हि निष्कारण परलोकसाधनैकप्रवणस्तपोदानादिप्रवृत्तोऽतिशयिततरपुरुषप्रज्ञः, स कथमिवात्मनो दृष्टादृष्टविरुद्धं विमार्गाश्रयिणः परस्यार्थेऽनृतं ब्रूयादित्यभिप्रायः । तपोदानादिभिर्ये धर्मप्रधानतया सत्यवादिनः, ये वा कुलीनाः स्वकुलकलङ्कभित्या, ये वा पुत्रिणो धनिनश्च तद्विनाशभीत्या, प्रकृत्या ऋजवः उपलब्धातिरिक्तवचनाशक्त्यानन्यथावादिनः, ते त्र्यवराः साक्षिणो ज्ञेयाः । त्रयो येषामवरास्ते त्र्यवराः, त्रिप्रभृतय इत्यर्थः । साक्षिणो ज्ञेया इति प्रत्यक्षमूलत्वाभिप्रायम् । निपुणतः प्रत्यक्षादिभिर्लक्षणतः साक्षिणो निरूपणीया इत्यर्थः । पञ्चयज्ञक्रियारता इति । *आन्वाहिकाशक्यपरिहारहिंसानिष्कृत्यर्थं हि पञ्चयज्ञक्रियाविधानम् । तद् ये ह्यशक्यपरिहारामपि हिंसामपाकर्तुं प्रवृत्ताः, ते कथमिव स्वाभिप्रायेणान्यायवर्तिजनवदसद्वादेषु प्रवर्तेरन्नित्यभिप्रायः । एवं स्मृत्यन्तराण्यपि साक्षिप्रपञ्चविषयाणि व्याख्येयानि । यत्तु नारदेनैकादशविधं साक्ष्यं कृताकृतत्वभेदेनोक्तं, तत् सौहृदान्मुग्धजनव्युत्पत्त्यर्थम् । तच्च तस्मादेवावगन्तव्यम् । यथाजातीति । मनुष्यस्त्रीजातिभेदाभिप्रायं वा जातिवचनम् । यथोक्तं नारदेन — 'श्रेणीषु श्रेणिपुरुषा' इत्यादि । यथावर्णं च ब्राह्मणादीनां च साक्ष्यम् । सर्वे वा सर्वासु जातिषु जातिशब्दाभिधेयत्वाद् वर्णेऽपि स्त्रीलिङ्गाविरोधः । पुनःशब्दोऽवसरापेक्षया । साक्ष्यन्तराभावे पुनर्वक्ष्यमाणकार्यापेक्षया वा सर्वे सर्वेषां, यथा 'सर्वः सङ्ग्रहणे साक्षी'ति ॥ ७०, ७१ ॥

उक्तन्यायविरोध तु —

**स्त्रीवृद्धबालकितवमत्तोन्मत्ताभिशस्तकाः ।**
**रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः ॥ ७२ ॥**

---

* अन्वहं भवा आन्वाहिकी अशक्यपरिहारा अवर्जनीया च या हिंसा तन्निष्कृत्यर्थम् । तत्रान्वाहिकेत्युभयपदवृद्धयेऽनुशतिकादित्व कल्प्यम् । 'आन्वहिके'ति वा पाठ कल्प्य. ।

**पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः ।**
**साहसी दृष्टदोषश्च निर्धूतश्चेत्यसाक्षिणः ॥ ७३ ॥**

येषां तु दृष्टमदृष्टं वा यथाभूतार्थदर्शने दृष्टार्थाभिधायित्वे च कारणं न स्याद्, विपर्यये वा स्यात्, ते न साक्षिण इत्यर्थः। सर्वे चाभोज्यप्रकरणोक्ता अग्निहीनादयः साक्ष्यानर्हा द्रष्टव्याः। तदुपलक्षणार्थैवात्र स्त्री। यथोक्तम्—'अवीरायाश्च योषितः' इति। सैव चाप्यत्राप्यभिप्रेता। सवीरायास्तु तदधिष्ठितायाः साक्ष्यं क्वचिदस्त्येव। यथोक्तं स्वयम्भुवा—'स्त्रीणां साक्ष्यं स्त्रियः कुर्युरि'ति। रङ्गावतारी मल्लः। स्पष्टमन्यत्। अभोज्यान्नानां तु साक्ष्यानधिकारं न्यायसिद्धमेवाभिप्रेत्य नारदेनोक्तं—

"नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः ।
न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः ॥"

इत्युक्त्वा ततः,

"दासनैकृतिकश्रान्तवृद्धस्त्रीबालधिक्कृताः ।"

इति। एवं सर्वेऽभोज्यान्ना अनुक्रान्ताः। प्रमाणान्तरमूलं चासाक्षित्वं प्रपञ्चितम्। यथा—

"बालोऽज्ञानादसत्या स्त्री पापाभ्यासाच्च कूटकृत्।
विब्रूयुर्बान्धवाः स्नेहाद् वैरनिर्यातनादरिः ॥"

इति। वचनादपि क्वचित्। यथाह—

"श्रोत्रियाद्या वचनतः स्तेनाद्या दोषदर्शनाद्"

इति। सर्वथानया दिशा न्यायागमाभ्यां साक्ष्यमसाक्ष्यं च प्रपञ्चनीयम् ॥ ७२, ७३ ॥

देशकालाद्यपेक्षया पुनः—

**उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।**
**सर्वः सङ्ग्रहणे साक्षी दण्डपारुष्यसाहसे ॥ ७४ ॥**

अर्थिप्रत्यर्थिभ्यामनुमतोऽतिशयगुणवानेकोऽपि साक्षी स्यात्। अपिशब्दाद् द्वावपि। साक्षिपुनर्वचनं च समक्षदर्शनादेव सङ्ग्रहणादौ साक्ष्यं यथा स्यात्। अविशेषाभिधानेऽपि भूतार्थोपलम्भवचनाशक्तेर्बालादयो न स्युः। तथाच नारदः—

"असाक्षिणोऽपि येऽत्रोक्ता दासनैकृतिकादयः ।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥
साहसेषु तु सर्वेषु स्तेयसङ्ग्रहणादिषु ।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥"

इत्युक्त्वाह —

"एषामपि न बालः स्यान्नैको न स्त्री न कूटकृत् ।
न बान्धवो न चारातिः कुर्युस्ते साक्ष्यमन्यथा ॥"

इति । अतो बालादिवर्जं द्विप्रभृतिसाक्ष्यमविरुद्धम् । यद्वा नैक इति नायं सङ्ख्यानिषेधः, पुरुषमात्रप्रतिषेध एवायम् । यथैवैका स्त्री निषिद्धा 'योषितं चावीरामि'ति, तथैव स्त्रीरहित एकः पुमाननर्ह इति व्याख्येयम् । अतश्च व्यवराणामेव सङ्ग्रहणादौ साक्ष्यमित्यवसेयम् । न्यायमूलत्वादेव चात्यर्थमनुमानकुशलतयायमपि नारदीयः प्रतिषेधोऽतिक्रामयितव्यः । तथाच स्वायम्भुवं —

"स्त्रियाप्यसम्भवे कार्यं बालेन स्थविरेण वा ।
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥"

इति । अनुमानानुसारिणी च निश्चयावगतिस्तत्रैवोक्ता —

"बालवृद्धातुराणां च साक्ष्येषु वदतानृतम् ।
जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा ॥

इति । एवमन्यत्रापि व्यवहारप्रकरणे न्यायागमविवेकः प्रपञ्चनीयः ॥७४॥

ननु एवमपि सङ्कटे साक्ष्यव्यवहारे यदि न कश्चित् साक्ष्यं ब्रूयात्, तत्राह — तत्र चाह —

**अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम् ।**
**राज्ञा सर्वं प्रदाप्यः षट्चत्वारिंशत्तमेऽहनि ॥ ७५ ॥**

यद्यप्यरोगस्त्रिपक्षेणापि साक्ष्यं न ब्रूयात्, ततो राज्ञा सदशबन्धकमृणं प्रमथ्य दाप्यः । सह दशबन्धकेन सदशबन्धकम् । दशांशाभ्यधिकमित्यर्थः । ऋणग्रहणं सर्वविवादोपलक्षणार्थम् ॥ ७५ ॥

किञ्च —

**न ब्रवीति हि यः साक्ष्यं जानन्नपि नराधमः ।**
**स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥ ७६ ॥**

जानन्नपीति पदं नियोगस्याविवक्षां दर्शयति । तथाच स्वयम्भूः—

"यत्रानिबद्धो वीक्षेत शृणुयाद् वापि कश्चन ।
पृष्टस्तत्रापि तद् ब्रूयाद् यथादृष्टं यथाश्रुतम् ॥"

इति । यतश्चानभिधाने प्रत्यवायः, ततो जानता तत्कालनियुक्तेनापि वक्तव्यमित्यर्थः ॥ ७६ ॥

कूटसाक्षिणो मिथ्यावादिन । तेषां यत् पाप, तद् प्रकरणान्तरेण दर्शयति—

**साक्षिणः श्रावयेद् वादिप्रतिवादिसमीपगान् ।**
**ये पातककृतां लोका महापातकिनां तथा ॥ ७७ ॥**
**अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् ।**
**तान् सर्वान् समवाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ७८ ॥**

स्मृत्यन्तरान्न्यायाच प्राङ्मुखानुदङ्मुखान् वा प्रयतान् पूर्वाह्णे प्रणिहितैकाग्रानर्थिप्रत्यर्थिसभ्यसमक्षं तथाभूत एव प्राड्विवाकोऽपि हि 'ये पातककृतां लोका' इति श्रावयेत् । स्पष्टमन्यत् ॥ ७७, ७८ ॥

एवं श्रावयित्वा तत्स्वरूपापेक्षया यथार्हं पृच्छेत् । धर्मानभिज्ञांस्त्वेवं प्रतिबोधयेत्—

**यत् त्वया सुकृतं किञ्चिज्जन्मान्तरशतैः कृतम् ।**
**तत् सर्वं तस्य जानीहि पराजयसि यं मृषा ॥ ७९ ॥**

एवमुक्ते यथानुभवं वदता —

**साक्षिद्वैधे प्रभूतानां समेषु गुणिनां तथा ।**
**गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ॥ ८० ॥**

एवंच परीक्षितवचना —

**यस्याहुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।**
**अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥ ८१ ॥**

प्रतिज्ञामित्यविशेषवचनात् कृत्स्नप्रतिज्ञातार्थसत्यत्व एव जयो विज्ञेयः । अन्यथा तु पराजय एव स्यात् । तथाच नारदः —

"देशकालवयोद्रव्यप्रमाणाकृतिजातिषु ।
यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि चान्यथा ॥"

इति । बह्वर्थप्रतिज्ञायां च,

"न्यूनमभ्यधिकं चार्थं प्रब्रूयुर्यत्र साक्षिणः ।
तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः ॥"

इति । अत कृत्स्नप्रतिज्ञातार्थसत्यस्य एव अवो जयः । न्यायमूलत्वाच्च व्यवहारस्मृतेः ॥ ८१ ॥

**उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।**
**द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥ ८२ ॥**

एवच कौटसाक्ष्ये साक्षिणा व्यवहारकर्त्रा वा कूटव्यवहारकर्तृत्वे स्वीकृते निर्विकल्प राज्ञा —

**'पृथक् पृथग् दण्डनीयाः कूटकृत्साक्षिणस्तथा ।**
**विवादद्विगुणं द्रव्यं विवास्यो ब्राह्मणो भवेत् ॥ ८३ ॥**

कूटव्यवहारकर्ता कूटकृद् दण्ड्यः । एकैकशश्च पृथक पृथक् साक्षी विवादद्विगुण द्रव्यं दाप्य. । ब्राह्मणस्त्वददद् दण्ड समग्रधन एव च राष्ट्राद् विवास्यः । तथाच स्वायम्भुव —

"न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम् ।
राष्ट्रात् त्वेन बहिष्कुर्यात् समग्रधनमक्षतम् ॥"

इति । वधप्रसङ्गे (दण्डप्रधानेन॑दण्डाप्रदाने) वा समग्रधन एव राष्ट्राद् बहिष्कार्य । न तु शारीरो निग्रहोऽन्यथा वा ब्राह्मणस्य कार्य इत्यर्थः ॥ ८३ ॥

उत्तरसाक्षी तु प्रशस्यता मुमूर्षुणा वा —

**यः साक्ष्यं श्रावितोऽन्येन निह्नुते तत् तमोवृतः ।**
**स दाप्योऽष्टगुणं द्रव्यं ब्राह्मणं तु विवासयेत् ॥ ८४ ॥**

अतोऽवश्य वक्तव्य साक्ष्य सत्यं च ॥ ८४ ॥

अस्यापवाद

**वर्णिनां तु वधो यत्र तत्र साक्ष्यनृतं वदेत् ।**
**तत्पावनाय कर्तव्यश्चरुः सारस्वतो द्विजैः ॥ ८५ ॥**

शूद्रेण तु दानादय इत्यभिप्रायः। चतुर्ष्वपि भवा ब्राह्मणादयो वर्णिनः। तेषां यत्र साक्षिणि सत्याभिधातरि वधः स्यात्, तत्र साक्ष्यनृतं वक्तुमर्हति। सदोषमपि गुणभूयस्त्वादनृतवचनमभ्युपगम्यते। तथाच गौतमः — 'नानृतवचने दोषो जीवनं चेत् तदधीनम्' इत्युक्त्वाह — न तु पापीयसो जीवनम्' इति। अदोषवचनं चाल्पदोषाभिप्रायं प्रायश्चित्तविधानसामर्थ्याद् द्रष्टव्यम्। एतच्च न्यायप्राप्तमेव मन्दबुद्धिप्रतिबोधनाय। प्रायश्चित्तविधानाच्चावश्यकर्तव्यतात्रोच्यते। अन्यत्रापि गुरुलघुत्वे समीक्ष्य पापस्याप्यनुष्ठानं प्रायश्चित्तं च तदपनुत्तये कार्यं यथा स्यात्। धर्मान्तरोपयोगित्वाच्चैतत् कामकृतमप्यकामकृतमेव द्रष्टव्यम्। स्वायम्भुवे तु —

"वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम्।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम्॥
कूष्माण्डैर्वापि जुहुयाद् घृतमग्नौ यथाविधि।
* उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा॥"

इति। एवं प्रायश्चित्तचतुष्टयं यदाम्नातं, तत् तन्निर्देशानुसाराच्छूद्रादिक्रमेण यथावर्णं क्रमशो द्रष्टव्यम्। शूद्रस्वरूपापेक्षया च चरोः सकृद्वृत्तिरावृत्तिर्यथा स्यादिति चरुभिरित्युक्तम्। अस्मादेव च प्रायश्चित्तानृतानुज्ञानाद् राज्ञो नैयोगिकं वध्यानुपेक्षणमिति गम्यते। साक्षिणस्तु प्रायश्चित्तोपदेशमात्राद् राजकीयविनयानर्हा इत्यवसेयम्॥ ८९॥

इति साक्षिप्रकरणम्।

---

अथ लिखितप्रकरणम्।

साक्ष्यनन्तरं व्यक्तिप्रमाणकत्वाविशेषाल्लिखितमुच्यते —

**यःकश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम्।**
**लेख्यं वा साक्षिमत् कार्यं तस्मिन् धनिकपूर्वकम्॥**

---

* "उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम॥ इति वारुणी।
(ऋग्वे० १ । ३ । अ २ । व १९ । ऋ १५)

यःकश्चिद् ऋणाधिक्रयप्रतिग्रहविक्रयादिरर्थो निष्णातः परिशुद्ध-स्वरूपसङ्ख्यापरिमाणवृद्ध्यवध्यादिकः धनिकर्णिकादीनां स्वरुच्या परस्परमवस्थिते तस्मिन्नव्यभिचारार्थं लेख्यं वोक्तलक्षणसाक्षियुक्तं भाविसन्देहापनोदनक्षमं कार्यम् । तस्य चायं क्रमः । धनिकपूर्वकं स्याद् ऋणिकापेक्षया च धनिकस्य पूर्वत्वं न कालाद्यपेक्षया ॥ ८६ ॥

ततश्चाय क्रम —

*समामासतदर्धाहोवासजातिसगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनाम्ना च चिह्नितम् ॥ ८७ ॥
समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥ ८८ ॥
साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति तेऽसमाः ॥ ८९ ॥

अत्राहममुकः साक्षीत्येवं लिखेयुः । असमाः त्रय इत्यर्थः । अन्ये तु समा इति छेदभ्रान्त्या द्वावित्याहुः । तत्तु बहुवचनविरोधादयुक्तम् । न च चतुरभिप्राय तदिति युक्तम् । 'लेख्ये तु परमास्त्रयः' इति वचनात् ॥ ८७—८९ ॥

अलिपिज्ञ ऋणी यः स्यात् स्वमतं लेखयेत् तु सः ।
साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपगः ॥ ९० ॥

ऋणी साक्षी वा योऽलिपिज्ञः, स सर्वसाक्षिसमक्ष लेखकेन साक्षिणा वान्येन-स्वमतं साक्ष्यं वा लेखयेत् ॥ ९० ॥

ततः —

उभयाभ्यर्थितेनेदं मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकस्त्वन्ततो लिखेत् ॥ ९१ ॥

अन्तत इति वचनं प्राधान्यादधिकनिवृत्त्यर्थम् ॥ ९१ ॥

---

* स्वमांऽन्.।

किं पुनः स्वहस्तारोपणे प्रयोजनम् । उच्यते—

**विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।**
**तत्प्रमाणं स्मृतं सर्वं बलोपधिकृतादृते ॥ ९२ ॥**

ऋणिकसम्प्रतिपत्त्यर्थं हि साक्षिणः । स चेत् स्वहस्तेनापि सम्प्रतिपद्येत, मन्दं साक्षिप्रयोजनं मन्यते । एतच्चोपगतादिविषयं द्रष्टव्यम् ॥ ९२ ॥

निर्व्याजप्रमाणशुद्ध च—

**ऋणं लेख्यगतं देयं पुरुषैस्त्रिभिरेव तु ।**
**आधिस्तु भुज्यते तावद् यावत् तन्न प्रदीयते ॥९३॥**

यद् ऋणं लेख्यगतं लेख्यारूढमित्यर्थः । तद् देयं पुरुषैस्त्रिभिरेव कर्तृतत्पुत्रपौत्रैरित्यर्थः । तुशब्दो व्यवच्छेदार्थः । तथाच नारदः —

"क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् ।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ॥"

इति । अस्यापवादः— आधिस्तु भुज्यते, न चतुर्थान्निवर्तते । किमनवधिक एव । नहि । तावत्, यावत् तद् देयं न प्रदीयते ॥ ९३ ॥

यदा ऋणिकदेशाद् देशान्तरे लेख्य, प्रमाणतो वा भ्रष्ट, तदा यः प्रकारः तमाह—

**देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।**
**छिन्ने भिन्ने तथा दग्धे लेख्यमन्यत्तु कारयेत् ॥९४॥**

राजा, परस्परं वा धनिकर्णिकावित्यभिप्रायः । लेख्यदोषो यत्र प्रमादाल्लिख्यमाने सञ्जातः, तद् दुर्लेख्यम् । उन्मृष्टं भग्नाक्षरम् । छिन्नं मूषिकादिभिः । भिन्नं पाटितम् । तथाशब्दः प्रकारार्थः । स्पष्टमन्यत् ॥ ९४ ॥

लेख्यस्वहस्ते चेद् व्यभिचाराशङ्का, कोऽत्र निर्णयहेतु । उच्यते—

**सन्दिग्धार्थविशुद्ध्यर्थं स्वहस्तलिखितं तु यत् ।**
**युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥ ९५ ॥**

सन्दिग्धश्चासावर्थश्चेति सन्दिग्धार्थः, तद्विशुद्धिरर्थः प्रयोजनं यस्य लेख्यस्य तत् तथोक्तम् । सन्दिग्धार्थनिर्णये तदेव प्रमाणमित्यर्थः । तच्च स्वहस्तलिखितं यदि स्यात्, ततः शुद्धमेव । संशये तु युक्त्यादिभिर्नि-

र्णयः कार्यः । तस्मिन् काले देवदत्तस्य द्रव्यप्रयोजनमासीद्, यज्ञदत्तश्च तदा स्वधनं प्रयुक्तवान् इत्यादिका युक्तिः । समानदेशस्थौ तदोभावप्यभूताम् इति प्राप्तिः । अप्रतारकश्चासौ लेखकः प्रसिद्धः, तदीया लेख्या इति क्रिया । चिह्नं मुद्रालिपिविशेषादिकम् । सम्बन्धो बलोपध्याद्यभावः । आगमो लेख्यलक्षणयोगः । कूटसाक्षित्वाद्यसम्भवो हेतुः । एवं युक्त्यादिभिर्यत् परीक्षितं लेख्यं, तत् प्रमाणमित्यवसेयम् ॥ ९५ ॥

एवञ्च न्यायागमपरिनिष्ठितप्रामाण्यस्य—

**लेख्यस्य पृष्ठेऽभिलिखेत् प्रविष्टमधमर्णिकात् ।**
**धनी वोपगतं दद्यात् स्वहस्तपरिचिह्नितम् ॥ ९६ ॥**

यन्मूल्यात् कलान्तराद्वा दद्यात्, तत् तस्यैव पत्रस्य पृष्ठे लेखयेत् । धनिको वान्यत् स्वहस्तपरिचिह्नितमृणिकायोपगतं दद्यात् । अन्यथा दत्तमप्यदत्तं स्यात् ॥ ९६ ॥

निरशेषं तु—

**दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत् ।**
**साक्षिमच्च भवेद्‌ यत्तु दातव्यं तत् ससाक्षिकम् ॥**

ऋणं दत्त्वा लेख्यं पाटयेत् । शुद्ध्यै शुद्ध्यर्थं निरपवादत्वायेति । यद्वा अन्यत्तु कारयेद् अन्यदेव वा लेख्यं कार्यम् । ऋणिकस्येच्छया विकल्पः । लेख्यव्यतिरेकेणापि तु ससाक्षिकं यद् गृहीतं, तत् ससाक्षिकमेव दातव्यं परिशोधनीयत्वात् । सर्वथा लेख्यवत्यर्थे लेख्यान्तराद् विशुद्धिः, साक्षिमति च साक्ष्यन्तरात् । यथैवार्थो गृहीतः, तथैव प्रतिदेय इत्यर्थः ॥ ९७ ॥

इति लिखितप्रकरणम् ।

---

## अथ दिव्यप्रकरणम् ।

लिखिताद्यभावे वा परिशुद्ध्यसामर्थ्ये सति—

**तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।**
**महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ ९८ ॥**

महाभियोगेष्विति वदन्नमहाभियोगेषु शपथप्राप्तिं दर्शयति । तथाच नारदः —

"सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।
देवतापितृपादांश्च दत्तानि सुकृतानि च ॥
इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे ।
पातके त्वभियोगे वा विधिर्दिव्यः प्रकीर्तितः ॥",

इति । महाभियोगे महापातकाद्यभियोगे । स्पष्टमन्यत् ॥ ९८ ॥

किमभियोक्तावश्यं शिरो वर्तनीयम् । एष तावन्न्यायः —

**रुच्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः ।**
**विनापि शीर्षकात् कुर्याद् राजद्रोहेऽथ पातके ॥९९॥**

इच्छयैवाभियोज्याभियोक्त्रोरन्यतरो दिव्यं कुर्यात् । अन्यतरः शिरो वर्तयेत् । यद्यभियुक्तोऽर्थोऽन्यथा स्यात्, ततो ममेदं धन सर्वस्वं वा यद्वेदमङ्गं शिरो वा गच्छेदित्येवमवष्टम्भेन दिव्यक्रियाप्रयोक्ता शिरोवर्तीत्युच्यते । राजद्रोहमहापातकाशङ्कायां त्वशीर्षकमपि स्यादेव । स्पष्टमन्यत् ॥ ९९ ॥

महापातकाद्याशङ्काभावे तु—

**नासहस्रपरं फालं न तुला न विषं तथा ।**
**नृपार्थेष्वभियोगेषु वहेयुः शुचयः सदा ॥ १०० ॥**

परशब्दोऽर्थवचनः, यथा ब्राह्मणपरमस्य द्रव्यम् । ब्राह्मणार्थमित्यर्थः । सहस्रादर्वाङ् न फालादीनि स्युः सहस्रादर्वागेषामप्रवृत्तिः । नृपार्थेषु त्वल्पाभियोगेष्वपि वहेयुः कुर्युरित्यर्थः । शुचयः सदेति । ये हि नित्य शुचयो दैवादाशङ्किताः, त एव कुर्युः । न तु सम्भाविताशुचित्वा अपीत्यर्थः ॥ १०० ॥

एवञ्च सति—

**सहस्रार्धे तुलादीनि कोशमल्पेऽपि कारयेत् ।**
**पञ्चाशद् दापयेच्छुद्धमशुद्धो दण्डभाग् भवेत् ॥१०१॥**

स्पष्टार्थः श्लोकः ॥ १०१ ॥

किं सद्य एव दिव्यक्रिया । नेत्याह । किं तर्हि—

**सचेलस्नातमाहूय सूर्योदय उपोषितम् ।**
**कारयेत् सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ १०२ ॥**

नृपादिसन्निधिवचनं कार्यगौरवप्रतिपत्त्यर्थम् ॥ १०२ ॥

न चाविशेषेण सर्वेषां सर्वदिव्यानि स्युः । किं तर्हि—

**तुला स्त्रीबालवृद्धार्तपङ्गुब्राह्मणरोगिणाम् ।**
**अग्निर्जलं वाशूद्रस्य यवाः सप्त विषस्य वा ॥ १०३ ॥**

स्त्र्यादिग्रहणं क्षत्रियाद्यर्थम् । अग्निर्जलं वाशूद्रस्येति । अशूद्रस्याग्निर्जलं वा स्यात् । व्यवस्थितविकल्पश्चायम् । क्षत्रियस्याग्निः, वैश्यस्य च जलं, शूद्रस्य तु यवाः सप्त विषस्य वा जलं वा अग्निर्वेत्यर्थः । यद्वा अग्निर्जलं वाशूद्रस्य क्षत्रियादिजातस्येत्यर्थः । ततश्च क्षत्रियादीनामग्न्यादिष्विच्छाविकल्पः । स्मृत्यन्तरात्तु देशकालादिव्यवस्थाप्रपञ्चकल्पना ॥ १०३ ॥

अधिकृतश्च प्रागुक्तनियमवान् कृतस्वस्त्ययनमङ्गलः स्मृत्यन्तरोक्तलक्षणतुलां प्रत्युपस्थितः —

**तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।**
**प्रतिमानसमीभूतो लेखां कृत्वावतारितः ॥ १०४ ॥**

वक्ष्यमाणं कर्म कुर्यादिति शेषः । अभियुक्तो व्यवहारेऽभिशस्तः । स तुलामारूढः प्रतिमानसमत्वेन तुलाधारणविद्वद्भिर्यदा लक्षितः, तदास्यास्मिन् प्रदेशे इदमङ्गमित्येव चिह्नार्थं लेखां कृत्वावतारणीयः । तुलाधारणविद्वांसः स्वर्णकारादयः । प्रतिमानम् अपरभागस्थितशिक्यस्थं पांसुलोष्टपूर्णं पिटकम् । स्पष्टमन्यत् ॥ १०४ ॥

अवतीर्य चोदङ्मुखः स्थित्वा —

**त्वं तुले! सत्यधामासि पुरा देवैर्विनिर्मिता ।**
**तत् सत्यं वद कल्याणि! संशयान्मां विमोचय ॥ १०५ ॥**

यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय।
शुद्धश्चेद् गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ १०६॥

स यदि तुलित ऊर्ध्वं गच्छेत्, तदा शुद्धिः। अन्यथा तु विपर्ययः। यत्तु नारदीये —

"तुलितो यदि वर्धेत विशुद्धः स्यान्न सशयः ।
समो वा हीयमानो वा न विशुद्धो भवेत् तत. ॥"

इत्यर्थगत्या शुद्धिवचन, तत् तदुक्ताभिमन्त्रणविषय द्रष्टव्यम् ॥ १०५, १०६ ॥

तप्ताय पिण्डधारणशास्त्र —

करो विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत्।
सप्ताश्वत्थस्य पत्राणि तावत् सूत्रेण वेष्टयेत् ॥ १०७ ॥

कृतव्रीहिविमर्दनस्य तप्तलोहहारिणो दाढर्यीकरणार्थ हस्तौ कृतव्रणप्रदेशौ लेखाकरणेन च लक्षयित्वा सप्ताश्वत्थस्य पत्राण्यन्तर्धानाय हस्तयोराधाय सप्तकृत्वः सूत्रेण वेष्टयित्वा वक्ष्यमाणलोहपिण्डार्पणनिपुण लोहकार गृहीततप्तलोहपिण्ड मण्डलकस्थितस्य समीपे प्राङ्मुख कुर्यात् ॥ १०७ ॥

इतरोऽपि प्रागुक्तनियमवानुदङ्मुखोऽस्य पिण्डमादधान कृताञ्जलिर्ब्रूयात् —

त्वमेव सर्वभूतानामन्तश्चरसि पावक!।
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे! मम ॥ १०८ ॥

लोहकारोऽपि,

तस्येत्युक्तवतो लोहं पञ्चाशत्पलिकं समम्।
अग्निवर्णं न्यसेत् क्षिप्रं हस्तयोरुभयोरपि ॥ १०९ ॥

स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्।
षोडशाङ्गुलिकं ज्ञेयं मण्डलं तावदन्तरम् ॥ ११० ॥

**मुक्ताग्निर्मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।**
**अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ॥ १११ ॥**

कृतलक्षणौ हस्तौ दर्शयित्वा पुनश्च मृदितव्रीहिरप्यलक्षितदाहः पराजयव्यञ्जकललाटस्वेदादिलक्षणहीनः कुहकादिशङ्काविनिर्मुक्तः शुद्धिमाप्नुयात् । दाहसंशयान्तरापिण्डपतनयोस्तु पुनस्त्रिरात्रे सप्तरात्रे वा स्मृत्यन्तरानुसारात् करणमवसेयम् । स्पष्टमन्यत् ॥ १०९-१११ ॥

प्रागुक्तनियमवानेव नृपब्राह्मणाधिष्ठितमुदकं गत्वा तत —

**सत्येन माभिरक्षस्व वरुणेत्यभिशाप्य कम् ।**
**नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥ ११२ ॥**

'सत्येन माभिरक्षस्व वरुणे'त्येवमन्त्रेनोदकमभिमन्त्र्य नाभिप्रमाणोदकस्थस्यातिदृढस्य बलिनः पुरुषस्योरू हस्ताभ्यां गृहीत्वोदकं प्रविशेत् । पुनर्जलग्रहणमादरार्थम् ॥ ११२ ॥

मध्यमेन च धानुष्केण धनुषा च मध्यमेन निमज्जत —

**समकालमिषुं मुक्तमानयेद् यो जवी नरः ।**
**गतेऽन्यस्मिन् निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥ ११३ ॥**

अनिमग्नस्यैवेषुत्रये क्षिप्ते मध्यमेषुसमीपे जविष्ठं पुरुषमास्थाप्य मज्जनसमकालमेवोदकसमीपादन्यो जविष्ठस्तमिषुदेशं प्रधावन् गच्छेत् । गते च तस्मिन् पूर्वोपस्थित इषुमादाय तथैव प्रत्यागतो यद्युदकस्थित मग्नाङ्गमदेशान्तरस्थं च पश्येत्, ततः शुद्धिमाप्नुयादिति कृतव्याख्यानमेवैतत् ॥ ११३ ॥

प्रागुक्तनियमवानेव ब्रह्मादिनृपसभासमीपस्थ. काल्यवस्थया स्मृत्यन्तरोक्तपरिमाणं विषमादायाभिमन्त्रयेत् —

**त्वं विष ! ब्रह्मणः पुत्र ! सत्यधर्मव्यवस्थित ! ।**
**त्रायस्वास्मान्माभिशापात् सत्येन भव मेऽमृतम् ॥ ११४ ॥**

**एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।**
**यस्य वेगैर्विना जीर्णं शुद्धिं तस्य विनिर्दिशेत् ॥ ११५ ॥**

एवमिति प्रकारार्थम्, मन्त्रानधिकृतस्यानभिज्ञस्य वायमेवार्थः पर्यायवचनैर्वाच्यो यथा स्यात् । शार्ङ्गवचनं मन्दवीर्यविषनिवृत्त्यर्थम् । हैमवचनं कालकूटादिव्युदासार्थम् । स्पष्टमन्यत् ॥ ११५ ॥

प्रयोजनाल्पत्वे स्त्र्या वा पूर्वोक्तनियमवानेव नृपब्राह्मणसन्निधौ गत्वा —

**देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।**
**संश्राव्य पाययेत् तस्माज्जलात्तु प्रसृतित्रयम् ॥ ११६ ॥**

देवानुग्रानादित्यप्रभृतीन् सम्यग् विधानेनाभिमुख्यकरणायार्चयित्वा तदीयं स्नानोदकमादायाभियुक्तं संश्राव्य 'मैवं मस्थाः यथान्योदकपानमभिप्रेतवैतृष्ण्यादिनिमित्तमिति । एतद्धि मिथ्यावादिनं जन्मान्तरशतैरपि दारिद्र्यकुष्ठाद्युपद्रवैः प्रतिकुर्वाणं दुर्निवारं भविष्यति इत्येवमालोच्य सत्यावष्टम्भमन्तरेण मा कुर्वि'त्युक्त्वा प्रसृतित्रयं पाययेत् ॥ ११६ ॥

कथमत्र व्यक्तिरित्यत आह —

**आ चतुर्दशमादह्नो यस्य नो राजदैविकम् ।**
**व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥ ११७ ॥**

तात्कालिकं ललाटस्वेदादि द्विसप्तरात्रेण वा दैवराजकं यद्युग्रं व्यसनं नोत्पद्यते, ततो निस्संशयं शुद्धिरवसेया । एतच्च सर्वदिव्यशेषतया [1]लोकार्थमवसेयम् । तात्कालिकं यदि दाहादि ललाटस्वेदादि वा न स्यात्, यदि चतुर्दशरात्रादर्वाग् दैवराजकव्यसनानुत्पाद, ततो निस्संशयं शुद्धिः, अन्यथा तु विपर्यय इत्यभिप्रायः । तथाच स्वायम्भुवं —

"यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च ।
न चार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचि ॥"

---

१ श्लोकार्थोऽवसेय इति क्वचित् कोशे पाठ ।

इति। 'न चार्तिमृच्छति क्षिप्रमि'त्येतत् पूर्वेणादाहादिना समुचीयते। चशब्दसामर्थ्याच्च ललाटस्वेदाद्यपि। कुहकादिप्रतिबन्धेनाप्यदाहादिसम्भवः। अतो न चार्तिमृच्छतीति द्वितीयव्यञ्जकोपादानमविरुद्धम्। नन्वियं दिव्यस्मृतिरव्यक्तमूलेव लक्ष्यते, यतो न प्रत्यक्षादेरयं विषयः, दिव्याभिधानादेव। अकार्यत्वाच्च नागमस्य। नह्यनेनेदं भवतीत्यागमस्य विषयः। कथं तर्हि यागात् स्वर्ग इति। स्वर्गकामस्य कर्तव्यतोपदेशादसाधनत्वे च तद्व्याघाताद् यागादेः साधनत्वमवगम्य यागात् स्वर्ग इत्युच्यते। अत्रापि तर्हि प्रायश्चित्तवत् संशोधनार्थो दिव्योपदेशः स्यात्। सत्यम्। यद्यनुष्ठानमात्रोपदेशः स्यात्। इह तु तप्तायःपिण्डेनादग्धस्यापरं निर्दोषत्वज्ञापनमुक्तम्। तदपेशलमिव स्यात्। उच्यते। द्वे ह्येते चोदने। स्तेयादिशङ्कितस्य अभ्युपगच्छतः प्रायश्चित्तराजदण्डादिप्रसङ्गः। अनभ्युपगमे तु धटाद्यनुष्ठानमिति। अत्र चोर्ध्वगमनादौ सत्यदुष्टव्यवहारः कार्य इति। अतश्चार्थादिदमापद्येत—ऊर्ध्वगमनाद् विना न शुद्धिरिति। अत एवोपलभ्यव्यञ्जकाभावेऽपि शपथाद्यनुष्ठानमात्रादेवादुष्टव्यवहारसिद्धिः। तस्य त्वामुष्मिको दोषः स्थित एव। तथाचोक्तं—'दिव्यानीह विशुद्धये' इति। इहैव नामुत्रेत्यर्थः। कुहकादिप्रतिबन्धेऽपि तर्हि शुद्धिप्रसङ्गः, न, प्रतिषेधात्। यथाह बृहस्पतिः—

> "त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम्।
> निरुद्धं चारयेत् तत्र कुहकाशङ्कया नृपः॥"

इति। अतः कुहकादिरहित एवोर्ध्वगमनादौ शुद्धव्यवहारः, कुहकादिभावाशङ्कायां वा दैवराजकव्यसनानुवृत्तौ। पारमार्थि(के? क्यौ) तु शुद्ध्यशुद्धी क्वोपयुज्येते। अतो वेदमूलत्वमविरुद्धम्। तथाचाम्नायश्छान्दोग्यः— 'पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत्। परशुमस्मै तपतेति। स यदि तस्य कर्ता भवति तत एवात्मानमनृतं कुरुते। सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति। स दह्यते। अथ हन्यते। अथ यद्यकर्ता भवति तत एव सत्यमात्मानं कुरुते। स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यते। अथ मुच्यते' इति। एवमादीन्यन्यान्यपि तुलादिदिव्यप्रयोगमूलान्यन्वि-

प्योदाहरणीयानि। अत्र च शङ्कितस्य परशुग्रहणेनादग्धस्य मोचनमदुष्टव्यवहारकरणं च विधीयते। अन्यत्तु दाहादिप्रासमनूद्यते। अतोऽप्युक्तप्रकारं वेदमूलत्वमविरुद्धम्। अस्तु वा श्रवणानुसार्येव वैदिकत्वम्। स्वरूपेऽप्येवमादौ प्रामाण्यमुपनिषद्वाक्यानामिवाविरुद्धमेव। यथाचैतदेवं तथा वक्ष्यामः। एवं सति व्यासाद्युक्तेतिहासदर्शनानुसारेणाधिष्ठातृत्वेन तुलाद्यन्तर्गतलोकपालादिजगत्साक्षीभूतदेवताकल्पनमप्यविरुद्धम्। तथाच मान्त्रवर्णिक्यो देवताः

'त्वमेव सर्वभूतानामन्तश्चरसि पावक!'

इत्युक्ताः। एवं स्वायम्भुवेऽपि च देवताधिष्ठानमेव सत्यधर्मानुसारि प्रदर्शितम्। यथाह—

"वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा।
नाग्निर्ददाह रोमापि सत्येन जगतः स्पशः॥"

इति। स्पशश्चरः, साक्षीत्यर्थः, अथवा, अनुमानमूलत्वमेवास्तु। निर्दोषस्य दोषतया शङ्कितस्याग्निरदाहकः अभ्रकादेरिव दाहानुपलम्भनात्। अनादिकालिकाव्यभिचारिव्यवहारप्रवृत्त्यवासान्वयव्यतिरेकशुद्धानुमानं वह्न्यभाव इव निर्धूमतानुमानमप्रतिहतमेव। अतोऽप्युपपन्नं दिव्यस्मृतेः समूलत्वमित्येषा दिक्। नन्वेवंसति भाविन्यर्थे दिव्यानि न स्युः। दोषतदभावयोरसिद्धत्वात्। को वान्यथाह। कथं तर्हि भाविन्यर्थे कोशपानादिव्यवहारः। सत्यसङ्कल्पप्रकटीकरणमात्रं तद् व्यभिचरतः शिष्टनिर्गर्हणसिद्ध्यर्थम्। सङ्कल्पितान्यथाकरणात्त्वनृतदोषः स्थित एवेत्यलं प्रसक्त्या॥ ११७॥

इति दिव्यप्रकरणम्।

अथ दायविभागप्रकरणम्।

एवं व्यवहारस्य प्रकारान्तरं दर्शयति—

**विभागं चेत् पिता कुर्यादिच्छया विभजेत् सुतान्।**
**ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः॥ ११८॥**

यदा ह्याश्रमान्तरं प्रविविक्षुः पुत्राणां वा गुणवत्तां धर्मप्रवृत्तिमिच्छन्नर्थं कौतूहलाद्वा स्वद्रव्येण पुत्रान् विभक्तुं मनो करोतीत्यर्थः। तदे-

१ [illegible] २ [illegible] ३ [illegible]

च्छया यावद् यस्मै रोचेत दातुं, तावदेव तस्मै दद्यात्, न पुत्रेच्छया। न पुत्रैः पिता विभाग-विशेषनियमं वा कारयितव्य इत्यर्थः। अतएवच ज्येष्ठं वा श्रेष्ठभागेनौचित्याद् योजयेद् ऊनं वाभ्यधिकं वा। अथवा सर्वान् समांशिनः कुर्यात्। तत्र तथैव स्याद्, यथैव पितुरिच्छेति पुत्राभयो विधिरनवद्यः॥ ११८॥

स्नेहगुणाद्यनपेक्ष माध्यस्थ्येनैव —

**यदि दद्यात् समानंशान् कार्याः पत्न्यः समांशिकाः।**
**न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा॥११९॥**

समांशदानपक्षे प्रमीतभर्तृकाः पुत्रपौत्रपत्न्यः स्वपत्न्यश्च भर्तृभागार्हाः कार्याः, यासां भर्त्रा श्वशुरेण वा स्वयं वा स्त्रीधनं न दत्तम्। यद्वा यासां स्त्रीधनं न दत्तं, ताः स्त्रीधनसमांशिकाः कार्याः। 'द्विसहस्रपरो दायः स्त्रियाः' इति स्मृत्यन्तरात् तावन्मात्रं प्रभूतधनत्वेऽपि देयम्। स्वल्पेऽपि समांशत्वेनैव। अन्ये त्वनपत्यानां नियोगाभिमुखत्वेन समांशतामाहुः। तत्तु नियोगासम्भवादयुक्तम्। सम्भवन्नियोगानां तु नियोगांशत्वमेव युक्तम्॥ ११९॥

पितृद्रव्यानपेक्षस्यैव स्वकुटुम्बभरणादौ धर्मबाधे च —

**शक्तस्यानीहमानस्य किञ्चिद् दत्त्वा पृथक्क्रिया।**
**ऊनाधिकविभक्तानां धर्मः पितृकृतः स्मृतः॥ १२०॥**

अनीहमानस्यापि कालान्तराविरोधाय यत्किञ्चित् सम्मानमात्रं कृत्वा पृथक्करणं कार्यम्। नन्वेवमपि यद्यसौ ब्रूयाद् — न मया कृत्स्नो भागः समालब्धः, स मे दीयतामिति। अतोऽस्त्येव विरोधः। नास्तीति ब्रूमः। कस्माद्, यस्माद् ऊनाधिकविभक्तानां पित्रा पुत्राणामिति शेषः। धर्मः पितृकृतः स्मृत इति। विभागधर्मः पित्रा यः कृतः, स एव स्मृतो विहित इत्यर्थः। तस्मादविरोधः॥ १२०॥

स्वातन्त्र्येण[1] तु —

**विभजेयुः सुताः पित्रोरूर्ध्वं रिक्थमृणं समम्।**
**मातुर्दुहितरः शेषमृणात् ताभ्य ऋतेऽन्वयः॥१२१॥**

---

१. 'णैव तु' ग. पा०.

ऋणमपनीयावशिष्टं विभजेयुः पुत्राः पित्रोरूर्ध्वं रिक्थम्। सुतग्रहणमौरसप्रतिपत्त्यर्थम्। माता च पिता च पितरौ। तयोः पित्रोरूर्ध्वं मृतयोरित्यर्थः। पितुरूर्ध्वं च पैतृकं मातुरूर्ध्वं च मातृकम्। रिक्थाभावेऽप्यृणमशांशतो दद्युः। ऋणदाने च साम्यवचनाद् विभागेऽपि साम्यमित्यवगम्यते। यत्तु स्मृत्यन्तरे—

'ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद् वरम्'

इत्यादिविभागवैषम्यमवगम्यते। तद् भ्रातॄणां परस्परानुमत्या विज्ञेयम्। अन्ये तु गुणापेक्षं विभागवैषम्यव्याख्याना विषयं वर्णयन्ति कर्मार्थतां च तस्य मन्यमानाः। तत्तु पुरुषार्थत्वाद् द्रव्यस्यायुक्तमेवेति गम्यते। यानि त्वग्निहोत्राद्यकरणे द्रव्यापहरणादिवचनानि, तान्यन्यायवर्तिपुरुषप्रशासनार्थानि। न तु द्रव्यस्य क्रत्वर्थताप्रतिपादकानि। अतो भ्रातॄणामेवेच्छया विभागवैषम्यम्। यत्त्वन्यायवर्तिना निरंशत्वं गौतमेनोक्तं, तदप्येकेषामिति वचनात् परमतत्वेनैवानुशासनमात्रप्रयोजनतया व्याख्येयमित्येषा दिक्। यथा च पितुः पुत्राः समांशतो धनभागिनः, तथैव मातुर्दुहितरः। किन्तु शेषमृणाद् विभजेरन्। न त्वधनाया अप्यृणं दद्युः। पुत्राणां तु मातृसनन्द[illegible] नास्त्येव। न नास्ति। किन्तु ताभ्यो दुहितृभ्य ऋते अभावे। अन्वय पुत्रा इत्यर्थः। अन्ये तु ताभ्यो दुहितृभ्य ऋते तदीय एवान्वय इति वर्णयन्ति। तत्त्वयुक्तम्। "न जामये तान्वो रिक्थमारैक्" इति मन्त्रवर्णात्। पितृधनाभिप्रायं तदिति चेत्। न। "यदी मातरो जनयन्त वह्निम्" इति मातृसम्बन्धवचनात्। यदि मातरः स्त्रियः पुत्रं च जनयन्ति। वह्निर्वहनयोग्यः पुत्रः। तत्र पुत्र एव दायादो न स्त्र्यपीत्यर्थः। अस्मादेव च वह्निवचनादुद्वहासमर्थस्य क्लीबादेर्द्रव्याभावसिद्धिः। दुहितृसद्भावेऽपि तर्हि पुत्राणामेवास्तु। न। "मातुर्दुहितरः" इति स्मृतेः, स्मृत्यन्तरान्मन्त्रवर्णानुसाराच्च दुहितृस्वरूपार्थत्वेवैलतस्तदभावे पुत्रगाम्येवेति स्थितम्॥ १२१॥

यद्दायवताता नैवन—

पितृद्रव्याविनाशेन यदन्यत् स्वयमार्जितम्।
मैत्रमौद्वाहिकं चैव दायादानां न तद् भवेत्॥ १२२॥

---

* 'न जामये [illegible]
[illegible]।'
ऋ मन्त्र (मण्ड. ३, अ. १, अ. १ व ५ ऋ. २)

पितृधनानुपघातेन यदन्यदार्जितं तथा मैत्रमौद्वाहिकं च, तदार्जयितुरेव, न दायादान्तराणामपि स्यात् । मित्रादवाप्तं मैत्रम् । विवाहे लब्ध-मौद्वाहिकम् । पितृद्रव्योपघातेनापि मैत्राद्यविभाज्यमेव, आरम्भसामर्थ्यात् अन्ये तु मैत्रादिकमेव पितृधनानुपघातार्जितमविभाज्यमिच्छन्ति, सामान्यविशेषोपसंहृतिन्यायात् । तत्तु सामान्यद्रव्यसाध्यत्वाद् विवाहस्यायुक्त-मेव ॥ १२२ ॥

मैत्रादिव्यतिरेकेण तु —

**सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।**
**अनेकपितृकाणां तु पितृतो भागकल्पना ॥ १२३ ॥**

सामान्येनार्थेन समुत्थानमार्जनं प्राप्तिर्यस्य द्रव्यस्य तत् तथोक्तं तस्मिन् सामान्यार्थसमुत्थाने द्रव्ये । विभागस्त्विति । अवधारणार्थस्तु-शब्दः । अस्त्येव विभाग इत्यर्थः । स चैकस्य शरीरादिक्लेशातिशये सत्यपि सम एव स्मृतः विहित इत्यर्थः । किं सर्वदायादानां सम एव विभागः । न । भ्रातॄणामेव समः स्यात् । अनेकपितृकाणां तु पितृव्यपुत्रादीनां पितृतः पितृविभागाद् भागकल्पना । अर्थाद् भ्रातॄणां पूर्वं समो विभागः । कृते विभागेऽन्यतमस्य पुत्रास्तद्भागमशांशतो विभजेयुरित्यर्थः । पितृद्वारं हि पौत्राणां पैतामहद्रव्यभाक्त्वं न पितृवत् स्वत एवेत्यभिप्रायः ॥ १२३ ॥

अथ किं विभागात् स्वत्वम्, उत स्व एव सति विभाग इति । विभागात् स्वत्वमित्याहु । अन्यथा जातपुत्रस्याधानादिश्रुतिर्द्रव्यसाधारण्यात् स्वत्वाभावसम्भवाद् विरुध्यते, इच्छया वा विभागस्मृतिर्न स्यात् । न च तदनुष्ठानादनुष्ठानमिति युक्तं, जातमात्रस्यानुष्ठानाशक्ते । इत्याद्याशङ्कामपाकर्तुमाह —

**भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।**
**तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ॥ १२४ ॥**

भूर्या पितामहोपात्ता निबन्धो वा अक्षयनिधिः अन्यदेव वा द्रव्यं, तत्र पितापुत्रयोस्तुल्यं प्रभुत्वं स्यात् प्रत्येतव्यं निर्विचिकित्समेवेत्यर्थः । उभयोरित्यविभक्तस्यैव स्वत्वज्ञापनार्थम् । भूम्यादे[1] पृथगुपादानमविभाज्यत्वात्

---

१. 'जामेन पृ' ग. पाठ.

स्थायित्वाद्वा द्रष्टव्यम् । यत्त्वनुष्ठानविरोधादि चोद्यम्, तत् स्वयमार्जितेनापि तत्सिद्धेर्न किञ्चित् । तदानीमेव वा विभज्यानुष्ठानमस्तु । या त्विच्छया विभागस्मृतिः सा स्वयमुपात्तद्रव्यवतो द्रष्टव्या । अतः स्वत्वे सति विभाग इति सिद्धम् ॥ १२४ ॥

यस्माच्च स्वत्वे सति विभाग, तस्मात् —

**विभक्तेऽपि सवर्णायाः पुत्रो जातो विभागभाक् ।**
**दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ १२५ ॥**

अनिवृत्तरजस्कायां मातरि विभजतां विभागोत्तरकाल यदि पुत्रो जायेत, तस्यापि द्रव्यसम्बन्धोऽस्त्येव । तस्मात् स्वत्वे सत्येव इत्युक्तम् । यदि हि विभागेन स्वत्वसम्बन्धोऽभविष्यत्, ततो विभक्तजस्य द्रव्यसम्बन्धो नोपापत्स्यत । अस्मिन् पुनरस्त्येव तस्यापि द्रव्यसम्बन्धः । अतः स्वत्व इति । अतोऽस्य श्लोकस्तद्विवेकायारभ्यते ।

विभक्तेऽपि सवर्णायाः पुत्रो जातो विभागभाक् ।

स्यादिति शेषः । अविशेषेऽपि पित्र्यविभागभागित्यवसेयम् । यथाह गौतमः — 'विभक्तजः पित्र्यम्' इति । विभक्तजोऽपि च पितुर्निर्धनत्वे भ्रातृद्रव्यादेव दृश्यमानात् तस्य विभक्तजस्य विभागः स्यात् । अय तु विशेषः — आयव्ययविवर्जितात् । यत् स्वयमार्जित, स आयः । यत् तस्माद् द्रव्यमुपक्षीण, स व्ययः । आयव्ययविशुद्ध विभक्तजेन सह समं विभजनीयमित्यर्थः ॥ १२५ ॥

एतदेव स्पष्टयति —

**क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत यः ।**
**दायादेभ्यो न तद् दद्याद् विद्यया लब्धमेव च ॥ १२६ ॥**

पित्रादिक्रमागत द्रव्य विभागकाले विच्छिन्नभोग विभक्तः सन्नितरदायादानुमतः स्वशक्त्या यदभ्युद्धरेत् स्वीकुर्यात्, स तद् विभक्तजदायादेभ्यः पुनर्विभागकाले न दद्यात् । विद्यया च यल्लब्धम् । चशब्दान्मैत्रादिक च । आयव्ययविशोधितादिति चोक्तमेव ॥ १२६ ॥

किंच —

**पितृभ्यां यस्य यद् दत्तं तत् तस्यैव धनं भवेत् ।**

जीवतां विभक्तानां विभक्तजविभागे तावदयं विधिः ।

**पितुरूर्ध्वं विभजतां माताप्यंशं समाप्नुयात् ॥ १२७ ॥**

अविद्यमानस्त्रीधना मातापि विभागं पुत्रसममाप्नुयात् । मातृशब्दश्चायं पितृसम्बन्धाविशेषात् तद्भार्यामात्रवचनो द्रष्टव्यः ॥ १२७ ॥

किंच —

**असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।**
**भगिन्यश्च निजादंशाद् दत्त्वांशं तु तुरीयकम् ॥ १२८ ॥**

संस्कारः परिणयनम् । तत् पूर्वसंस्कृतैरसंस्कृतानां भ्रातॄणां कार्यम् । तादर्थ्येन वा द्रव्यमपनीयावशिष्टं विभजनीयम् । अस्मादेव च ज्ञायते— साधारणद्रव्याद् विवाहनिर्वृत्तिः । सोपक्षयमौद्वाहिकमार्जयितॄणामेव द्रव्यमिति । अतः साधारणादेव भ्रातरः संस्कार्या भगिन्यश्च । यदि स्वल्पं द्रव्यं वा न स्यात्, ततो निजादंशाच्चतुर्थमशं भगिन्यर्थमपनीयान्यत् समं विभजनीयम् ॥ १२८ ॥

एवं सवर्णानां समो विभागः । नानावर्णास्तु —

**चतुस्त्रिद्व्येकभागीना वर्णशो ब्राह्मणात्मजाः ।**
**क्षत्रजास्त्रिद्व्येकभागीना वैश्यजौ द्व्येकभागिनौ ॥ १२९ ॥**

ब्राह्मणस्य चतसृषु ब्राह्मण्यादिषु-यदा पुत्राः स्युः, तदा द्रव्यं दशधा षोढा त्रेधा च विभज्य ब्राह्मणादिक्रमेण चतुस्त्रिद्व्येकभाक्त्वं स्यात् । चत्वारो ब्राह्मणस्यांशाः, क्षत्रियस्य त्रयः, वैश्यस्य द्वौ, एकः शूद्रापुत्रस्य । एवं क्षत्रियजातानाम् । त्रयः क्षत्रियस्य, वैश्यस्य द्वौ, एकः शूद्रस्य । एवं वैश्यजातस्य । वैश्यस्य द्वौ, एकः शूद्रापुत्रस्येति व्यवस्था ।

---

१ 'भागीना' इत्यस्य स्थाने 'भागा.' इति पाठ्य भाति ।

ननु च द्विजातीनां शूद्रापुत्रो नास्त्येव, तद्विवाहप्रतिषेधात् । सत्यम् । स्मृत्यर्थभ्रान्त्या तु प्रवृत्तावयं विभागधर्म इत्यभिप्रायः ॥ १२९ ॥

असमांशभाक्त्वेऽपि तु—

**अन्योन्यापाहृतं द्रव्यं विभक्तैर्यत्र दृश्यते ।**
**तत् पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ १३० ॥**

स्थितिवचनं निर्विचिकित्सं समविभागप्रतिपत्त्यर्थम् ॥ १३० ॥

औरसानामयं विभागधर्मः । तदभावे तु—

**अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।**
**उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ १३१ ॥**

ननुच ब्राह्मणस्य नियोगप्रतिषेधादनारभ्योऽयम् । क्षत्रियाद्यर्थस्तर्हि भविष्यति । नच ब्राह्मणस्य नियोगप्रतिषेध, किं तर्हि, ब्राह्मण्याः । तेनान्योत्पादितो ब्राह्मणस्य न स्यात् । ननु क्षत्रियादिकायां ब्राह्मणस्यानुत्पादकत्वम् । अतोऽविरुद्ध एवायमौरसाभावे कल्प. ॥१३१॥

किंलक्षण औरस पुत्र. । उच्यते—

**औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।**
**क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ १३२ ॥**

सवर्णा ब्राह्मादिविवाहसंस्कृता धर्मपत्नी । तस्यां स्वयमुत्पादितः पुत्र औरसः । तत्समत्ववचन क्षेत्रजातिभ्योऽधिकत्वज्ञापनार्थम् । पुत्रिकास्वरूपं स्मृत्यन्तरादवगन्तव्यम् । क्षेत्रजस्तु क्षेत्रे पत्न्यां सगोत्रेणान्येन वा नियोगोत्पादितः ॥ १३२ ॥

नियोगाभावेऽपि—

**गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतो मतः ।**
**कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १३३ ॥**

इमौ तु मातृजातीयौ जनकापरिज्ञानाद् विज्ञेयौ ॥ १३३ ॥

---

१. 'प' ग. पाठ

एवमेव च—

**अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।**
**दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥१३४॥**

मृते भर्तर्यक्षतयोन्यागन्यसंस्कृतायां जातः पौनर्भवः; क्षतयोन्यां वा । यथोक्तम्— "अन्यैश्चरित्वा तस्यैव कुटुम्बमाविशती"ति । पितृभ्यां पित्रा मात्रा वा । तदनुज्ञया दत्तो दत्तकः । तथाच वसिष्ठः — "नतु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद् वा, अन्यत्रानुज्ञानाद् भर्तुरि"ति । धर्मेण मातापितृभ्यां दत्तो दत्तकः ॥ १३४ ॥

**क्रीतस्तु ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः ।**
**दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः ॥ १३५ ॥**

क्रीतस्तु ताभ्यामधिकृताभ्यां मातापितृभ्यां मूल्येन विक्रीतः क्रेतुः क्रीताख्यः पुत्रः । तुशब्दो दत्तकन्यायानुकर्षणेन मातुरस्वातन्त्र्यप्रतिपत्त्यर्थः । स्वयमेव तु मातापितृविहीनः पुत्रत्वेनाङ्गीकृतः कृत्रिमः । दत्तात्मा त्वेवंलक्षण एव स्वयंदत्तः । स्वयमेव दत्त आत्मा येन स तथोक्तः । एते च दत्तकादयः स्मृत्यन्तरानुसारात् सदृशा विज्ञेयाः । सहोढजस्तु गर्भे विन्नः, गर्भस्थे यस्मिन् मातुरुद्वाहः । स च वोढुः पुत्रो मातृजातीयः प्रत्येतव्यः ॥ १३५ ॥

मातापितृभ्यामेव कथंचित्—

**उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः ।**

अपविद्धसञ्ज्ञक इत्यर्थः ॥

**पिण्डदोऽशहरश्चैषां पूर्वाभावे परः परः ॥ १३६ ॥**

एतेषां क्रमोपदिष्टानामौरसादीनां पुत्राणां पूर्वाभावे परः परः पिण्डदोऽशहरश्च प्रत्येतव्यः । पूर्वसद्भावे तु परस्यानृशंसार्थं वृत्तिमात्रकल्पनम् । तथा च स्वायम्भुवम्—

"एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥"

इति । औरसवचनं सर्वक्षेत्रजाद्युपलक्षणार्थम् । य एवैकः पुत्रत्वाद् रिक्थभाक्, स एव कृत्स्नं पितृधनं गृह्णीयात् । इतरेषामानृशंस्यार्थं प्रजीवनमात्रं कुर्यादित्यर्थः । यत्तु क्षेत्रजस्य सत्यौरसे विभागविशेषाम्नानं—

"षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात् पैतृकाद् धनात् ।
औरसो विभजन् दायं पित्र्यं पञ्चममेव वा ॥"

इति, पुनश्चोक्तम्—

"औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ ।
दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥"

इति, अत्र क्षेत्रजः पुत्रिकापुत्र एवाभिप्रेतः । नन्वसावौरसतुल्य एव । सत्यम् । तेनैव चोक्तं 'पितृरिक्थस्य भागिनावि'ति । कथं तर्हि षष्ठं पञ्चममेव वेति । जनकपितृधनाभिप्रायमेवैतत् । मातामहस्य ह्यसावौरसतुल्यत्वात् कृत्स्नांशार्हः । पितुः पुनः परार्थेनोत्पादितत्वान्नार्हः । तदभिप्रायमेव च वासिष्ठं 'तृतीयः पुत्रिकापुत्र' इति । पित्रा क्षेत्रत्वेनैवापत्योत्पादनायान्यस्मै दीयते, ततस्तस्यासौ क्षेत्रज इति शक्यते वक्तुम् । जनयितुरपि परार्थमुत्पादकत्वात् संस्कृतत्वेन क्षेत्रमात्रतया स्त्रीसम्बन्ध इति क्षेत्रजव्यपदेशः । तत्रौरसाविशिष्टं पितृरिक्थभाक्त्वं मातामहाभिप्रायम् । भागवैषम्यं तु जनकाभिप्रायमित्यविरोधः । पञ्चमषष्ठांशयोस्त्वौरसस्येच्छया विकल्पः । अन्यत्राप्येवमेव भागवैषम्यकल्पना । अतः स्थितं पूर्वाभावे परस्य द्रव्यसम्बन्ध इति । यत् पुनरिदं स्वायम्भुवम्—

"औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥"

इति । अस्य कोऽर्थः । क्षेत्रजादयः पञ्च सत्यौरसेऽप्यंशभाजः । कानीनादयस्तु पूर्वाभाव एव । एतेन वासिष्ठं व्याख्यातम् । तथाच शङ्खः— 'द्वौ भागौ पितुः, द्वावेवौरसस्य, त्रयः क्षेत्रजपुत्रिकापुत्रयोः, एकैकमित-

रेषाम्' इति। त्रयः क्षेत्रजपुत्रिकापुत्रयोरित्येकैकस्याध्यर्धभाक्त्वम्। पितृविभागवचनाच्च जीवत्येव पितर्येते सत्यौरसेंऽशभाजः। ऊर्ध्वं त्वाचार्यवचनात् पूर्वाभाव एवोत्तराधिकार इति व्यवस्था। यत्तु क्रमान्यत्वत्वचनं तत् पितुरेवेच्छाविकल्पतया द्रष्टव्यम्। तदभावे त्वाचार्योक्त एव क्रम इति। अनया दिशान्यान्यप्येवञ्जातीयकानि विभागवाक्यानि व्याख्येयानि॥ १३६॥

सर्वे चैते दत्तकादय सजातीया इत्येतत् प्रदर्शयितुमह—

**सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः।**
**जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्॥ १३७॥**

अयं मया विधिरुक्त इति वदन् स्मृत्यन्तरोक्तानां विषयान्तरेऽर्थवत्तां दर्शयति। तच्च व्याख्यातमेव पितर्युपरत एवेयं द्रव्यसम्बन्धपौर्वापर्यकल्पनेति, जीवति तु स्मृत्यन्तरोक्ततया विभागव्यवस्थयेति। एतदेव स्पष्टयति—मृते पितरि विभागव्यवस्थेयमस्माभिर्दुर्निरूपत्वान्निरूपिता। जीवति तु जातोऽपि दास्यां शूद्रेण पितुरिच्छयांशहरो भवेदित्यनादरं विशेषनिरूपणस्य दर्शयति॥ १३७॥

इच्छयैव च—[1]

**मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिनम्।**
**अभ्रातृको हरेत् सर्वं दुहितॄणां सुतादृते॥ १३८॥**

अर्धवचनं च न्यूनांशप्रतिपत्त्यर्थम्। तथाच बृहस्पतिः—'काम तश्च शूद्रावरोधजस्य भ्रातुरंशं सम्मानमात्रं प्रेते पितरि दद्युः शुश्रूषुश्चेदि'ति। अत्रापि च शास्त्रातिलङ्घनेन प्रवृत्तस्यायं विधिः द्विजातीनामिव शूद्रापुत्रः, नतु दास्यामवरोधविध्यनुमानमित्यनवद्यम्। अभ्रातृकस्तु दुहितृतत्सुताभावे सर्वभाक् स्याद् राजानुज्ञया बृहस्पतिवचनादेव 'अनन्वयिनः सर्वं राजा हरेत् तदनुज्ञया वावरोधज इत्येके' इति। अस्मादेव च दौहित्राभाववचनाद् द्विजातीनामपि पुत्राभावे दौहित्रा धनभाज इति। अतएवच मातामहश्राद्धनियमोपपत्तिः॥ १३८॥

१ 'विषय.' इति ग्रन्थान्तरे पाठ. २ 'या वा चृ' ग पाठ.

एव तावद् वैशपिर शूद्रस्य विधिरुक्त । आवशपर्णेव तु—

**पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।**
**तत्सुता गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः ॥ १३९ ॥**

**एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।**
**स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥ १४० ॥**

पत्नीत्यत्र गृहीतगर्भाभिप्रेता । तथाच वसिष्ठ — 'अथ भ्रातॄणां दायविभाग । याश्चानपत्या स्त्रिय स्युस्तासा चापुत्रलाभादि'ति गर्भिण्यो रिक्थार्हा इति दर्शयति । पुत्रशब्दश्चायम् अनपत्या इति वचनाद् गर्भोपलक्षणमेव । उत्पन्न वा ऽप्यपि पुत्रिका यथा स्यात् । तथाच गौतमः— 'स्त्री चानपत्यस्ये'त्युक्त्वाह — 'बीज वा लिप्सेत' इति । अनेन स्त्रीवचन गर्भिण्यर्थमिति ज्ञापयति । दुहितरश्च पुत्रिका एव । तथाच स्वायम्भुव पुत्रिकाभिप्रायेणैवाह —

"यथैवात्मा तथा पुत्र पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्या कथमन्यो धन हरेत् ॥"

इति । पुत्रजन्माशङ्काया त्वपत्याभावे तदधिकार '। बहुवचन पुत्रिकाबहुत्वज्ञापनार्थम् । चशब्द समुच्चयेनापीच्छातो द्रव्यसम्बन्धार्थ । एवकार सर्वत्रावधारणार्थ । माता च पिता च पितरौ । सहाधिकारात्तु द्वन्द्वकरणमेकैकप्राप्त्यर्थम् । द्वन्द्वनिर्देशेऽपि मातुरेव प्राथम्यम् । यथाह —

"अनपत्यस्य पुत्रस्य माता दायाधमाप्नुयात् ।
तस्यामपि च वृत्ताया पितुर्माता हरेद् धनम् ॥"

इति । सर्वथा चापत्याभावेऽनन्तर इत्ययमेवास्य विषय । नन्वेतदप्यस्ति—

"पिता हरेदपुत्रस्य रिक्थ भ्रातर एव वा"

इति । मातर्यसत्यामेतद् द्रष्टव्यम् । कथ शङ्खवचन— 'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यम् । तदभावे पितरौ हरेयाता ज्येष्ठा वा पत्नी'ति । उक्तलक्षणपत्नीदुहित्रभावे सोदर्यभ्रात्रभिप्राय तत् । यदि च पितुरन्या पत्नी स्यात्, तदभावे तु पितरौ, तत्र पिता हरेदपुत्रस्येति वचनात् पितैव वा

पूर्वोऽस्तु। तदनुमते तु तत्पत्नी, अननुमते तु ज्येष्ठा वा पत्नीति। ज्येष्ठाशब्दः सवर्णार्थः। सर्वा वा वाशब्दाद् यदि सवर्णाः स्युः। एतेनैतदपि व्याख्यातं—

"भ्रातॄणामप्रजः प्रेयात् कश्चिच्चेत् प्रव्रजेत वा।
विभजेरन् धनं तस्य भ्रातरः स्त्रीधनं विना॥"

इति। क्षत्रियादिषु पुत्राणां तु पितरि मातुरभावे पितुर्माता हरेद् धनमित्यस्य विषयः। भ्रातरस्तथेति तथाशब्दः प्रकारार्थः सापत्नादिसर्वभ्रातृसङ्ग्राहकः। तत्सुतास्तदनुसारेणैव गोत्रजा अपि सपिण्डसमानोदकैकपुरुषैकर्षिसम्बन्धाः क्रमेण द्रष्टव्याः। बन्धुर्मातुलादिः। आचार्योऽप्यर्थादनुक्तोऽपि पितृसंस्तवाद् गृह्यते। शिष्य उपनीतः। सब्रह्मचार्येकाचार्योपनीतः। एतेषां पूर्वाभावे पराधिकार इति। स्पष्टमन्यत्॥ १३९, १४०॥

एवं तावद् वर्णाश्रयो विभागविधिरुक्तः। अधुनाश्रमाश्रय उच्यते—

**वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः।**
**क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः॥ १४१॥**

ब्रह्मचारी नैष्ठिकोऽभिप्रेतः। एकाचार्यसम्बद्धो धर्मभ्राता। एकाश्रमसम्बद्ध एकतीर्थी। स्पष्टमन्यत्। नैष्ठिकवनस्थयतिव्यतिरिक्तानां तु वर्णानां पारिशेष्यात् प्रागुक्तो विभागविधिः॥ १४१॥

**संसृष्टिनस्तु संसृष्टी सोदरस्य च सोदरः।**
**दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च॥ १४२॥**

विभक्तः सन् निमित्तान्तराद् यः पित्रा भ्रात्रा वा सहार्थं संसृज्य वसति, स संसृष्टी। तत्र यद्येव सहवसतां पितापुत्राणां पितुः पुत्रो जायेत, तस्याप्यंशो देयः। मृतस्य च हर्तव्यः। सोदरस्य च सोदर इत्येतत्तु मातृतो विभागपक्षे द्रष्टव्यं, निर्धने च पितरि विभक्तजविषयम्। यत्तु गौतमीयम्—'अथ संसृष्टिविभागः। प्रेतानां ज्येष्ठस्ये'ति। अत्र ज्येष्ठः पितैवोच्यते। तस्य सोदर्यभ्रात्रन्तराभावे प्रेतानां पुत्राणां भ्रात्रन्तरासंसृष्टानां च धनभाक्त्वम्। तदुक्तं—'पिता हरेदपुत्रस्ये'ति। अन्ये तु ज्येष्ठशब्दं भ्रातर्याहुः। तत् पुनर्विचार्यम्। स्पष्टमन्यत्॥ १४२॥

अत्रापरे पूर्वश्लोकविवरणस्थानार्थमिमं श्लोकं पठन्ति—

**अन्योदर्यस्य संसृष्टी नान्योदर्यो धनं हरेत् ।**
**असंसृष्ट्यपि चादद्यात् सोदरो नान्यमातृजः ॥ १४३ ॥**

संसृष्टयप्यन्यमातृज सोदर्ये सति न धनभाक् । असंसृष्टयपि सोदर्य एव धनभागित्यर्थ ॥ १४३ ॥

य एव तु धनभाक् स्यात् तस्य प्रातिरक्तसुता विवक्षा —

**पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जडः ।**
**अन्धोऽचिकित्स्यरोगी च भर्तव्यास्तु निरंशकाः ॥१४४॥**

तत्सुत पतितोत्पन्न एव । उन्मत्तो ग्रहगृहीत । जड. सर्वदा प्रज्ञाहीन । कुष्ठाद्यसमाधेयपापरोगग्रस्तोऽचिकित्स्यरोगी । चशब्द स्मृत्यन्तरोक्तबधिरादिप्राप्त्यर्थः । स्पष्टमन्यत् । पङ्ग्वादिवचनान्यग्निहोत्राद्यनधिकृतानां सर्वेषामुपलक्षणार्थानीति केचित् । तदसत् पुरुषार्थत्वाद् द्रव्यस्य । अवैद्यस्य चानधिकृतस्यैव द्रव्यार्हत्वदर्शनात् । यथाह गौतम — 'स्वयमार्जितमवैद्येभ्यो वैद्य काम न दद्यादि'ति । 'अवैद्या सम विभजेरन्नि'ति च । अत. प्रतिषेधादेवैषामनशत्व, नत्वनधिकृतत्वात् । जन्मान्तरीयमहापातकलिङ्गयोगाद् वा निरशत्वम् । पितामहद्रव्यसम्बन्धस्त्वपतितानामन्धादीनामस्त्येवेति सम्प्रदाय । सामर्थ्येनैव तु भरणमात्रातिरिक्तद्रव्यविनियोगाशक्तेरौचित्यानुवादोऽयमित्यवसेयम् । तथाच स्वायम्भुव —

"येषा ज्येष्ठ कनिष्ठो वा हीयेताशप्रदानतः ।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥"

इति । अनेन प्राप्तस्याशस्य विनियोगाशक्तावौचित्यप्राप्तमपहार दर्शयति । अतएवच 'तस्य भागो न लुप्यत' इति । एवञ्च स्वयमेवैते निरशका ॥ १४४ ॥

**औरसक्षेत्रजास्त्वेषां निर्दोषा भागहारिण. ।**
**सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ॥ १४५ ॥**

औरसक्षेत्रजादयस्तु पुत्राः पङ्ग्वादीनामपि निर्दोषाः सन्तो भागहारिण एव । क्लीबस्यापि क्षेत्रजादयो भवन्त्येव । सुताश्चैषां प्रभर्तव्याः दुहितरश्च पुत्रिकाः पङ्ग्वादीनां तद्रिक्थग्राहिभिः प्रकर्षेण ग्रासाच्छादनादिना भर्तव्या, यावदुचितभर्तृभिः संयोजिताः, तैश्च गृहाधिपत्येन सत्कृताः ॥ १४५ ॥

किंच —

**अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।**
**निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ १४६॥**

अव्यभिचारिण्योऽपि स्त्रीधनाद्यवष्टम्भेन प्रतिकूलाः स्वातन्त्र्यवृत्तयस्तथैव निर्वास्याः । चशब्दात् स्त्रीधनोचिता एवेत्यभिप्रायः ॥ १४६ ॥

किं पुनः स्त्रीधनम् । उच्यते—

**पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् ।**
**आधिवेदनिकं चैव स्त्रीधनं परिकीर्तितम् ॥ १४७ ॥**

अध्यग्न्युपागतं विवाहकाले लब्धम् । आधिवेदनिकम् अधिविन्नायै पत्न्यै प्रत्तम् । अधिवेदनार्थं वा । चशब्दात् स्मृत्यन्तरोक्तमलङ्कारादि । एतत् स्त्रीधनमित्यवसेयम् ॥ १४७ ॥

अत्र प्रविभागः —

**बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च ।**
**अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः ॥ १४८ ॥**

पित्रादिदत्तं बन्धुदत्तम् । आधिवेदनिकादि शुल्कम् । अन्वाधेयमन्वयभोग्यतया दत्तम् । एतच्चानपत्यायां मृतायां बान्धवाः सोदर्यभ्रातरो गृह्णीयुः । तथाच गौतमः— 'भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुरि'ति । अस्माच्चोर्ध्वमेव मातुरयमाचार्योक्तकल्पः ॥ १४८ ॥

शुल्कादिव्यतिरेकेण तु—

**अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि ।**
**दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत् ॥ १४९ ॥**

ब्राह्मादिविवाहचतुष्टये यत् स्त्रीधन तदप्रसूतायां भर्तुः । प्रसूता चेद् दुहितृणामेव ॥ १४९ ॥

आसुरादिविवाहप्रसङ्गादिदमुच्यते । भर्तृत धनमादाय तत —

**दत्त्वा कन्यां हरन् दण्ड्यो व्ययं दाप्यश्च सोदयम् ।**
**मृतायां दत्तमादद्यात् परिशोध्योभयव्ययम् ॥ १५० ॥**

कन्यां दत्त्वा हरन् राज्ञा दण्ड्य. । भर्त्रे च सवृद्धिकं व्ययं दाप्यः । मृतायां तु भर्त्रा यद् दत्त, तत् प्रत्याददयात् । आत्मनिमित्तं पितृकृत चोरक्षय परिशोध्य ॥ १५० ॥

एव प्रासङ्गिकमुक्त्वा प्रकृतमेवाह —

**दुर्भिक्षे धर्मकार्ये च व्याधौ सम्प्रतिरोधके ।**
**गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति ॥ १५१ ॥**

भर्तृवचनादन्यो भ्रात्रादिर्दुर्भिक्षादिगृहीतमपि दद्यादिति गम्यते । सम्प्रत्येवादत्त्वा मा यास्यसीत्येव रोधाद्धरण सम्प्रतिरोधकम् । नगरोपरोध इत्यन्ये । स्पष्टमन्यत् ॥ १५१ ॥

किंच —

**अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।**
**न दत्तं स्त्रीधनं यस्या दत्ते त्वर्धं प्रकीर्तितम् ॥ १५२ ॥**

यस्या उपरि परिणीत, तस्यै यत् परिणयने द्रव्य गत तत्सम देय, यदि पूर्वं स्त्रीधन न दत्तम् । अथ तु दत्त, ततोऽर्धं देयम् । एतच्चाधिवेदननिमित्तमन्तरेणाधिविन्नायां द्रष्टव्यम् ॥ १५२ ॥

एवमथ रिक्थविभागो निरूपित । यदि तु कश्चिदविभक्तोऽहमित्येव विभागनिह्नव कुर्यात्, तत्र कथमित्यपेक्षित आह —

**विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।**
**विभागभावनाज्ञेयगृहक्षेत्रकयौतकैः ॥ १५३ ॥**

विभागनिह्नवे ज्ञात्यादिभिर्विभागभावना कार्या । ज्ञातिर्मातुलादिः । बन्धुः पितृव्यपुत्रादिः । एते हि प्रायशो विभागमध्यपातिनः सन्निहिताश्च भवन्ति । अन्ये वा साक्षिणः । लेख्यं वा यद् विभागप्रज्ञापकं कृतम् । यथाह बृहस्पतिः—

"कार्यमुच्छ्रावणालेख्यं विभक्तैर्भ्रातृभिर्मिथः ।
साक्षिणो चाविरोधार्थं विभजद्भिरनिन्दिताः ॥"

इति । अन्यत्र वा साक्ष्यमन्योन्यमुपलभ्यमानं विभागचिह्नमभिलिखितं वा प्रतिग्रहव्यवस्थार्थम् । तथादेयगृहक्षेत्रकयौतकैः । आदेयं दानग्रहणम् । गृहक्षेत्रकयौतकं पृथक् क्षेत्रगृहादिपरिग्रहेणावस्थितिः । तथाच नारदः—

"साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथञ्चन ॥"

इति ॥ १५३ ॥

इति दायविभागप्रकरणम् ।

---

अथ सीमाविवादप्रकरणम् ।

क्षेत्रादीनां पृथक्त्वेनावस्थितानां सन्देहापाकरणमुक्तम् । क्षेत्रादीनामेव तु सीमाविवादे कथं स्यादिति । उच्यते—

**सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरा गणाः ।**
**गोपाः सीम्नः कृपाणोऽन्ये सर्वे च वनगोचराः ॥ १५४ ॥**

सीम्नो मर्यादाया विवादे सन्देहे । विवादीभूतक्षेत्रस्य सामन्ताः सर्वतः समीपक्षेत्रिणः स्थविरा गणाश्च *समूहानि चातुर्वैद्यादीनि, तेषामपि हि सीमाज्ञातृत्वात् । यथाह बृहस्पतिः—'राजा क्षेत्रं दत्त्वा चातुर्वैद्यवणिग्वारिकसर्वग्रामीणतन्महत्तरस्वामिपुरुषाधिष्ठितं परिच्छिन्द्यात् । शासनं वा कुर्याद्'इति । अतो गणाः सीमाविवादे प्रमाणम् । किञ्च गोपाः गोपग्रहण सर्वपशुपालोपलक्षणार्थम् । तथान्ये सीम्नः कृपाणः वृद्धहालिकाः । सर्वे च वनगोचराः व्याधशाकुनिकादय. ॥ १५४ ॥

---

* समूहेऽत्र च पञ्चजन एव प्रमाणम् ।

वृषभाद्यभावाधिष्ठिताथ —

**नयेयुरेतैः सीमान्तं स्थलाङ्गारतुषद्रुमैः ।**
**सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षितम् ॥ १५५ ॥**

तुषाङ्गारादीनि प्रच्छन्नचिह्नानि । निम्नस्थलद्रुमादीनि प्रकाशानि । एतैः सीमान्तं प्रणयेयुः* प्रकर्षेणेदं †सीमान्तं चिह्नैः सम्पादयेयुः । स्पष्टमन्यत् ॥ १५५ ॥

**सामन्ता वा[1] समग्रामाश्चत्वारोऽष्टौ दशाथ वा ।**
**रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥ १५६ ॥**

*सेमा अपक्षपतिताः* । समाश्च ते ग्रामाश्च समग्रामाः । वाशब्दश्चशब्दार्थे । पूर्वोक्ताः क्षेत्रसामन्तादयः समग्रामाः सामन्ताश्च । एषां मध्ये चत्वारोऽष्टौ, अथवा दश । अथवेति स्मृत्यन्तरोक्तकल्पार्थः । त्रयो द्वावेको वेति । ते च रक्तस्रग्वसनाः क्षितिधारिणो भूत्वा नयेयुः । रक्तकरवीरादिपुष्पमालिनः रक्तवाससश्च । क्षितिं मृदं मूर्ध्नि कुर्युः । अविशेषाभिधानेऽपि चैतद् द्विजातीनामेव । शूद्राणां तु यथाह बृहस्पतिः — "यदि शूद्रो नेता स्यात् तं क्लैब्येनालङ्कारेणालङ्कृत्य शवभस्मना मुखं विलिप्याग्नेयस्य पशोः शोणितेनोरसि पञ्चाङ्गुलानि कृत्वा ग्रीवायामान्त्राणि प्रतिमुच्य सव्येन पाणिना सीमालोष्टं मूर्ध्नि धारयेदि"ति । अत्र चाग्नेयः पशुश्छागः । रक्तकर्पटवसनादिः क्लैब्योऽलङ्कारः । स्पष्टमन्यत् ॥ १५६ ॥

एतं च सीमाप्रणेतारः —

**अनृते तु पृथग् दण्ड्या राज्ञा मध्यमसाहसम् ।**
**अभावे ज्ञानचिह्नानां राजा सीम्नः प्रवर्तिता ॥ १५७ ॥**

तुशब्दो *निश्चयार्थः* । उक्तचिह्नव्यभिचाराच्चिह्नान्तरदर्शनाद्वा स्पष्टीकृतेऽनृतवादित्वे राज्ञा मध्यमसाहसं पञ्चकार्षापणशतान्येकैकशो दण्ड्याः । राजवचनं तत्समक्षं सीमानयनं यथा स्यात् । यदा प्रच्छन्नप्रकाशानि

---

1 'सामन्ता अ' ग पाठः.

---

* प्रणयेयुरिति नूनं मूले पाठः स्यात् । अन्यथा प्रकर्षेणेति व्याख्यानानुपपत्तेः ।

† सीमान्तशब्दः क्लीबेऽपि स्यात् ।

ज्ञानचिह्नानि न स्युः, तदा राजा प्रवर्तिता यदृच्छया सीमाकारक इत्यर्थः ॥ १५७ ॥

योऽयं क्षेत्रसीमाविधिरुक्तः—

**आरामायतनग्रामनिपानोद्यानवेश्मसु ।**
**एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहेषु च ॥ १५८ ॥**

उक्तमर्यादक्षेत्रादीनां च—

**मर्यादायाः प्रभेदे च क्षेत्रस्य हरणे तथा ।**
**सीमातिक्रमणे दण्डो ह्यधमोत्तममध्यमाः ॥ १५९ ॥**

साहसदण्डा इति शेषः। मर्यादाभेदे प्रथमसाहसः सार्धद्विशतम्। क्षेत्रहरणे तूत्तमसाहसः साशीतिः पणसाहस्रः। सीमातिक्रमणे मध्यमः ॥ १५९ ॥

सर्वेषां च परक्षेत्रायनप्रहरणप्रसङ्गादाह—

**न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।**
**परभूमिं हरेत् कूपः स्वल्पक्षेत्रो बहूदकः ॥ १६० ॥**

खातं उदकप्रवाहस्य प्रवृत्तस्य मार्गान्तरप्रवर्तनं सेतुः। कुल्येत्यर्थः। क्षेत्रमध्येन क्षेत्रान्तरप्रसेचनायानीयमानो यद्यल्पोपघातः कृत्स्नस्य निष्पत्तिबाहुल्याच्च कल्याणकारकः। ततः क्षेत्रस्वामिना न निवारणीयः। तथा चैतदागोपालं प्रसिद्धमेव—

'परभूमिं हरेत् कूपः स्वल्पक्षेत्रो बहूदकः'

इति। स्वल्पक्षेत्रमध्येन क्षेत्रान्तरप्रसेचनार्थं नीयमानाभिः कुल्याभिः परकीयां भूमिं हरेत् कूप इति। अतः प्रवादादिदमवगच्छामः सेतुर्न प्रतिषेध्य इति। यद्वास्यान्योऽर्थः। यस्य क्षेत्रे स्वल्पदोषो महूदकः खन्यमानः कूपः स्यात्, तस्यासौ खन्यमानो राजोपकारकत्वेन क्षेत्रस्वामिनो भूमिं हरेदिति ॥ १६० ॥

एवं सति क्षेत्रस्वाम्यननुज्ञया सेतुप्रवर्तनप्रसङ्गादाह—

**स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रकल्पयेत् ।**
**उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥ १६१ ॥**

यस्तु स्वामिनार्पितं क्षेत्रं कर्षको हलादिकं कृत्वा कृष्यादेर्न कुर्यात् । न कारयेद्वा । तत्र कथमित्यपेक्षित आह—

फालाहतमपि क्षेत्रं यो न कुर्यान्न कारयेत् ।
तं प्रदाप्याकृष्टशदं* क्षेत्रमन्येन कारयेत् ॥ १६१ ॥

इति सीमाविवादप्रकरणम् ।

---

अथ स्वामिपालविवादप्रकरणम् ।

यदि तु पशुपालापराधात् स्वाम्यपराधाद्वा पशवः सस्योपघातं कुर्युः, तत्र कथम् । तत्रापि हि —

माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥ १६२ ॥

कार्षापणविंशतिभागो माषः । स्पष्टमन्यत् ॥ १६२ ॥

उपहत्य भक्षणमात्र एवैतत् । यदि तु तत्रैव निविशेयुः, ततः —

भक्षयित्वोपविष्टानां द्विगुणोऽवसतां दमः ।
सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ १६४ ॥

भक्षयित्वोपविष्टानामवसतां पूर्वोक्तद्विगुणो दण्डः कार्यः । पशूनां तु चतुर्गुणः स्मृत्यन्तरात् । यदेतत् क्षेत्रोपघाते निरूपितं, तदेषां महिष्यादीनां विवीतेऽपि समम्, तथैवेत्यर्थः । विवीते च गोप्रचारक्षेत्रे खरोष्ट्रं महिषीसमम् । एवं पीडानुसाराद्धस्त्यादिष्वपि दण्डकल्पना ॥ १६४ ॥

पालदण्डश्च —

यावत् सस्यं विनश्येत तावत् क्षेत्री फलं लभेत् ।
पालस्ताड्येत गोमी तु पूर्वोक्तं दण्डमर्हति ॥ १६५ ॥

अपवादः —

पथिग्रामविवीतान्तक्षेत्रे दोषो न विद्यते ।
अकामतः

---

१ [illegible]

* [illegible] । १ [illegible]

इतिच्छेदः । ग्रामान्ते विवीतान्ते वा यत् क्षेत्रं, तत्र प्रमादादवतीर्णेषु महिष्यादिषु नापराधः ॥

अभिप्रायावतरणे त्वाह —

**कामकारे चोरवद् दण्डमर्हति॥ १६६॥**

पालः स्वामी वा । यद्वोभावपि ॥ १६६ ॥

उक्तग्रामसमीपादिव्यतिरेकेणापि —

**महोक्षोत्सृष्टपशवः सूतिकागन्तुकी च गौः ।**
**पालो येषां च ते मोच्या दैवराजपरिप्लुतः॥ १६७॥**

पालो येषां दैवराजपरिप्लुतः, ते मोच्या इति व्यवहितकल्पना । स्पष्टमन्यत् ॥ १६७ ॥

अयं च स्वामिपालयोरन्योन्यनियम —

**यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत् तथा ।**
**प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥ १६८ ॥**

परिच्छिन्नवेतनो दत्तवेतनो वा गोपः प्रातर्यथार्पितान् सायं प्रत्यर्पयेत् । अर्पणवचनाच्चासमर्पितप्रणाशे नापराधः गोपवचनं च पशूनित्युपक्रमात् सर्वपशुपालोपलक्षणार्थम् । प्रमादेनोपेक्षया मृताः प्रनष्टा वा ये पशवः, ते च पालेनैव देयाः ॥ १६८ ॥

राजन्यनिवेदितस्य पूर्वोक्तम् । आवेदने पुन —

**पालदोषविनाशे तु पाले दण्डो विधीयते ।**
**अर्धत्रयोदशपणः स्वामिने धनमेव च ॥ १६९ ॥**

पालदोषादत्र विनाशः संवृत्त इत्येवं राजन्यावेदितेऽर्धत्रयोदशपणो दण्डः पालस्य । स्वल्पाशङ्कायां च विधीयते इत्युक्तम् ॥ १६९ ॥

किंच—

**ग्रामेच्छया गोप्रचारभूमी राजवशेन वा ।**
**द्विजस्तृणैधपुष्पाणि सर्वतः स्ववदाहरेत् ॥ १७० ॥**

स्पष्टार्थः श्लोकः ॥ १७० ॥

किञ्च—

धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ।
द्वे शते कर्पटस्य स्यान्नगरस्य चतुःशतम् ॥ १७१ ॥

ग्रामनगरोभयधर्मयुक्तं कर्पटम् । स्पष्टमन्यत् ॥ १७१ ॥

इति स्वामिपालविवादप्रकरणम् ।

---

अथास्वामिविक्रयप्रकरणम् ।

उक्तो द्रव्याणां स्वत्वसम्बन्धः । इदानीमस्वामिविक्रयं दर्शयति—

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद् रहो हीनमूल्ये

अन्येनास्वामिना विक्रीतं द्रव्यं दृष्ट्वा स्वामी गृह्णीयात् । क्रेतुश्च दोषः स्यात् अप्रकाशिते क्रये । प्रकाशक्रये तु मूल्यमात्रप्रणाशः, न तु स्तेयदोषः । क्व तर्हि दोषः । हीनाद् दासादिहस्ताद् गृह्णतः । तथा रहः प्रच्छन्नम् । हीनमूल्ये च स्तेयसम्भावनया गृहीते ।

वेलाहीने च तस्करः ॥ १७२ ॥

वेलाहीने च तस्करः । क्रेता स्यादित्यर्थः । तथाच नारदः—

"द्रव्यमस्वामिविक्रीतं द्रव्यस्वामी समाप्नुयात् ।
प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं रहः कृते ॥
अस्वाम्यनुमताद् दासादसतश्च जनाद् रहः ।
हीनमूल्यमवेलायां क्रीणस्तद्दोषभाग् भवेत् ॥"

इति ॥ १७२ ॥

किञ्च—

नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ वा गृहीत्वा स्वयमर्पयेत् ॥ १७३ ॥

नष्टं वापहृतं वा द्रव्यमन्येन गृहीतमासाद्योपलभ्य द्रव्यग्राहिणं हर्तायमिति व्यपदिश्य राजपुरुषैर्व्यवहारनिर्णयाय ग्राहयेत् । यदि तु राजकीयासन्निधाने देशकालातिपत्तिश्चाशङ्क्येत, तदा स्वयमेव गृहीत्वा राज्ञे हर्तारमर्पयेत् । नन्वेवत् स्वभावसिद्धत्वादेवावाच्यम् । सत्यम् ।

स्वातन्त्र्येण गृह्णतः स्तेनं च ददतो दोषाभावज्ञापनार्थमेतत् । अन्या व्याख्या — नष्टापहृतमासाद्य क्रीत्वा स्वामिना प्रार्थ्यमाने हर्तारं ग्राहयेत् । मूल्यमर्पयेदित्यर्थः । देशकालातिपत्तौ वा प्रकाशक्रयेणापि गृहीत्वा स्वयमर्पयेत् । तथाप्यदोष इत्यभिप्रायः ॥ १७३ ॥

हर्तृतया च राजन्यावेदितस्य—

**विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।**
**क्रेता मूल्यमवाप्नोति तस्माद् यस्तत्र विक्रयी॥१७४॥**

विक्रेतारं दर्शयित्वा क्रेतुर्निर्दोषत्वम् । स्वामिनश्च तदा द्रव्यलाभः । विक्रयिणश्च हस्तात् क्रेतुर्मूल्यप्राप्तिः । दण्डप्राप्तिश्च राज्ञ इत्यवसेयम् ॥ १७४ ॥

कथं पुनः स्वाम्यवगतिः । उच्यते—

**आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।**
**पञ्चबन्धो दमस्तत्र राज्ञस्तेनाप्यभाविते ॥ १७५ ॥**

आगमेन लेख्यादिना प्रकाशमस्खलितचिरभोगेन वा नष्टं द्रव्यमन्यहस्तगतं मदीयमित्येव भाव्यम् । अतः प्रकारद्वयादन्यथा मदीयमिति वदतो विवादीभूतद्रव्यात् पञ्चबन्धः पञ्चमो भागो दमः स्यात् । तच्च द्रव्यमितरेणापि पूर्वोक्तप्रकारद्वयेनात्मीयमित्यभाव्यं राजगाम्यवसेयम् ॥ १७५ ॥

यतश्चैतदेवम्, अत —

**हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।**
**अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान्॥ १७६ ॥**

स्पष्टार्थः श्लोकः ॥ १७६ ॥

किंच —

**शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।**
**अर्वाक् संवत्सरात् स्वामी लभेत परतो नृपः ॥ १७७॥**

अर्वाक् संवत्सरात् स्वामी गृह्णीयात् । परतो नृपतिर्गृह्णीयात् ॥ १७७ ॥

पारितोषिकान् राज्ञे —

**पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।**
**महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥ १७८ ॥**

इत्यस्वामिविक्रयप्रकरणम् ।

---

अथ दत्ताप्रदानिकप्रकरणम् ।

पारितोषिकदानप्रसङ्गेनादत्तार्थोऽपि दानसाधारणो विधिरुच्यते —

**स्वकुटुम्बाविरोधेन देयं दारसुतादृते ।**
**नान्वये सति सर्वस्वं देयं यच्चान्यसंश्रितम् ॥ १७९ ॥**

स्वशब्दो विभक्तपुत्रादिनिवृत्त्यर्थः । अविरोधश्च ग्रासाच्छादनमात्रसम्पल्लक्षणो विज्ञेयः । दारसुतग्रहणं च सर्वज्ञातिधर्मोपनतादिलक्षणार्थम् । नान्वये सति सर्वस्वं पृथक् कुटुम्बतयावस्थितेऽपीत्यर्थः । देयं यच्चेत्यत्र देयं प्रत्यर्पणीयं निक्षेपादि । अन्यसंश्रितं साधारणं पराधीनं वा स्वमेव । अस्य पाठान्तरम् — 'यच्च प्रतिश्रुतम्' इति । देयत्वेनान्यस्मै प्रतिश्रुतमित्यर्थः । तथाच नारदः —

"अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपं पुत्रदारं च सर्वस्वं चान्वये सति ॥
आपद्यपि च कष्टायां वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥

इति ॥ १७९ ॥

अदेयव्यतिरिक्तानां तु देयाना —

**प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः ।**
**देयं प्रतिश्रुतं चैवं दत्त्वा नापहरेत् पुनः ॥ १८० ॥**

यत्त्वप्रकाश्यं दानमिति, तद् दानविषयम्, इदं तु प्रतिग्रहविषयमित्यविरोधः । स्पष्टमन्यत् ॥ १८० ॥

इति दत्ताप्रदानिकप्रकरणम् ।

---

अथ क्रीतानुशयप्रकरणम्।

अस्वामिविक्रया निरूपित । स्वामिविक्रय च —

**दशैकपञ्चसप्ताहमासत्र्यहार्धमासिकम् ।**

**बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥ १८१ ॥**

परीक्षाकालाचोर्ध्वं क्रीत विक्रीत वा स्याद् यत् तदनुपहतम् । यत्तु स्वायम्भुवं —

"क्रीत्वा विक्रीय वा द्रव्यं यस्येहानुशयो भवेत् ।
सोऽन्तर्दशाहात् तद् द्रव्य दद्याचोपाददीत वा ॥"

इति, तत् परीक्ष्य क्रीतं द्रष्टव्यम् । दशाहादिक्रमेण बीजादीनां क्रमशः परीक्षाकाला । दशाहो बीजाना गोधूमादीनाम् । एकाहश्चायस । अयोग्रहण सर्वताम्रादिलक्षणार्थम् । एव वाह्यादिष्वपि योज्यम् । वाह्य बलीवर्दादय । रत्नानि मरतकादीनि । स्त्रियो दास्याद्याः । दोह्य गवादि । पुमासो दासादयः ॥ १८१ ॥

किञ्च —

**अग्नौ सुवर्णमक्षीणं द्विपलं रजते शतम् ।**

**अष्टौ तु त्रपुसीसे च ताम्रे पञ्च दशायसि ॥ १८२ ॥**

आवर्तनायाग्नौ क्षिप्त सुवर्णमक्षीण, तावदेवेत्यर्थ । रजतादौ पलशताद् द्विपलादिक क्षय । अनेन प्रकारेणोपक्षीण सुवर्णकारादयो न[१] दापनीया ॥ १८२ ॥

तौलिकादिभिस्तु वस्त्रनिर्माणायार्पित सूत्रे —

**शते दशपला वृद्धिरौर्णे कार्पासिके तथा ।**

**मध्ये पञ्चपला हानिः सूक्ष्मे तु त्रिपला मता ॥ १८३ ॥**

पलशते दशपलान्यौर्णकार्पासिकयोर्वृद्धि स्थूले सूत्रे स्यात् । मध्यमे सूत्रवृद्धित पञ्चपलहान्या वृद्धिरित्यर्थः । सूक्ष्मे तु त्रिपला वृद्धि । तथा च नारदो दशपला वृद्धिमुक्त्वाह —

"स्थूलसूत्रवतामेषा मध्याना पञ्चक शतम् ।
त्रिपल तु सुसूक्ष्माणाम्" .

इति ॥ १८३ ॥

---

१ 'चेऽपि च' ग. पाठ

अस्य विशेषेऽपवाद.—

**चार्मिके रोमवद्धे च त्रिंशद्भागः क्षयो मतः।**
**न क्षयो न च वृद्धिः स्यात् कौशेये वाल्कले तथा॥१८४॥**

चर्मकृतं चार्मिकं कुरुण्टादि। रोमवद्धं दूष्यपटादि। तत्र हि छेदनात् त्रिंशद्भागः क्षयः। कौशेयवाल्कलयोस्तु साम्यमेव। कौशेयं त्रसरीमयम्। स्पष्टमन्यत्॥१८४॥

उक्तवनुसारेणैव क्षयमालोच्य रजकादिभिर्देयमादाना—

**देशं कालं च भोगं च ज्ञात्वा नष्टे वलावलम्।**
**द्रव्याणां कुशला ब्रूयुर्यत् तद् दाप्यमसंशयम्॥१८५॥**

स्वदेशोत्पन्नं परदेशोत्पन्नं चिरन्तनमल्पकालिकं भुक्तमभुक्तं दुर्लभमदुर्लभं वेत्येवं नष्टे द्रव्ये वलावलं ज्ञात्वा द्रव्याणां वलावलज्ञानकुशला यन्मूल्यं ब्रूयुः, तन्निर्विचारं नाशयिता दद्यात्। राज्ञा चाददद् दाप्यः। एवं परीक्ष्य क्रीते क्रेतुर्व्यभिचारतो राजदण्डादिप्रसङ्गः। न च विक्रेता व्यभिचरन्नपि विक्रीतं प्राप्नुयादिति स्थितम्। तथाच स्वायम्भुवः—

"परेण तु दशाहस्य न दद्यान्नापि दापयेत्।
आददानो ददच्चैव दण्ड्यो राज्ञा शतानि षट्॥"

इति॥१८५॥

इति क्रीतानुशयप्रकरणम्।

---

अथाभ्युपेत्याशुश्रूषाप्रकरणम्।

अस्यापवादार्थमाह—

**वलाद् दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते।**
**स्वामिप्राणप्रदो भाक्तस्तत्त्यागान्निष्क्रयादपि॥१८६॥**

दास्यकारणगृहजत्वाद्यभावे वलाद् यो दासीकृतः, चौरैर्वान्यहस्ते दासत्वेन विक्रीतः, स मोक्तव्यः। नात्र क्रेतुर्दोषप्रसङ्गः। यस्यापि हि दासत्वकारणमस्ति, सोऽपि हि स्वामिनं प्राणसंशयात् स्वप्राणत्याग-

१ 'न' ग. पाठ.

निश्चयावष्टम्भेन मोक्षयित्वा दास्यान्मुच्यते । यस्तु भाक्त भक्तदास, स तत्त्यागान्निष्क्रयाद्वा मुच्यते । अपिशब्दात् स्वामिप्रसादादिपरिग्रहः ॥ १८६ ॥

एव दास्यानिर्मोचनप्रसङ्गादपवाद —

**प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् ।**
**वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ॥ १८७ ॥**

प्रव्रज्य प्रतिनिवृत्तो राज्ञो दास स्यात् । न चात्र स्वामिप्राणरक्षणेनापि मोक्ष । ब्राह्मणोऽपि च प्रव्रज्यावसितो राज्ञो दास स्यात् प्रातिलोम्येनापि । अतोऽन्यत्र तु वर्णानामानुलोम्येन दास्यम् । यथा 'मोक्षितो महतश्चर्णादि'त्येवमादो न प्रातिलोम्येन प्रवेशतव्यम् । स्मृत्यन्तराच्च दासत्वनिमित्तानि गृहजत्वादीनि दास्यनिर्मोचनप्रकाराश्चान्वेष्या । सर्वथा प्रातिलोम्येन दास्याभाव इति स्थितम् । यत्र पारिभाषिकमुभयोरनुमते दास्यमन्यद्वा तत् तथैव कर्तव्यम् ॥ १८७ ॥

यतश्चैतदवम्, अत —

**कृतशिल्पोऽपि निवसेत् कृतं कालं गुरोर्गृहे ।**
**अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः ॥ १८८ ॥**

शिल्पशिक्षणार्थं प्रतिपन्नशिष्यभावोऽन्तेवासी । स यदा परिभाष्येयन्त काल त्वद्गृहे मया शिल्पविद्याशिक्षया वस्तव्यमित्यास्ते, अन्तरालेऽपि कृतविद्य स्यात्, तदापि हि कृत पारिभाषिक काल गुरोर्गृहे निवसेत् । गुरुणापि च तस्य भोजनपरिधानादिक देयम् । यच्चासो शिल्पेनार्जयेत्, तद् गुरोरेवार्पयेदित्यवसेयम् ॥ १८८ ॥

इत्यभ्युपेत्याशुश्रूषाप्रकरणम् ।

---

अथ संविद्व्यतिक्रमप्रकरणम् ।

पारिभाषिकस्य चात्र यथाक्रमणप्रसङ्गेन भूय समयानपाकरणार्थं समूहक्रियामुपोद्घातत्वेनाह —

**राजा कृत्वा पुरे स्थानं ब्राह्मणान् न्यस्य तत्र तु ।**
**त्रैविद्यं वृत्तिमद् ब्रूयात् स्वधर्मः पाल्यतामिति ॥ १८९ ॥**

यदुक्त —

"तत्र दुर्गाणि कुर्वीत जनकोशात्मवृद्धये"

इति, तद्गुणविधानायैवायमारम्भ । राजा कृत्वा पुरे दुर्गं स्थान स्थली भाविकालसंरक्षणार्थं ब्राह्मणान् न्यस्य समुदायत्वेनावस्थाप्य त्रविद्यम् ऋग्यजु सामपारग सदाचारब्राह्मणात्मक वृत्तिमत् कृत्वा ब्रूयात् स्वधर्म पाल्यतामिति । वर्तनहेतुर्वृत्ति, तद्युक्त वृत्तिमद् ग्रामगृहक्षेत्राक्षयनिव्यादि स्थापितमर्थं दत्त्वेत्यर्थ । स्वधर्मो वर्णाश्रमधर्मेस्थित्यव्यभिचार, राज्ञश्चा न्यथाप्रवृत्तावुपदेशेन सन्मार्गावतारणम् । स्पष्टमन्यत् ॥ १८९ ॥

किञ्च —

**निजधर्माविरोधेन यस्तु सामयिको भवेत् ।**
**सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च य ॥ १९० ॥**

श्रुतिस्मृत्युक्तो निजधर्म, तदविरोधनाथाद्यनुगुण, तदनुगुणो वा योऽपि सामयिक स्वपरिभाषाकृतो भवेद् यथोक्तम यकाहूतानागमनद ण्डादिक, सोऽपि राज्ञा प्रयत्नेन सम्यग् रक्षणीय । किञ्च धर्मो राजकृ तश्च य यथैव स्वनिवेशितस्थाने तथैव राजान्तरकृतस्थानान्तरेष्वपि प्रपा शालानिवेशयात्रोत्सवादिक । तथाच नारद —

"यो धर्म कर्म यच्चैषामुपस्थाननिषिद्ध य ।
यच्चैषा वृत्त्युपादानमनुमन्येत तत् तथा ॥"

इति । धर्मो राजकृत इत्यत्र पुनर्धर्मवचन न राजान्तरकृतत्वात् पालनी यम् । किं तर्हि धर्मानुगुण्येन धर्मत एवेत्यभिप्राय । तथाच नारद समू- हधर्मानुपसहरन्नाह —

"दोषवत् करण यत् स्यादनाम्नायप्रकल्पितम् ।
प्रवृत्तमपि तत् राजा श्रेयस्कामो निवर्तयेत् ॥"

इति ॥ १९० ॥

पालनमाजन

**गणद्रव्य हरेद् यस्तु संविद लङ्घयेच्च य ।**
**सर्वस्वहरण कृत्वा त राष्ट्राद् विप्रवासयेत् ॥ १९१ ॥**

यो गणद्रव्यं हरेद्, धर्माविरोधिनीं संविद् परिभाषां समूहकृता लङ्घयेत्, तमपहृत्य सर्वस्वं राष्ट्राद् राजा विप्रवासयेत् । तच्चापहृत्य समूहायैवार्पयेत् । न तु स्वयं गृह्णीयात् । कृत्वेति वचनात् कर्तैव राजा न ग्रहीतेति गम्यते । स्वायम्भुवेऽप्येवमभिप्रायः प्रतिषेधः—

"न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम् ।
राष्ट्रात् त्वेनं बहिष्कुर्यात् समग्रधनमक्षतम् ॥

इति । अतः समूहार्पणमनवद्यम् । एवमन्यत्रापि समूहार्थे दण्डदानादि योज्यम् ॥ १९१ ॥

नन्वयं भिन्नाभिन्नाभिप्रायपुरुषाधीनत्वात् समूहधर्मो दुःश्लिष्ट एव । नैवम् । कार्यापक्षयैकाभिप्रायत्वोपपत्तेः । किंच—

**कर्तव्यं वचनं सर्वैः समूहहितवादिनः ।**

समुदायिनोऽन्यस्य वा ।

**यस्तत्र विपरीतः स्यात् स दाप्यः प्रथमं दमम् ॥ १९२ ॥**

राजा समूहायैवेत्यर्थः । महता हि प्रयत्नेन राज्ञा समूहधर्मः पालनीयः, धर्माभिवृद्ध्या समूहस्य राजोपकारित्वात् ॥ १९२ ॥

यतश्चैतदेवम्, अतः—

**समूहकार्य आयातान् कृतकार्यान् विसर्जयेत् ।**

क्षिप्रं कार्यान्तराणि परिहाप्यापीति शेषः ।

**स दानमानसत्कारैः पूजयित्वा महीपतिः ॥ १९३ ॥**

ननु च परस्वत्वापत्तिपर्यन्तत्वाद् दानस्य समूहिनां च प्रत्येकं स्वत्वायोग्यत्वाद् व्यतिरिक्तस्वत्वापत्तिक्षमसमूहलक्षणस्वामाभावात् समूहदानमनुपपन्नमेव । अतएव च गणद्रव्यं प्रार्थ्यमाना वक्तारो भवन्ति—नेदमस्माकमस्मदीयं भवतीति । तथाचर्त्विजामपि न परिषदं प्रत्युत्सर्ग इष्यते । अतोऽयमुत्सर्गमात्रे गौणो दानव्यपदेश इति केचित् । तथाच सति तु समूहद्रव्यहरणे न दोषः स्याद्, इष्यते च, दण्डदर्शनात् । अतो वक्तव्य-

१. 'त्ववग' ग पाठः. २. 'णार्थोभा' ख पाठः. ३. 'पिप' ग पाठः.

यो गणद्रव्य हरेद्, धर्माविरोधिनीं सविद् परिभाषा समूहकृता लङ्घयेत्, तमपहृत्य सर्वस्व राष्ट्राद् राजा विप्रवासयेत्। तच्चापहृत्य समूहायैवार्पयेत्। नतु स्वय गृह्णीयात्। कृत्स्नेति वचनात् कर्तेव राजा न ग्रहीतेति गम्यते। स्वायम्भुवेऽप्येवमभिप्राय प्रतिषेध —

"न जातु ब्राह्मण हन्यात् सर्वपापेष्ववस्थितम्।
राष्ट्रात् त्वेन बहिष्कुर्यात् समग्रधनमक्षतम्॥

इति। अत समूहार्पणमनवद्यम्। एवमन्यत्रापि समूहार्थे दण्डदानादि योज्यम्॥ १९१॥

नन्वय ।भत्राभिप्रायपुरुषाधीनत्वात् गमूहधमा दु।श्लष्ट एव। मवम्। कायापक्षयैका भिप्रायस्त्रापपत्त। किच —

**कर्तव्यं वचनं सर्वैः समूहहितवादिनः।**

समुदायिनोऽन्यस्य वा।

**यस्तत्र विपरीत· स्यात् स दाप्यः प्रथमं दमम्॥ १९२॥**

राज्ञा समूहार्थेनेत्यर्थ। महता हि प्रयत्नेन राज्ञा समूहधर्म पालनीय, धर्माभिवृद्धया समूहस्य राजोपकारित्वात्॥ १९२॥

यत-वतदथम्, अत —

**समूहकार्य आयातान् कृतकार्यान् विसर्जयेत्।**

क्षिप्र कार्यान्तराणि परिहाप्यापीति शेष।

**स दानमानसत्कारैः पूजयित्वा महीपतिः॥ १९३॥**

ननुच परस्वत्वापत्तिपर्यन्तत्वाद् दानस्य समूहिना च प्रत्येक स्वत्वायोग्यत्वाद् व्यतिरिक्तस्वत्वापत्तिक्षमसमूहलक्षणत्वाभावात् समूहदानमनुपपन्नमेव। अतएवच गणद्रव्य प्रार्थ्यमाना वक्तारो भवन्ति— नेदमद्याप्यस्मदीय भवतीति। तथाचर्त्विजामपि न परिषद प्रत्युत्सर्ग इष्यते। अतोऽयमुत्सर्गमात्रे गौणो दानव्यपदेश इति केचित्। तथाच सति तु समूहद्रव्यहरणे न दोष स्याद्, इष्यते च, दण्डदर्शनात्। अतो वक्तव्य-

---

१. 'स्थवग ग पाठ २. णार्थोभा ख पाठ ३. विप' ग पाठ

मेतत्। तत्रान्ये पण्डितम्मन्याः पाषण्डादिवद् 'दृष्टप्रयोजनान्येव दण्डादिवचनानी'ति वर्णयन्ति। तथापि च धर्मार्थः समूहदानादिव्यवहारोऽनालम्बन एव स्यात्। अत्रोच्यते। सत्यं समुदायिनां स्वत्वाभावः। समुदायस्य तु स्वत्वसम्बन्धः केन वार्यते। यत्तु व्यतिरिक्तः समुदायो नेत्युक्तम्। तथैव तत्। समुदायिन एवैककार्यावच्छेदेनेतरेतरापेक्षाः समुदायतां प्रतिपद्यन्ते। शक्यते चैवमेकैकस्येतरेतरापेक्षस्य स्वत्वसंबन्ध इति वक्तुम्। न चैवंभूतानां दानचोदना नास्ति। गवादीनामविभक्तदक्षिणावचनाद् अन्यत्र बहूनामपि दानसंबन्ध इति गम्यते। ब्राह्मणाय च दानं चोदितम्। न च सापेक्षत्वेन देयमिति। न चेयं स्वत्वाभिमानभ्रान्तिः, बाधानुपलम्भात्। तत्रैतत् स्यात्। सर्वसमुदाय्यसन्निधाने कथं दानोपपत्तिरिति। तदप्यसत्। ग्रहीतॄणामितरेतरापेक्षाणामेव स्वत्वयोगात् समयसामर्थ्याद्वर्त्विग्यजमानानामिव शरीरेन्द्रियमनःसाधारण्यात् प्रवसद्यजमानवच्च समयबलेन मनःसान्निध्याच्छास्त्रचोदितत्वाच्च समूहस्थितेर्ऋत्विग्यजमानसाम्यमेव। यत्तु समुदायिनामनात्मीयत्वाभिधानम्। तत्रैरपेक्ष्याभिप्रायम्। विभागविधानाद्दर्त्विजां परिपदं प्रत्युत्सर्गो न्यायानपेक्षत्वेऽप्यव्याहत एव। ये तु समुदायिदानासम्भवाद् ऋत्विजां दक्षिणाविभागं मन्यन्ते तेषामश्वो दक्षिणेत्येवमादौ द्रव्यैकत्वेन विभागासम्भवान्मूल्यदानायोगाच्च दुःश्लिष्टत्वेऽलमलं प्रसङ्गेन ॥ १९३ ॥

इममेव न्यायं मनसि कृत्वाह —

समूहकार्यप्रहितो यल्लभेत तदर्पयेत्।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत् स्वयम् ॥ १९४ ॥

व्यवहारनिर्णयनं चाय समूहविवेक —

वेदज्ञाः शुचयोऽलुब्धा भवेयुः कार्यचिन्तकाः।

स्मृत्यन्तरात्चतुष्टयादिसङ्ख्यायुक्ताः।

कर्तव्यं वचनं तेषां समूहहितवादिनाम् ॥ १९५ ॥

सर्वैः समुदायिभिरिति शेषः ॥ १९५ ॥

योऽयं ब्राह्मणानां समूहविधिरुक्तः —

**श्रेणिनैगमपाषण्डिगणानामप्ययं विधिः ।**
**भेदं चैषां नृपो रक्षेत् पूर्ववृत्तिं च पालयेत् ॥ १९६ ॥**

कर्मकरादिशिल्पिसमूहः श्रेणिः । सार्थवाहादिसमूहो नैगमः । गुग्गुलिकादिसमुदायः पाषण्डाः । वणिक्समूहो गणः, हस्त्यारोहादिसमूह इत्यन्ये । पूगादिलक्षणार्थो वा गणशब्दः । तथाच नारदः —

"पाषण्डनैगमश्रेणिपूगव्रातगणादिषु ।
संरक्षेत् समयं राजा दुर्गे जनपदे तथा ॥"

इति । नैगमश्चात्र ब्राह्मणसमूहः । पूगो ग्रामेयकादिसमूहः । शस्त्रकर्तृसमूहो व्रातः । किञ्च भेदश्चैषामन्योन्यं समुदायिनां वा राज्ञा रक्षणीयः । चशब्दादन्यसङ्घातराजादिविरोधिव्यवहारश्च । तथाच नारदः —

"प्रतिकूलं च यद् राज्ञः प्रकृत्यवमतं च यत् ।
बाधकं च यदर्थानां तत् तेभ्यो विनिवर्तयेत् ॥
मिथः सङ्घातकरणमहिते शस्त्रधारणम् ।
परस्परोपतापं च तेभ्यो राजा निवर्तयेत् ॥"

इत्यादिकान् विरोधान् नृपः प्रतिकुर्यात् । पूर्वकल्पितां च धर्माविरोधिनीं वृत्तिं पालयेत् । चशब्दात् स्वयं च वर्धयेदित्यभिप्रायः ॥ १९६ ॥

इति संविद्व्यतिक्रमप्रकरणम् ।

---

अथ वेतनादानप्रकरणम् ।

परिभाषाप्रसङ्गेन स्वामिकर्मकरयोः परिभाषानुसारिव्यवहारव्यभिचारे विनयं वक्तुमाह—

**गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत् ।**
**अगृहीते समं दाप्यो भृत्यैः पाल्य उपस्करः ॥ १९७ ॥**

गृहीत्वा वेतनं कर्म तुल्यं न कुर्यात्, ततो गृहीतवेतनो द्विगुणमावहेद् दद्यादित्यर्थः । अगृहीते तु वेतने समं यावत् पारिभाषिकं वेतनं दत्त्वा कर्म कार्यं कारयितव्यम् । सर्वकर्मकरैश्चात्तवेतनैरुपस्करः समर्पितो यः कर्मकरणार्थं, स पालनीयः । तथाच नारदः —

---

१ 'यद् परिभाषित' ग. पाठ.

"कर्मोपकरणं चैषां क्रियां प्रति यदर्पितम् ।
आप्तभावेन तत् पाल्यं न जिह्मेन कथञ्चन ॥"

तथा —

"कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात् ।
भृतिं गृहीत्वाकुर्वाणो द्विगुणां भृतिमावहेत् ॥"

इति ॥ १९७ ॥

अपरिभाष्य वेतनं कर्मणि कृते यत्परिभाषितत्वाभावेन स्वामी न किञ्चिद् दातुमिच्छेत् तत्र कथमित्यपेक्षित आह —

**दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत् स महीभृता ॥ १९८ ॥**

स्वयं च न दद्यादिति शेषः । अपरिभाष्य वाणिज्यं पाशुपाल्यं कृषिं वा यः करोति तस्य तदुत्पन्नोपचयदशमभागभाक्त्वमित्यवसेयम् ॥ १९८ ॥

यथा स्वामिना निर्दिष्टं कर्मकरः —

**देशं कालं च योऽतीयात् कर्म कुर्याच्च योऽन्यथा ।
तत्र स्यात् स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥ १९९ ॥**

स्वाम्युक्तदेशकालादिविपर्ययेणान्यथा वा कर्मणि कृते भृतिदानं प्रति स्वामिनः स्वेच्छा । विनयातिरेकाच्च कर्मकरैरधिके कर्मणि कृते स्वामिना स्वेच्छयैवाधिकं देयमित्यवसेयम् ॥ १९९ ॥

असमाप्तकर्मत्यागे तु वेतनहानिप्रसक्तेराह —

**यो यावत् कुरुते कर्म तावत् तस्य तु वेतनम् ।
उभयोरप्यशाठ्यं चेच्छाठ्ये कुर्याद् यथाकृतम् ॥ २०० ॥**

*यथेच्छयेत्यर्थः । स्वाम्यपि शाठ्येनाकारयन् यथाकृतं वेतनं दाप्य* स्मृत्यन्तरानुसारात् ॥ २०० ॥

शाठ्येनैव च —

**अराजदैविकान्नष्टं भाण्डं दाप्यस्तु वाहकः ।
प्रस्थानविघ्नकर्ता च प्रदाप्यो द्विगुणां भृतिम् ॥ २०१ ॥**

कर्मकरवच स्वाम्यपि —

**प्रक्रान्ते सप्तमं भागं चतुर्थं पथि सन्त्यजेत् ।**
**भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च ॥ २०२ ॥**

प्रक्रान्तादिसप्तमभागादिक्रमेण त्याजकः स्वाम्यपि कर्मकरेभ्यो दाप्य.। स्पष्टमन्यत् ॥ २०२ ॥

इति वेतनादानप्रकरणम् ।

---

अथ द्यूतसमाह्वयप्रकरणम् ।

विसंवादप्रसङ्गेनाखिलविसंवादैककारणभूत द्यूतसमाह्वयव्यवहारमाह

**गलत्सभिकवृद्धिस्तु सभिकः पञ्चकं शतम् ।**
**गृह्णीयाद् धूर्तकितवादितराद् दशकं शतम् ॥ २०३ ॥**

तुशब्दोऽवधारणार्थः । गलत्सभिकवृद्धिरेव सभिकस्य, नान्यदपि स्वपरिभाषितमुखपट्टादीत्यभिप्रायः । गलितं निर्गलितं यत् सभिकहस्तात् पराजितानां देवनार्थं द्रव्यं, यच्च द्यूतोपकरणमक्षादि तद् गलत्सभिकं द्रव्यम् । तदर्था वृद्धिर्गलत्सभिकवृद्धिः । तां सभिको द्यूतसभायोजको धूर्तमण्डलाविरतिर्गृह्णीयात् । कियन्ति । पञ्चकं शतम् । धूर्तकितवाज्जेतुः द्यूतोपकरणनिमित्तम् । इतरात् पराजितात् प्रयुक्तस्वद्रव्यनिमित्तं दशकं शतमित्यर्थः ॥

स्वार्थहर्तेरेव च राज्ञा —

**स सम्यक् पालितो दद्याद् राज्ञे भागं यथाकृतम् ।**
**जितमुद्ग्राहयेज्जेत्रे दद्यात् सत्यवचाः क्षमी ॥ २०४ ॥**

यथाकृतं यथापरिभाषितं यथा वा स्मृत्यन्तरे निरूपितमित्यर्थः । तद् यथा बृहस्पतिः —

'राजवृद्धिः सकितवात् सभिकाद् दशकं शतम् ।
यथासमयं वा स्याद्'

इति । किञ्च जितं यत् कितवैः, तत् पराजितेभ्यः सभिक उद्ग्राहयेत् । जेत्रे च येन जितं तस्मै सभिक एव सत्यवचनो भूत्वाविसंवादेन क्षमी चानुतापवान् पुनर्दद्यादित्यवसेयम् ॥ २०४ ॥

यःप्रहृत एव —

**प्राप्ते नृपतिभागे तु प्रसिद्धे धूर्तमण्डले ।**
**जितं ससभिके स्थाने दापयेदन्यथा न तु ॥ २०५॥**

किंच —

**द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि ।**
**राज्ञा सचिह्ना निर्वास्याः कूटाक्षोपधिदेविनः ॥ २०६ ॥**

स्पष्टार्थौ श्लोकौ । नन्वेतद् द्यूतं स्वयम्भुवा निषिद्ध—

"प्रकाशमेतत् तास्कर्यं यद् देवनसमाह्वयम्"

इति । तथा चोक्तं —

"प्रच्छन्नं वा प्रकाशं वा द्यूतं राष्ट्रे निवारयेद्"

इति च । वेदेऽपि "अक्षैर्मा दीव्यः" इति प्रतिषेधः । सत्यम् । प्रतिषेधातिक्रमेण प्रवृत्तौ श्येनादिवदयं विधिरित्यविरोधः । मानवस्तु दण्डविधिर्धर्मविरोधितया नानामुखत्वेन वेति ॥ २०६ ॥

प्रयोजनान्तरापेक्षया तु —

**द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।**
**एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥ २०७ ॥**

एकमुखमेकमार्गम् एकस्मिन् प्रदेशे राजकीयचारपुरुषाधिष्ठित तस्करादिप्रजाकण्टकपरिज्ञानार्थमधर्मरूपमपि धर्मान्तरोपायतया महतेऽभ्युदयाय सम्पद्यत इति । अतः कार्यमेवेत्यभिप्रायः । ये चाखिलस्वधर्मत्यागेनापद्यपि द्यूतैकनिरताः तद्विषयतया स्वायम्भुवे दण्डादिवचनान्यवसेयानि । एतेन पाषण्डादिधर्मो व्याख्यातः । यश्चायमक्षाद्यप्राणिदेवने द्यूताख्ये विधिरुक्तः, समाह्वयसञ्ज्ञकेऽपि कुक्कुटमेषादिभिः सपणप्राणिद्यूतेऽयमेव विधिर्ज्ञेयः सभिकाधीनत्वराजवृद्धिदानादिक इत्यभिप्रायः ॥ २०७ ॥

इति द्यूतसमाह्वयप्रकरणम् ।

## अथ वाक्पारुष्यप्रकरणम् ।

प्रायेण द्यूतप्रभवत्वाद् वाग्दण्डपारुष्ययोर्विनाशकारणत्वसामान्याद्वा द्यूतव्यवहारानन्तरमारम्भ । तत्रापि दण्डपारुष्यस्यापि कारणभूतत्वाद् वाक्पारुष्यमेव तावदुच्यते —

**सत्यासत्यान्यथास्तोत्रैर्हीनाङ्गेन्द्रियरोगिणाम् ।**
**क्षेपं करोति चेद् दण्ड्यः पणानर्धत्रयोदश ॥ २०८ ॥**

हीनाङ्गाः खञ्जादयः । हीनेन्द्रियाः काणादयः । कुष्ठाद्यभिभूता रोगिणः । तेषां यद्यनपराधिनामेव चापलाद् विद्यमानेन्द्रियवैकल्यादिना

१ 'न ॥' ग पाठ.

सत्येनैव दुष्टया वाचा क्षेपं कुर्यात्, असत्येनापि हे काण! इत्यकाणमेवाधिक्षिपेत् । अन्यथास्तोत्रेण वा सातिशयस्तुतिपदैः प्रसिद्धं मूर्खं हे चतुर्वेदिन्, इत्येवं वदन् अर्धत्रयोदशपणान् राजावेदने कृते दण्ड्यः। स्मृत्यन्तराच्च तस्यापि प्रसादनं कार्यम् ॥ २०८॥

राजावेदन एव च —

**अभिगन्तासि भगिनीं मातरं वा तवेति हि ।**
**शपन्तं दापयेद् राजा पञ्चविंशतिकं दमम् ॥ २०९॥**

अयं च सवर्णानां समानगुणानां च दण्डकल्पः ॥ २०९ ॥

गुणवर्णवैषम्ये पुन —

**अर्धोऽधमेषु द्विगुणः परस्त्रीपूत्तमेषु च ।**
**दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरम् ॥ २१० ॥**

निरूप्येति शेषः । उक्तदण्डादर्धत्रयोदशपणावधिकाद् वर्णगुणाद्यधमेष्वर्धदण्डः । द्विगुणं च परस्त्रीषु । परशब्द उत्कृष्टार्थः । परैरुत्कृष्टैः गुणतो वर्णतो वा परिणीताः परस्त्रियः, तास्वधिक्षिप्तासु । उत्तमेषु च गुणवर्णादिभिः पुरुषेषु स्त्रीषु वा । अर्धवचनं द्विगुणवचनं चोभयमपि यथार्हदण्डोपलक्षणार्थमित्येतद् दर्शयति । दण्डप्रणयनं कार्यमिति न्यूनतयाधिक्येन वा यथार्हं वर्णजात्युत्तराधरमालोच्येत्यभिप्रायः। जातिशब्दश्च जन्मनिमित्तत्वाद् वयोवचनतया गुणलक्षणार्थोऽवसेयः ॥ २१० ॥

एतदेवोदाहरणेन स्पष्टयति —

**प्रतिलोमापवादेषु चतुस्त्रिद्विगुणा दमाः ।**
**वर्णानामानुलोम्येन तस्मादेवार्धहानतः ॥ २११ ॥**

वर्णान्त्याः शूद्राः । तेषां प्रतिलोमापवादे ब्राह्मणादिक्रमेणोक्तदण्डस्य चतुर्गुणादिकल्पनम् । एवं वैश्यक्षत्रियानुलोमान्तरप्रभवयोर्गुणाद्युत्कर्षेऽपि योज्यम् । आनुलोम्येन तु तस्मादेवार्धहानतः उक्तदण्डादर्धापचयेन । शूद्रापवादे अर्धदण्डो वैश्यस्य, पादः क्षत्रियस्य, अर्धपादो ब्राह्मणस्य । एवं गुणाद्यानुलोम्येऽपि योज्यम् ॥ २११ ॥

---

१. 'समव' क, घ. पाठ.

वधप्रतिज्ञया तु वाक्पारुष्ये —

**बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः।**
**शत्यस्तदर्धिकः पादनासाकर्णकरादिषु ॥ २१२ ॥**

बाह्वादिच्छेदस्ते मया कर्तव्य इत्येवं तथाकरणसमर्थस्य ब्रुवतः शत्यो दमः कार्यः। शतेनाभिनिर्वृत्तः शत्यः। शतं दण्ड्य इत्यर्थ। पादादिच्छेदनप्रतिज्ञायां तु ततोऽर्धं, पञ्चाशदित्यर्थ। आदिशब्दश्च दण्डपारुष्योक्तदन्तभङ्गाद्यर्थः। ऊर्वस्थि सक्थिरुच्यते। स्पष्टमन्यत् ॥ २१२ ॥

प्रागुक्तं शक्तसम्बन्धितया बाह्वादिच्छेदवाक्यम् —

**अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश।**
**तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥ २१३ ॥**

वाङ्मात्रेणापि वदतः कर्तुमशक्तस्य दशपणो दण्डः। शक्तस्तु प्रागुक्तदण्डं दाप्यः। त्रासापनोदनाय च समर्थं क्षेमाय प्रतिभुवं दाप्य ॥२१३॥

ब्रह्महा गोघ्नो वा त्वमित्येवमादिके क्षेपे —

**पतनीयकृते क्षेपे दण्ड्यो मध्यमसाहसम्।**
**उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥ २१४ ॥**

तथा —

**त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः।**
**मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥ २१५ ॥**

नृपग्रहणमाचार्यपितृश्रोत्रियादीनामपि सामान्याल्लक्षणार्थम्। पूगशब्दश्चात्र गणमात्रवचनः। ततश्च जातिपूगानां जातिमतां गणानां क्षत्रियादिसमुदायानामित्यर्थ। स्पष्टमन्यत् ॥ २१५ ॥

इति वाक्पारुष्यप्रकरणम्।

---

अथ दण्डपारुष्यप्रकरणम्।

वाक्पारुष्यपूर्वकत्वाद् दण्डपारुष्यस्यानन्तरमारम्भ। पाण्यादिनाभिघातादिकं दण्डपारुष्यम्। तत्र निर्जनेऽभिहत्य न मयायमभिहत इत्येवं मिथ्यावादित्वे दौष्टयातिशयाद्वा क्षतमात्मन कृत्वा निर्दोषजनाध्यारोपे कथं स्यादित्यपेक्षित आह —

**असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च।**
**द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृताद् भयात् ॥ २१६ ॥**

असाक्षिकेऽभिहते क्षतादिभिश्चिह्नैस्तद्व्यभिचारे वा कूटचिह्नकारिदुष्टपुरुषभयाद् व्यवहार एव प्रागुक्तन्यायेन चतुष्पाद्युक्त्यागमानुसारेणैव विद्वज्जनसमक्षं स्वयं वा राज्ञा द्रष्टव्यः। अयं च सर्वव्यवहारपदसाधारण श्लोकः कार्यगौरवप्रतिपत्त्यर्थमिहाम्नात इत्यवसेयम्॥ २१६॥

किञ्च—

**यत्र नोक्तो दमः सर्वैः प्रमादेन महात्मभिः।**
**तत्र कार्यं परिज्ञाय कर्तव्यं दण्डधारणम्॥ २१७॥**

नानभिधानभ्रान्त्यानध्यवसाय कार्य, किं तर्हि उक्तमनुक्तं वा द्वयोर्गुणादिभिरनुबन्धादिभिश्च स्वरूपमालोच्य पीडानुसारेण सर्वत्र दण्डमानकर्तव्यताध्यवसानमित्यभिप्राय॥ २१७॥

एतदेवोदाहरणमात्रतया प्रपञ्चयति—

**भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः।**
**अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृतः॥ २१८॥**

मेध्यत्वेऽपि भस्मकर्दमधूलिप्रक्षेपणे निर्दोषस्य कृते दशपणो दण्डः स्मृत इत्यल्पोऽपि स्मरणानुसारादविरुद्ध इत्यवसेयम्। अमेध्यादिस्पर्शे तु ततो द्विगुणः विंशतिपण इत्यर्थः। निष्ठ्यूतग्रहणं निष्ठ्यूतसदृशामेध्यस्य प्रतिपत्त्यर्थम्। तथाच मूत्रपुरीषादौ दण्डातिरेकसिद्धिः॥ २१८॥

यथोक्तदुक्त—

**समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च।**
**हीनेष्वर्धदमो मोहमदादिभिरदण्डनम्॥ २१९॥**

कृतव्याख्यानमेतत्॥ २१९॥

अयं चान्यो विशेष—

**विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु।**
**उद्गूर्णे प्रथमो दण्डः स्पर्शने तु तदर्धिकः॥ २२०॥**

उद्गूर्याेनिपाते प्रथमसाहसो दण्डः । प्रहारायोद्गूरणेनैव विस्रम्भेणाब्राह्मणस्य ब्राह्मणशरीरस्पर्शनेऽर्धदण्डः । स्पष्टमन्यत् ॥ २२० ॥

अनुत्कृष्टविपर्यत्वे तु —

**उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।**
**परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः ॥ २२१ ॥**

तुशब्दः प्रत्येकमवधारणार्थः । हस्त एवोद्गूर्णे दशकः पाद एव विंशतिकः । तथाच समुच्चये समुच्चयसिद्धिः । एवमन्यत्रापि द्रष्टव्यम् । एतच्च सर्ववर्णानां तुल्यगुणादियोगे स्यात् । शस्त्रोद्गूरणे तु मध्यमसाहसो दण्डः ॥ २२१ ॥

जात्यादिसाम्य एव तु —

**पादकेशांशुककरालुञ्छनेषु पणान् दश ।**
**पीडाकर्षांशुकावेष्टय पादाध्यासे शतं दमः ॥ २२२ ॥**

पादकेशवस्त्राणामालुञ्छने अवधूनने साक्षेप दशपणो दण्डः स्यात् । पीडाकर्षांजनेन त्वावेष्ट्य ग्रीवादौ पादन्यासे शतं दण्ड्यः । आञ्जनं *ध्यामीकरणम् । पीडया कर्षणेनाञ्जनं पीडाकर्षाञ्जनम् । आञ्जनेन ध्यामीकरणेन त्वावेष्ट्य वशं नीत्वेत्यर्थः । स्पष्टमन्यत् ॥ २२२ ॥

साम्य एव —

**शोणितेन विना कुर्वन् दुःखं काष्ठादिभिर्नरः ।**
**द्वात्रिंशतं पणान् दण्ड्यो द्विगुणं दर्शनेऽसृजः ॥ २२३ ॥**

असृजो लोहितस्येत्यर्थः । स्पष्टमन्यत् ॥ २२३ ॥

निकृष्टविषयत्वे तु —

**करपाददन्तभङ्गे छेदने कर्णनासयोः ।**
**मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥ २२४ ॥**

* ध्यामीकरणं श्यामीकरणं मालिनीकरणमित्यर्थः । 'ध्यामं दमनके गन्धतृणे श्यामेऽभिधेयवत्' इति विश्वः ।

दुःखेऽथ शोणितोत्पादे शाखाङ्गच्छेदने तथा।
दण्डः क्षुद्रपशूनां स्याद् द्विपणप्रभृति क्रमात्॥ २३१॥

द्विगुण इति शेषः। शोणितोत्पादशाखाङ्गच्छेदनेषूत्तरोत्तरो द्विगुनः। शृङ्गकर्णपुच्छादीनि शाखाः। चक्षुरादीन्यङ्गानि। क्षुद्रपशवश्छागादयः। स्पष्टमन्यत्॥ २३१॥

परकीयानां तु—

लिङ्गस्यच्छेदने मृत्यौ मध्यमो मूल्यमेव च।
महापशूनामेतेषु स्थानेषु द्विगुणा दमाः॥ २३२॥

स्वकीये द्विपणादिमध्यमान्ता यथास्थानं दण्डाः, परकीये तु दण्डो मूल्य चेति योज्यम्। महापशवो गवादयः। तेषां प्रागुक्तशोणित-दुःखोत्पादादिषु स्थानेषु द्विपणाद्युक्तदण्डाद् द्विगुणा यथास्थानं दण्डाः कार्याः॥ २३२॥

आरामारोपितानां सपरिग्रहाणां —

प्ररोहशाखिकाशाखास्कन्धसर्वविदारणे।
उपजीव्यद्रुमाणां तु विंशतिद्विगुणा दमाः॥ २३३।

उपजीव्यद्रुमा आम्रादयः। तेषां प्ररोहच्छेदने विंशतिपणो दमः। शाखिकादिच्छेदनेषूत्तरोत्तरद्विगुणकल्पना। प्ररोहः पल्लवः। अल्पाः शाखाः शाखिकाः। स्पष्टमन्यत्॥ २३३॥

उपजीव्यानामेव च

चैत्यश्मशानसीमान्तपुण्यस्थाने नृपालये।
जातद्रुमाणां द्विगुणा दमा वृक्षे च विश्रुते॥ २३४॥

चातुर्थिकाद्यपनोदनसमर्थः पिप्पलादिवृक्षो विश्रुतः। स्पष्टम-न्यत्॥ २३४॥

[illegible] तु —

गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम्।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कृन्तने॥ २३५॥

गुल्मादीनामुक्तेषु चैत्यादिस्थानेषु जातानां कृन्तने प्रागुक्तप्ररोहादिक्रमेणैव स्मृतादेकगुणादर्धदण्डाः कल्प्याः । गुल्मं गुञ्जादि । गुच्छः कुन्दादि । क्षुपो जात्यादिविटपः । लता प्रसिद्धा । प्रताना वल्लरी । ग्राम्या ओषधयः । आरण्या वीरुधः ॥ २३५ ॥

इति दण्डपारुष्यप्रकरणम् ।

## अथ साहसप्रकरणम् ।

स्तेयमपि प्रसह्य कृतं साहसमेव यस्माद्, अतो नात्र स्तेयदण्डः । किं तर्हि —

**सामान्यप्रसभद्रव्यहरणात् साहसं स्मृतम् ।**
**तन्मूल्याद् द्विगुणो दण्डो निह्नवे तु चतुर्गुणः ॥ २३६ ॥**

सामान्यं द्रव्यं द्वयोर्यदन्यतरेण प्रसभं प्रसह्यान्यतरं परिभूयापह्रियते, तत् स्तेयमपि प्रसह्य हरणात् साहसमिति स्मृतं महर्षिभिर्यस्मात्, तस्मान्न तत्र स्तेयदण्डः । किं तर्हि अपहृतद्रव्यमूल्याद् द्विगुणं साहसिकदण्ड इत्यभिप्रायः । प्रसह्यापहृत्य निह्नवे कृते मूल्याच्चतुर्गुणं । सामान्यद्रव्यहरणं चोदाहरणार्थम् । अन्यदपि यत् प्रसह्य स्तेयमन्यद्वा क्रियते, तत् सर्वं साहसमेव । तथाच नारदः —

> "सहसा क्रियते कर्म यत्किञ्चिद् बलदर्पितैः ।
> तत् साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥"

इति ॥ २३६ ॥

अन्येनापि प्रयोक्तृतया —

**यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।**
**यस्त्वेवमुक्त्वाहं दाता कारयेत् स चतुर्गुणम् ॥ २३७ ॥**

पूर्वोक्ताद् द्विगुणं दण्डं कारयिता दाप्यः । यस्त्वेवमुक्त्वा कारयेत् 'क्रियतामिदं यद्यत्र कश्चिद् विरोधो भविष्यति, ततोऽहमेव निर्वहणं करिष्यामी'ति स चोक्तद्विगुणदण्डाच्चतुर्गुणं दण्ड्य इत्यवसेयम् ॥ २३७ ॥

साहसवत्त्वादेव च —

**अर्घ्याक्रोशातिक्रमकृद् भ्रातृभार्याप्रहारदः ।**
**सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकृत् ॥ २३८ ॥**

**दुःखेऽथ शोणितोत्पादे शाखाङ्गच्छेदने तथा।**
**दण्डः क्षुद्रपशूनां स्याद् द्विपणप्रभृति क्रमात् ॥ २३१॥**

द्विगुण इति शेषः। शोणितोत्पादशाखाङ्गच्छेदनेपूत्तरोत्तरो द्विगुणः। शृङ्गकर्णपुच्छादीनि शाखाः। चक्षुरादीन्यङ्गानि। क्षुद्रपशवश्छागादयः। स्पष्टमन्यत् ॥ २३१ ॥

परकीयानां तु—

**लिङ्गस्यच्छेदने मृत्यौ मध्यमो मूल्यमेव च।**
**महापशूनामेतेषु स्थानेषु द्विगुणा दमाः ॥ २३२॥**

स्वकीये द्विपणादिमध्यमान्ता यथास्थानं दण्डाः, परकीये तु दण्डो मूल्यं चेति योज्यम्। महापशवो गवादयः। तेषां प्रागुक्तशोणितदुःखोत्पादादिषु स्थानेषु द्विपणाद्युक्तदण्डाद् द्विगुणा यथास्थानं दण्डाः कार्याः॥ २३२ ॥

आरामारोपितानां सपरिग्रहाणां —

**प्ररोहशाखिकाशाखास्कन्धसर्वविदारणे।**
**उपजीव्यद्रुमाणां तु विंशतिर्द्विगुणा दमाः ॥ २३३ ॥**

उपजीव्यद्रुमा आम्रादयः। तेषां प्ररोहच्छेदने विंशतिपणो दमः। शाखिकादिच्छेदनेपूत्तरोत्तरद्विगुणकल्पना। प्ररोहः पल्लवः। अल्पाः शाखाः शाखिकाः। स्पष्टमन्यत् ॥ २३३ ॥

उपजीव्यानामेव च —

**चैत्यश्मशानसीमान्तपुण्यस्थाने नृपालये।**
**जातद्रुमाणां द्विगुणा दमा वृक्षे च विश्रुते ॥ २३४ ।**

चातुर्थिकाद्यपनोदनसमर्थः पिप्पलादिवृक्षो विश्रुतः। स्पष्टमन्यत् ॥ २३४ ॥

चैत्यादिजातानामेव तु —

**गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम्।**
**पूर्वस्मृतादर्धदण्डः [illegible]नेषूक्तेषु कृन्तने ॥ २३५ ॥**

गुल्मादीनामुक्तेषु चैत्यादिस्थानेषु जातानां कृन्तने प्रागुक्तप्ररोहादिक्रमेणैव स्मृतादेकगुणादर्धदण्डाः कल्प्याः । गुल्म. गुञ्जादि । गुच्छः कुन्दादि । क्षुपो जात्यादिविटपः । लता प्रसिद्धा । प्रताना वल्लरी । ग्राम्या ओषधयः । आरण्या वीरुधः ॥ २३५ ॥

इति दण्डपारुष्यप्रकरणम् ।

---

अथ साहसप्रकरणम् ।

स्तेयमपि प्रसह्य कृत साहसमेव यस्माद्, अतो नात्र स्तेयदण्ड । किं तर्हि —

**सामान्यप्रसभद्रव्यहरणात् साहसं स्मृतम् ।**
**तन्मूल्याद् द्विगुणो दण्डो निह्नवे तु चतुर्गुणः ॥ २३६ ॥**

सामान्यं द्रव्यं द्वयोर्यदन्यतरेण प्रसभ प्रसह्यान्यतर परिभूयापह्रियते, तत् स्तेयमपि प्रसह्य हरणात् साहसमिति स्मृत महर्षिभिर्यस्मात्, तस्मान्न तत्र स्तेयदण्डः । किं तर्हि अपहृतद्रव्यमूल्याद् द्विगुण. साहसिकदण्ड इत्यभिप्रायः । प्रसह्यापहृत्य निह्नवे कृते मूल्याच्चतुर्गुण । सामान्यद्रव्यहरण चोदाहरणार्थम् । अन्यदपि यत् प्रसह्य स्तेयमन्यद्वा क्रियते, तत् सर्वं साहसमेव । तथाच नारदः —

"सहसा क्रियते कर्म यत्किञ्चिद् बलदर्पितैः ।
तत् साहसमिति प्रोक्त सहो बलमिहोच्यते ॥"

इति ॥ २३६ ॥

अन्येनापि प्रयोक्तृतया —

**यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।**
**यस्त्वेवमुक्त्वाहं दाता कारयेत् स चतुर्गुणम् ॥ २३७ ॥**

पूर्वोक्ताद् द्विगुण दण्ड कारयिता दाप्यः । यस्त्वेवमुक्त्वा कारयेत् 'क्रियतामिद यद्यत्र कश्चिद् विरोधो भविष्यति, ततोऽहमेव निर्वहणं करिष्यामी'ति स चोक्तद्विगुणदण्डाच्चतुर्गुण दण्ड्य इत्यवसेयम् ॥ २३७ ॥

साहसिकत्वादेव च —

**अर्घ्याक्रोशातिक्रमकृद् भ्रातृभार्याप्रहारदः ।**
**सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकृत् ॥ २३८ ॥**

साम्ये हि शस्त्रोद्गूरणमात्र एव मध्यमस्योक्तत्वान्निकृष्टविषयमेतदिति व्याख्येयम् । ऋज्वन्यत् ॥ २२४ ॥

तथा —

**चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।**
**कन्धराबाहुसक्थ्नां च भङ्ग उत्तमसाहसः ॥ २२५॥**

चेष्टादिप्रतिरोधकेऽभिघाते अक्ष्यादीन्द्रियाधिष्ठानप्रत्येकभेदने कन्धरादिभेदने चोत्तमसाहसो दण्डः । चेष्टानिरोधो मूर्छा । भोजननिरोधोऽत्यभिघाताद् भोक्तुमशक्तिः । वागुच्चारणाशक्तिर्वाग्रोधः । कन्धरा गलस्कन्धसञ्चारिणी सिरा । स्पष्टमन्यत् ॥ २२५ ॥

सर्वत्रैवास्मिन् प्रकरणे —

**एकं घ्नतां बहूनां तु यथोक्ताद् द्विगुणा दमाः ।**
**कलहापहृतं देयं दण्डश्च द्विगुणस्ततः ॥ २२६ ॥**

कलहापहृतादित्यर्थ । एतच्चाभिहतायैव देयं राजदण्डव्यतिरेकेणेत्यवसेयम् । तथाच बृहस्पतिः —

"दण्डस्त्वभिहतायैव दण्डपारुष्यकल्पितः ।
हृते तद्द्विगुणं चान्यद् राजदण्डस्ततोऽधिकः ॥"

इति । यत्तु नारदीयं —

"यमेव ह्यतिवर्तेरन्नेते सन्तं जनं नृपु ।
स एव विनयं कुर्यान्न तद्विनयभाङ् नृपः ॥"

इति । एतच्छूद्रविषयं द्रष्टव्यम् । शूद्राणां ह्युत्कृष्टापराधे राज्ञार्थदण्डो न ग्राह्यः । किं तर्हि । अनावेद्य स्वयमेवोत्कृष्टैरर्थदण्डेन विनयः कार्यः । राज्ञा त्वावेदिते वध एव । तथाचानन्तरमेवाह —

"मला ह्येते मनुष्येषु धनमेषां मलात्मकम् ।
अतस्तान् घातयेद् राजा नार्थदण्डेन दण्डयेत् ॥"

इति । स्पष्टमन्यत् ॥ २२६ ॥

किंच —

दुःखमुत्पादयेत् यस्तु स समुत्थानजं व्ययम् ।
दाप्यो दण्डं च यो यस्मिन् कलहे समुदाहृतः ॥

यो दुःखमुत्पादयेत्, तेन यावत् सम्यगस्योत्थानं निर्दुःखता भवति, तावद् यो व्ययः स समुत्थानजो व्ययः, स देयः । चकाराद् राजावेदनप्रवृत्त्युपक्षयश्च । राज्ञे च यथोदाहृतो दण्डः । स्वयं चाददद् राज्ञा दाप्यः । स्पष्टमन्यत् ॥ २२७ ॥

इदानीं दण्डपारुष्यसामान्यात् साहसव्यवहारमाह —

तारिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् दश ।
ब्राह्मणः प्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ २२८॥

तारिकस्य स्थलनिमित्तराजभाव्यशुल्कग्रहणे ब्राह्मणस्य दर्पाच्च योग्यप्रातिवेश्यब्राह्मणानिमन्त्रणे दशपणो दण्डः । ब्राह्मणग्रहणं च गुणार्थत्वात् सर्वत्रैवर्णिकार्थम् । दर्पकृतत्वाच्चैवमादेः साहसत्वम् ॥ २२८ ॥

दौर्गत्ये च —

अभिघाते तथा भेदे छेदे कुड्यावपातने ।
पणान् दाप्यः पञ्च दश विंशतिं तद्व्ययं तथा ॥ २२९॥

प्रातिवेशिकगृहाणां दौरात्म्यात् पाषाणादिनाभिघाते कृते पञ्च पणान् दाप्यः । तथा भेदेऽभिघातमन्त्रासाज्जाते दश पणान् दाप्यः । छेदने तु तद्द्वैधीभावे कुड्यावपातने वा त्रिंशतिम् । व्ययं तु व्यापन्नसमाधानार्थं गृहिणे दद्यात् सर्वत्र साहसिकत्वात् ॥ २२९ ॥

परकाय —

दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरं तथा ।
षोडशाद्ये पणान् दाप्यो द्वितीये मध्यमं दमम् ॥ २३० ॥

दुःखोत्पादि द्रव्यं कण्टकादि । प्राणहरं सर्पादि । स्पष्टमन्यत् ॥ २३० ॥

---

१ य समःसमानि —

सामन्तकुलिकादीनामपकारस्य कारकः ।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥ २३९ ॥

स्पष्टार्थौ श्लोकौ ॥ २३८, २३९ ॥

तथा —

स्वच्छन्दविधवागामी विक्रुष्टेऽनभिधावकः ।
अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशन् ॥ २४० ॥

शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥ २४१ ॥

वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकः ।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ २४२ ॥

पितापुत्रस्वसृभ्रातृदम्पत्याचार्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ २४३ ॥

एतदपि श्लोकचतुष्टयं स्पष्टार्थमेव ॥ २४०—२४३ ॥

प्रक्षालनार्थमर्पितं —

वसानस्त्रीन् पणान् दाप्यो रजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥ २४४ ॥

परांशुकमुत्कृष्टं वस्त्रम् । तत्परिधाने रजकस्य त्रिपणो दमः । एवं मध्यमाधमेषु पणापचयकल्पना । तथाभ्यासापेक्षया व्यतिरेककल्पना । विक्रयादिकरणेषु तु स्वामिनो मूल्यं, राज्ञे दण्डमेतावन्तमेव । भाण्डकेनार्पणमवक्रयः । आधमनमाधानम् । स्पष्टमन्यत् ॥ २४४ ॥

एवमादिव्यवहार[illegible] [illegible] [illegible] । [illegible] [illegible]
दाः —

पितापुत्रविरोधादौ साक्षिणां द्विशतो दमः ।
सान्तरश्च तयोर्यः स्यात् तस्याप्यष्टशतो दमः ॥ २४५ ॥

सर्वत्र पितापुत्रादिविरोधेऽनादेयव्यवहारे साक्षिणो द्रष्टारो वा ये स्युः, साक्षिवचनस्य लक्षणार्थत्वात्, तेषां द्विशतो दमः । यस्तु पितापुत्रादीनां सान्तरः विक्षेपकर स्यात्, तस्याप्यष्टशतम । यद्वा तयोरेव पितापुत्रयोर्यः सान्तर. स्याद् व्याजव्यवहर्तेत्यर्थः । द्वयमप्येतदविरोधाद् युक्तम् ॥ २४५ ॥

स्वाभिप्रेतव्यवहारसिद्ध्यर्थं —

**तुलाशासनमानानां कूटकृन्नाणकस्य च ।**
**एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥ २४६ ॥**

शासनग्रहणं सर्वलेख्यलक्षणार्थम् । मानानि सेतिकाप्रस्थप्रभृतीनि । स्पष्टमन्यत् ॥ २४६ ॥

जानन्नपि तु लोभादिना —

**अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ।**
**स नाणकपरीक्षी तु दाप्यः प्रथमसाहसम् ॥ २४७ ॥**

तुशब्दः सुवर्णमाणिक्यादावतिरिक्तदण्डज्ञापनार्थः ॥ २४७ ॥

अज्ञानाद् विपर्ययतो वा —

**भिषङ् मिथ्याचरन् दाप्यस्तिर्यक्षु प्रथमं दमम् ।**
**मानुषे मध्यमं दाप्य उत्तमं राजमानुषे ॥ २४८ ॥**

पशवो वर्णापशूदाश्च तिर्यञ्च. । विट्शूद्रा. मानुषम् । क्षत्रिया ब्राह्मणाश्च राजमानुषम् । एव मिथ्याचरतो वैद्यस्य प्रथमसाहसादयो दण्डा' । उदाहरणार्थं चैतत् । सर्वथा चिकित्स्यस्वरूप पीडाविशेष च वैद्यकृतमालोच्य यथार्हं दण्डकल्पनेत्यवसेयम् ॥ २४८ ॥

वर्णापार्थिकव्यवा (¹) तु —

**अवन्ध्यं यश्च बध्नाति वन्ध्यं यश्च प्रमुञ्चति ।**
**अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥ २४९ ॥**

अप्राप्तव्यवहारो व्यवहारेणास्पष्टीकृत । स्पष्टमन्यत् ॥ २४९ ॥

---

१ 'त' क पाठ.

अकूटेनैव कौशलात्—

मानेन तुलया वापि योऽंशमष्टमकं हरेत् ।
दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् ॥

एतदपि स्तेयद्रव्यसारतापेक्षया व्यवस्थापनीयम् । स्पष्टमन्यत् ॥

वाहस्यादिना धेतुर्भ्रम चिर्तापुं —

भेषजस्नेहलवणगन्धधान्यगुलादिषु ।
पण्येषु हीनं क्षिपतः पणान् दाप्यस्तु षोडश ॥

हीनं हीनमूल्यम् । ऋज्वन्यत् ॥ २५१ ॥

अतः पण्यस्वरूपासत्त्वमभिप्रेत्य —

मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम् ।
अजातेर्जातिकरणाद् विक्रयेऽष्टगुणो दमः ॥ २५२ ॥

मृदादीनामजात्यं जात्यमिति कृत्वा विक्रीणन्नुक्तषोडशपणादष्टगुण दण्ड्यः । स्पष्टमन्यत् ॥ २५२ ॥

यदि तु समुद्गकादस्य दर्शयित्वा समुद्गकान्तरपरिवर्तनेन कर्पूरादिसारद्रव्यं कृत्रिमकरणेन वा वाऽऽधानं विक्रयं वा कुर्यात्, तस्यापि व्याजव्यवहारेण —

समुद्गपरिवर्तं च सारभाण्डं च कृत्रिमम् ।
आधानं विक्रयं वापि नयतो दण्डकल्पना ॥ २५३ ॥

उक्तार्थः श्लोकः ॥ २५३ ॥

किं समस्तेषु दण्डकल्पना । नेत्याह —

भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते ।
द्विपणे द्विशतो दण्डो मूल्यवृद्धौ तु वृद्धिमान् ॥ २५४ ॥

अनिर्दिष्टविषये तु द्रव्ये मूल्यानुसारिणी दण्डकल्पनेत्यभिप्रायः ॥ २५४ ॥

---

१ 'अपमनम्' इति ग्रन्थान्तरे पाठ

एवं तावत् प्रत्येकव्यतिक्रमेऽनुशासनमुक्तम् । इदानीं कारुादीनां सम्भूयव्यतिक्रमेऽनुशासनमाह —

**सम्भूय कुर्वतामर्घं साबाधं कारुशिल्पिनाम् ।**
**अर्घस्य हानौ वृद्धौ वा साहस्रो दण्ड उच्यते ॥ २५५ ॥**

सम्भूयैकमत्येन कारुशिल्पिनां साबाधं पीडाकरमन्यशिल्पिजनस्य तन्निष्पादितद्रव्यस्य वा कुर्वतां कार्षापणसहस्रं दण्डः शिल्पार्घस्य हानौ वृद्धौ वा कर्तव्यः । ये हि भाजनादीनि द्रव्याणि स्वयमेव कृत्वा विक्रीणन्ति, ते शिल्पिनः कांस्यकारादयः । ये तु परकीयान्येव गृहादीनि निष्पादयन्ति, ते कारवः । तेषामागन्तुकशिल्पिजनस्यानवकाशार्थं कारयितृजनार्थितातिशयाद्वा अर्घस्य हानिं वृद्धिं वा यदा कुर्युः, तदायं दण्ड इत्यवसेयम् ॥ २५५ ॥

उक्तादेव हेतोः —

**सम्भूय वणिजां पण्यमनर्घेणोपरुन्धताम् ।**
**विक्रीणतां वा विहितो दण्ड उत्तमसाहसः ॥ २५६ ॥**

केन तर्ह्यर्घेण पण्यानां विक्रय इति । उच्यते —

**राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः ।**
**क्रयो वा**

कार्य इति शेषः ।

यथासौ राजकुलाधिष्ठितनिपुणवणिग्भिर्निरूपितो [1] नीतानां पुनर्विक्रयः तस्मात्, यस्माच्च —

**विक्रयो वापि वणिजां लाभतः स्मृतः ॥**

स्मृत इति वचनाल्लाभेनापि विक्रयो धर्म इति ज्ञायते ॥ २५७ ॥

लाभकल्पना तु वणिजां किं यदृच्छयैव । नेत्युच्यते कथं तर्हि

**स्वदेशपण्ये तु शतं वणिग् गृह्णीत पञ्चकम् ।**
**दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी ॥ २५८ ॥**

यो यस्य पण्यस्य सद्यः क्रयविक्रयी स तस्य दशकं पञ्चकं वा गृह्णीयादित्यर्थः ॥ २५८ ॥

[1] 'न विक्री' क पाठ

राज्ञा तु किं यदृच्छयैवार्घः स्थाप्यः । नेत्याह —

**पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम् ।**
**अर्घोऽनुग्रहकृत् कार्यः क्रेतुर्विक्रेतुरेव च ॥ २५९ ॥**

इति साहसप्रकरणम् ।

---

अथ विक्रीयासंप्रदानप्रकरणम् ।

क्रयविक्रयप्रसङ्गाद् विक्रीयासम्प्रदानमिदानीमाह —

**गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।**
**सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिशां गते ॥**

यदि दत्वान्यथामूल्यं क्रेता पण्यं न गृह्णीयात्, तदा क्रेतुरेव दोषः । अन्यथा तु विक्रेतुरेवेत्यभिप्रायः ॥ २६० ॥

गृहीतमूल्ये तु —

**राजदैवोपघातेन पण्ये दोषमुपागते ।**
**हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥ २६१ ॥**

ममेदं पण्यमर्पयेत्येवं याचितस्याप्यनर्पयतो यस्तत्रापचयः, स विक्रेतुरेवेत्युक्तम् । यदि तु राजकृताद् व्यासेधाद् दैविकाद्वा पर्जन्यादिदोषात् पण्यं दोषवत् स्यात्, तत्र या मूल्यहानिः, सा विक्रेतुरेवेत्यवसेयम् ॥ २६१ ॥

क्रेत्रा कूटसङ्कलितयैव हि —

**अन्यहस्ते तु विक्रीतं दुष्टं वादुष्टवद् यदि ।**
**विक्रीयते दमस्तत्र तन्मूल्याद् द्विगुणो भवेत् ॥ २६२ ॥**

यस्त्वन्यत्र क्रेत्रा कूटसङ्कलितयैव विक्रीतमपि पुनर्विक्रीणीयाद्, अदुष्टमिति वा कृत्वा दुष्टमपि, तस्य द्रव्यमूल्याद् द्विगुणो दण्डः । क्रेतुश्च द्रव्यमूल्यं वा प्रत्यर्पणीयम् । स्पष्टमन्यत् ॥ २६२ ॥

इदानीं क्रयविक्रयानुशयस्य विषयं प्रदर्शयति —

**क्षयं वृद्धिं च वणिजा पण्यानां तु विजानता ।**
**क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक् ॥**

चन्द्रगत्यादिवशेन पण्यानामर्घहानिर्वृद्धिर्वा भवति । तच्चैव वि-जानता वणिजा क्षय वृद्धि वा निरूप्याविरोधे सति क्रीत्वा विक्रीय वा नाशः कार्यः । कुर्वतो वा पण्यमूल्यषड्भागो राजदण्ड. । स्पष्ट-मन्यत् ॥ २६३ ॥

इति विक्रयासम्प्रदानप्रकरणम् ।

---

अथ सम्भूयसमुत्थानप्रकरणम् ।

वाणिज्यप्रसङ्गात् सम्भूयोत्थानमाह —

**समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।**
**लाभालाभौ यथाद्रव्यं यथा वा संविदाकृता ॥ २६४ ॥**

सर्वं लाभमेकीकृत्य यथाद्रव्य विभाग कार्य । लाभस्य मूल्यानुसारित्वात् कर्मापेक्षया वा यथा संवित् परिभाषा अन्योन्यमाकृता मर्यादा कृतेत्यर्थः । स्पष्टमन्यत् ॥ २६४ ॥

एव कृतसमयानां व्यवहारापत स्वाच्छन्द्यात् —

**प्रतिषिद्धमनादिष्टं प्रमादाद् यच्च नाशितम् ।**
**स तद् दद्याद् विप्लवाच्च रक्षिता दशमांशभाक् ॥**

प्रतिषिद्धमनादिष्टमन्यैर्वणिग्भिरननुष्ठितमिति शेष । किञ्च प्रमादाद् यच्च नाशित, स तद् दद्यात् । असानपेक्षयैव । विप्लवात् र-क्षिता दशमांशभाग् रक्षितद्रव्याद् रक्षिता लाभाद् दशमांश प्राप्नुयादि-त्यर्थं ॥ २६५ ॥

इदानीं राजभाव्य निरूपयति —

**अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत् ।**
**व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत् ॥ २६६ ॥**

योऽर्घो राज्ञा प्रक्षिप्तः स्थापित., तत एवार्घस्थापनाद् विनीताना विंशतिभागो राजभाव्य शुल्क विक्रेतृक्रेतृभ्यामुभाभ्यामन्योन्यमिच्छया-न्यतरेण वा देय । यत् राज्ञा व्यासिद्ध राजयोग्य च हस्त्यादिद्रव्य राजन्यनाविधानात्याय विक्री । तद् रा ।गामि स्यादित्यर्थमेयम् ॥

राजग्राह्यशुल्कनिमित्तं च पण्यद्रव्यादि —

**मिथ्या वदन् परीमाणं शुल्कस्थानादपाक्रमन्।**
**दाप्यस्त्वष्टगुणं यश्च स व्याजक्रयविक्रयी॥ २६७॥**

अथ किं सम्भूय व्यवहरतामन्यतरविपत्तौ तदीयं द्रव्यमन्यैर्वणिग्भिर्ग्रहीतव्यम्। नेत्युच्यते। किं तर्हि —

**देशान्तरगते प्रेते द्रव्यं दायादबान्धवाः।**
**ज्ञातयो वा हरेयुस्तदागतैस्तैर्विना नृपः॥ २६८॥**

देशान्तरगते प्रेते आयव्ययविशुद्धं तदीयमंशं यथाविभजमानं रिक्थिनोऽन्ये गृह्णीयुः, तदभावे तु राजा गृह्णीयात्। किमर्थं पुनरिदमुच्यते। ऋणदाने हि प्रतिषेधात्। तथाच गौतमः — "प्रातिभाव्यवणिक्शुल्कमद्यद्यूतदण्डा न पुत्रानध्यावहेयुरि"ति। ऋणवच्च धनसम्बन्धोऽपीति तदभावत्वमेव युक्तमित्याशङ्कानिवृत्त्यर्थमेतत्। स्पष्टमन्यत्॥ २६८॥

सम्भूय च प्रवृत्तानां स्वामिकर्मकरादीनामन्योन्यमयं विधिः —

**जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्।**
**अनेन विधिना ख्यातमृत्विक्कर्षककर्मिणाम्॥ २६९॥**

अन्योन्यं स्वामिकर्मकरसामाजिकादयो जिह्मं कुटिलं व्यभिचारिणं त्यजेयुः, तथा लाभशून्यम्। प्रवृत्तस्तु स्वयमशक्तोऽप्यन्येनाविरोधिना स्वकार्यं सामाजिकं कारयेत्। योऽयं सम्भूयोत्थाने विधिरुक्तः, अनेनैव विधिना निरूपितमृत्विगाद्यनुष्ठानमपि द्रष्टव्यम्। स्मृत्यन्तरात्तु वैशेषिकर्त्विगाद्यनुष्ठानप्रपञ्चोऽन्वेष्टव्यः। स्पष्टमन्यत्॥ २६९॥

इति सम्भूयसमुत्थानप्रकरणम्।

---

## अथ स्तेयप्रकरणम्।

यदि पुनः प्रसह्य अतिमन्दादिना सम्भूयादिव्यवहारादिना वा कृच्छ्रार्जितं द्रव्यं कश्चिदपहृत्य गच्छेत्, तत्र कथं ज्ञातव्यः, ज्ञातस्य वा किं तस्य कर्तव्यमित्यपेक्षिते स्तेनस्वरूपनिरूपणायाह —

**ग्राहकैर्गृह्यते चोरो लोप्त्रेणाथ पदेन वा।**
**पूर्वकर्मापराधाद्वा तथैवाशुद्धवासकः॥ २७०॥**

अपहृतद्रव्यस्वामिभिश्चोरग्रहणनियुक्तैर्वा ग्राहकैर्गृह्यते चोरः। अथवा लोप्त्रेण अपहृतद्रव्येण, अपहरणदेशाद्वा निपुणैरनुसरीयमानेन पदेन,

यद्वा पूर्वकर्मणा सम्भावितचौर्यापराधात्, तथान्यैरपि स्मृत्यन्तरोक्तचोरत्वप्रतिपादकैर्वक्ष्यमाणैरशुद्धवासकादिभिः । अशुद्धो वासो यस्यासावशुद्धवासकः कुतस्त्योऽयमित्यविज्ञायमानो लुब्धवेश्यादिगृहनिवासी ॥ २७० ॥

लोप्त्रादिवच —

अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ २७१ ॥
परद्रव्यगृहाणां च पृच्छका गूढचारिणः ।
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ २७२ ॥

प्रमाणान्तरमूलत्वादस्याः स्मृतेस्तदनुसारेणैव विविच्य व्याख्या कार्या । पदार्थास्तु निगदोक्ता एव ॥ २७१, २७२ ॥

उक्तन्यायानुसारेण च —

गृहीतः शङ्कया चौर्ये नात्मानं चेद् विशोधयेत् ।
दापयित्वा हृतं द्रव्यं चोरदण्डेन दण्डयेत् ॥ २७३ ॥

स्मृत्यन्तरानुसारेण यथार्हं दण्डकल्पना ॥ २७३ ॥

लोप्त्रादिभिश्चौर्ये स्पष्टीकृते —

चोरं प्रदाप्यापहृतं घातयेद् विविधैर्वधैः ।

स्मृत्यन्तरोक्तदण्डैः शारीरैश्च नेत्राद्युद्धारणलक्षणैः प्राणहरणशूलारोपणादिभिश्चेत्यभिप्रायः ।

एवमब्राह्मणम् । ब्राह्मणं तु कथं कुर्यात् —

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद् विप्रवासयेत् ॥ २७४ ॥

सचिह्नं श्वपदाद्यङ्कितम् । स्पष्टमन्यत् ॥ २७४ ॥

प्रयत्नेनान्विष्यमाणघातकचोराद्यनुपलब्धौ तु कथमिति —

घातितापहृते दोषो ग्रामभर्तुरनिर्गते ।

पदादौ प्रयातचिह्न इति शेषः ।

1 'द्व' ख. पाठ.

विवीतभर्तुस्तु पथि

विवीतादुपकण्ठ इति शेषः । तुशब्दोऽन्यस्यापि समर्थस्य यथासन्निधान दोषवत्त्वज्ञापनार्थः ।

चोरोद्धर्तुरवीतके ॥ २७५ ॥

पूर्वोक्ताद्यभावे चोरोद्धर्तुरेव दोषः । सर्वथा चापहृत द्रव्यं प्रयत्नेनान्विष्य राज्ञा लब्धव्यमित्यभिप्राय । यद्वा अपहृते द्रव्ये घातिते च सद्रव्यके चोरे द्रव्यानुपलब्धौ कस्य दोष इत्यपेक्षिते ग्रामभर्तुरनिर्गत इत्यादि समानम् ॥ २७५ ॥

असन्निहिते तु ग्रामभर्तरि —

स्वसीम्नि दद्याद् ग्रामस्तु पदं वा यत्र गच्छति ।
पञ्चग्रामी बहिः क्रोशाद् दशग्राम्यपि वा तथा ॥ २७६ ॥

स्वशब्दो धनज्ञात्यर्थः । यत्र द्विपदचतुष्पदाद्यनवरत सञ्चरति, सा स्वसीमा । स्पष्टमन्यत् ॥ २७६ ॥

चोरादविशेषे तु वधप्रकारमाह—

बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्यघातिनश्चैव शूलमारोपयेन्नरान् ॥ २७७ ॥

तथाशब्दः प्रकारार्थे । नरवचनमब्राह्मणार्थम् । स्पष्टमन्यत् ॥ २७७ ॥

द्रव्यादिविशेषापेक्षया तु—

उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ ।
कार्यौ द्वितीयेऽपराधे करपादैकहीनकौ ॥ २७८ ॥

उत्क्षेपकः पटाक्षेपकः । ग्रन्थिभेदको ग्रन्थिभेत्ता । तावुभावपि करसन्दंशहीनौ प्रथमेऽपराधे कार्यौ । करसन्दंशोऽङ्गुल्यः, तद्धीनौ यद्वा करसम्पुटः करसन्दंश., तद्धीनौ । अन्यतरहस्तच्छेदनमित्यर्थः । द्वितीयेऽपराधे त्वेको हस्तः पादश्च । स्पष्टमन्यत् ॥ २७८ ॥

यश्चायमुक्तः शारीरो दण्डः, यश्च स्मृत्यन्तरोक्तो धनदण्डः, तत्र सर्वत्र साधारणोऽयं न्यायबीजसंक्षेपः —

**क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः।**
**देशकालवयःशक्ति सञ्चिन्त्यं दण्डकर्मणि ॥ २७९ ॥**

अन्यत्रापीति शेषः ॥ २७९ ॥

किञ्च —

**भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्।**
**दत्त्वा चोरस्य हन्तुर्वा जानतो दण्ड उत्तमः ॥ २८० ॥**

चोरोऽयं साहसिको वा प्रसह्य हन्तीत्येवं जानतश्चोरसाहसिकयोर्भक्तादिदानं कुर्वतो दण्ड उत्तमसाहसः। स्पष्टमन्यत् ॥ २८० ॥

स्त्रीष्वदुष्टासु चोरादिषु —

**शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः।**
**उत्तमो वाधमो वापि पुरुषः स्त्रीप्रमापणे ॥ २८१ ॥**

ब्राह्मणस्त्रीशस्त्रावपातने गर्भस्य चाविशेषेण व्यापत्तावुत्तमो दण्डः कार्यः, वध इत्यर्थः। उत्तमो वा ब्राह्मणः, अधमो वा शूद्रादिः, अपिशब्दान्मध्यमोऽपि क्षत्रियादिः पुरुषः स्त्रीप्रमापणे वध्य एवेत्यभिप्रायः। तथाच कात्यायनः —

"गर्भस्य पातने स्तेनो ब्राह्मण्यां शस्त्रपातने।
अदुष्टां योषितं हत्वा हन्तव्यो ब्राह्मणोऽपि हि ॥"

इति ॥ २८१ ॥

स्तेयव्यतिरेकेण [illegible]

**विषप्रदां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम्।**
**सेतुभेदकरीं चाप्सु शिलां बद्ध्वा प्रवेशयेत् ॥ २८२ ॥**

औषधादिव्याजेन विषप्रदां स्त्रियम्। पत्युर्घातिनीं पुरुषं च। एवकारोऽन्यत्र स्त्रीवधाभावज्ञापनार्थः। गर्भाभावेऽपि विषादिमृत्युनिमित्तप्रयोक्त्री हन्तव्येत्यर्थः। पुरुषघ्नी साहसिकपरपुरुषप्रसङ्गान्निश्चयात् पुरुषमा-

